॥ श्रीजिनाय नमः ॥

—: श्रीवर्धमानसूरिविरचितं :—

# श्रीवासुपूज्यचरित्रम्



पण्डित हीरालाल हंसराजेन स्वकीय श्रीजैनभास्करोदयमुद्रणालये मुद्राप्य प्रसिद्धिं नीतम्

( सने १९३५ ) मूल्यम् रु. ४—०—० ( वीरसंवत् २४६२ )



शास्त्रविशारद जैनाचार्य्य श्रीविजयधर्मसूरिभ्यो नमः

। श्रीवर्धमानसूरि विरचितम् ।

# ॥ श्रीवासुपूज्य चरितम् ॥

## ॥ प्रथमः सर्गः ॥

अर्हन्तं नौमि नाभेयं कल्याणकलदं सताम् । रेजुराम्रदलानीव यत्कर्णनिकटे जटाः ॥ १ ॥ भक्तिरागभृतानन्त-भव्यस्वान्तस्थितेरिव । विद्रुमच्छायकायो ऽसौ वासुपूज्यः श्रियेऽस्तु वः ॥२॥ स्वार्थे ऽहं कमठात्कष्टं सेहे भोगी तु मत्कृते । तन्मान्यो ऽयमितीवासुं पार्श्वो मूर्ध्नावहन्मुदे ॥३॥ रणे ऽपि धीरा वीराः स्युर्महावीरस्त्वसौ यतः । देवीहावैर्जितो नेति यं स्तौतीन्द्रः स वो ऽवतात् ॥४॥ अन्यानपि जिनान्नौमि ध्यायामि श्रुतदेवताम् । प्रारब्धसिद्धिफलदाञ्श्रये कल्पतरू-न्गुरून् ॥५॥ सतामाह्लादनो धर्मः सर्वलोकोत्तरस्थितिः । जीयाज्जन्तुसमुद्धारव्यापारकचिरश्चिरम् ॥६॥ देयाद्धर्मः स वः कामान्कामधेनूरमूर्यतः । चनस्त्रः क्षीरधारन्ति वुद्धिश्रीवृद्धिसिद्धयः ।७। परोपकारिणां धुर्यो धर्म एवाश्रितेषु यः । ददाति

१ " कामधेनु॰ इति पाठः साधु प्रतिभाति.

निर्वृतिं स्वस्य सत्तायामपि निःस्पृहः ॥८॥ जयन्ति जगदुत्सङ्गरङ्गत्तुङ्गकीर्तयः । ते सन्तः सततं येषां धर्मे ऽस्मिन् रमते मतिः ॥९॥ चत्वारो ऽस्य सपर्यायाः पर्यायाः कृतिनां मताः । दानशीलतपोभावनामानः कामितप्रदाः ॥ १० ॥ ते तु भीमभवाम्भोधिसेतवः पुण्यहेतवः । बुद्धिमद्भिर्विबुध्यन्ते महतां चरितश्रुतेः ।११। अतः सत्पुरुषश्रेणिश्रवणामृतवर्षणम् । शर्मणः कार्मणं कर्ममालिन्यक्षालनक्षमम् ॥१२॥ वासवानां हि यः पूज्यो वासुपूज्य इति श्रुतः । तस्य तीर्थेशितुश्चारु चरितं रचयाम्यदः ॥१३॥ युग्मम् ॥ अस्ति स्वस्तिनिधि स्वर्णशैलवर्ण्यान्तरावनिः । जम्बूद्वीप इति द्वीपो लक्षयोजनविस्तृतः ।१४। यस्योत्तरकुरुस्थानश्चित्ररत्नमयो द्रुमः । जम्बूर्भवति मायूरच्छत्रं द्वीपजयोच्छ्रितम् ।१५। यो ऽनन्तप्रतिमो प्यत्र सर्वत्राप्रतिमः क्षितौ । अनादिनिधनो ऽप्युक्तः ससवर्पमयोवुधैः ॥१६॥ सोऽस्ति कङ्कणरूपेण लवणाम्बुधिना घृतः । द्विलक्षयोजनोन्मानो विस्तारेण निरन्तरम् ।१७। यो ऽन्तःकूटस्थचैत्येषु भक्त्या नित्यार्हतां पुरः । नृत्यत्यूर्मिभुजैर्नित्यं गायत्यूर्जितगर्जितैः ।१८। द्वीपो ऽस्ति परतस्तस्य धातकीखण्डसंज्ञकः । यः पृथुत्वे चतुर्लक्षयोजनानि समन्ततः १९ ख्यातो ऽस्मदभिधानेन द्वीपो ऽयमिति नृत्यते । यत्र रत्नमयैर्मेरुद्वयस्थैर्धातकीद्रुमैः ।२०। यश्चकास्ति चतुषष्ट्या विजयैः पदिकैरिव । चतुरङ्गबलद्यूतफलकं नयधर्मयोः ।२१। जनस्यान्तरषड्वैरिजेतुस्तेजोयशःश्रियाम् । यत्रार्काः कुन्डलायन्ते द्वादश द्वादशेन्दवः ।२२। विद्यते तस्य कालोदजलधिः परिधिस्थितः । विस्तृतः सर्वतो यो ऽष्टलक्षयोजनमानभृत् २३ आशापत्रेषु गीर्नित्यमनन्तानर्हतां गुणान् । लिखत्वितीव यो धत्ते मषीभावं निजाम्भसि ।२४। द्वीपो ऽस्ति परतस्तस्य श्रीपुष्करवराह्वयः । यो योजनानि विस्तारे लक्षाः षोडश लक्ष्यते ॥ २५ ॥ तस्य नामार्थमलर्थं प्रथयन्ति वरश्रियः ।

मधन्मधुपझङ्कारैः पुष्करैः पुष्कराश्रयाः ॥२६॥ तस्यार्धं वृत्तवान्भूभृद्भासते मानुषोत्तरः । निलार्हंद्वारुचैत्यानि यस्यास्ते
मुकुट स्फुटः ॥२७॥ तस्मादर्वाग्विभागे ऽस्ति स्वर्णाद्रिर्भूमिभूषणम् । यद्भासः केसरायन्ते गगने नीलनीरजे ॥ २८ ॥
ततः पूर्वविदेहाख्यं क्षेत्रं प्राच्यां प्रियं,सताम् । यत्रार्हद्वाक्सुधासेकाज्जायन्ते शिवशालयः ।२९। तत्र सीतासरिद्वीचिसिच्य-
मानवनावनिः । अस्ति विस्तारिमङ्गल्यो विजयो मङ्गलावती ॥ ३० ॥ विभावर्यामपि जना विभावर्याङ्ग-
भूषणैः । ध्वस्तध्वान्तभरा यत्र यान्ति प्रान्तरवर्त्मसु ।३१। इन्द्रनिलमयं दाम शून्ये ऽपि पतित पथि । भुजङ्गमभ्रमेणेव यत्र
नादीयते जनैः ।३२। तत्र पात्रं सुवर्णानां वर्णिन्यास्तिलकं भुवः । निःसपत्नत्नश्रीवरं रत्नपुरं पुरम् ।३३। सत्कुल्यामृतसि-
क्तानां यत्र भान्ति ध्वजाञ्चलाः । तीर्थेशवेश्मनां पुण्यद्रुमाणां पल्लवा इव ।३४। वपन्तो धार्मिकाः सारं यत्र क्षेत्रेषु सप्तसु ।
पुण्यधान्यैर्गरिष्ठं स्वं कोष्ठागारं सुबिभ्रति ।३५। यत्र स्त्रीवेणिवक्षोजवक्त्रेषु श्रीरहर्निशम् । वीरासिकुम्भीकुम्भाब्जवास-
सौख्येन खेलति ॥३६॥ धर्मेण स्वाजिता लक्ष्मीश्चापलं यद्गृहेषु यत् । कोटीध्वजाञ्चलव्याजात्तन्मूर्तमिव विक्ष्यते ॥३७॥
तस्मिन्पद्मोत्तरो राजा प्रजापालनलालसः । अभूदभूमिर्दोषाणां रोपाणामिव सन्मुनिः ।३८। अंह्रिहस्तास्यनेत्राणि नलि-
न्याभान्ययं दधौ । अतोऽस्य नलिनीगुल्म इत्याख्याभिदधे बुधैः ॥३९॥ स्वप्ने पद्मं महत्तस्मिन्गर्भस्थे ददृशे ऽम्बया ।
अतः सद्भिर्महापद्म इत्यस्य विदधे ऽभिधा ।४०। व्योममण्डलमालिन्यच्छलकज्जलमालिनः । बभौ छायेव यत्तेजःप्रदीपस्या-
रिदुर्यशः ॥४१॥ आपीय विशदं वैरिवनितानां स्मितामृतम् । उद्गारवद्यशोभारं यस्यासिः शाश्वतं व्यधात् ।४२। स देह-
द्युतिसंदोहसंदेहितविभूषणः । सभायां भूधनो ऽन्येद्युर्भद्रासनमभूषयत् ।४३। श्रीकेलिदीर्घिका संसद्य हंसकुलैरिव । रेजे

राजपदाम्भोजसेवाहेवाकिभिर्नृभिः ।४४। अमात्यान्तर्विनिर्यान्त्या सितया पलितच्छलात् । बुद्ध्या विमलबोधाढ्या रेजिरे तत्र मन्त्रिणः।४५। मुहुमकम्प्य मूर्धानं सभ्यैर्निबिडपूर्तये । क्षेप्यमाणानि कर्णेषु तत्र सूक्तान्यधुर्बुधाः ।४६। व्यवहारकृतस्तत्र देहार्चिर्याचकैरिव । रत्नैरन्योन्यसंघट्टवाचालैर्भूषिताः स्थिताः ॥४७॥ यत्सैन्यमोच्छलद्धुलीमये तिमिरसंचये । दधौ खद्योतपोतस्य द्युतिं प्रद्योतनः सदा ।४८। उदेष्यतः प्रतापाग्नेर्धूमदण्ड इवोन्मुखः । यदसिर्युधि शत्रुस्त्रीनेत्रैर्दृष्टो जलाविलैः ।४९। कर्पूरपूरवद्येषां यशो रोदःसमुद्गके । जज्ञे ऽरियशःकृष्णाङ्गारसङ्गाच्चिरं स्थिरम् ।५०। स्वाम्यादेशधनावेशरसलालसचातकाः । उन्मुखास्ते ऽपि भूपालास्तत्रतस्थुर्यथास्थिति ॥५१॥ चतुर्भिः कलापकम् ॥ तांश्च भूमिभुजः स्वौ च भुजौ पश्यन्मुहुर्मदात् । राजा पद्मोत्तरो हृष्यन्नुवाच सचिवेश्वरम् ॥५२॥ यदाक्रामति दिक्चक्रं भूशक्रो भुजविक्रमात् । तन्न चित्रं यतः सर्वबलेभ्यो दोर्बलं महत् ।५३। वदामीदमयुक्तं चेत्तन्नीतौ दक्ष शिक्षय । यन्मत्पितामहस्यापि सर्वशिक्षागुरुर्भवन् ॥ ५४ ॥ अथामात्यपतिर्दध्यौ नृपोऽयं भुजदुर्मदः । ततस्तत्त्वविदां द्वङ्किरुपहास्यं वदत्यदः ॥ ५५ ॥ नृपस्तं चिरमिलन्तश्चिन्तयन्तमभाषत । किं न मद्वचसां किंचिद्भवद्भिर्दत्तमुत्तरम् ॥५६॥ एवं निशम्य मन्त्रीन्दुर्जगाद नृपतिं प्रति । दन्तेन्दुद्युतिभिर्दूरान्नृणां मोहतमो हरन् ।५७। प्रभो ऽयुक्तं त्वयोक्तं यद्बलेभ्यो दोर्बलं महत् । तत्तु स्यात्सफलं येन तत्पुण्यं प्रयत्नं न किम् ॥५८॥ अथाह भूपो भूपानां शौर्यमेवार्थसाधकम् । तदादिशसि मन्त्रीन्द्र यत्पुण्यमिति किं नु तत् ॥५९॥ इत्युक्तिभाजि राजेन्द्रे मन्त्रीन्द्रो वदति स्म सः । प्राच्यधर्मपरीपाकः पुण्यमेवोच्यते ऽर्थकृत् ॥६०॥ अथापृच्छदतुच्छाशः पृथ्वीन्दुरिति मन्त्रिणम् । साक्षात्तेजो ऽर्थकृतावद्धर्मास्तित्वे तु का प्रमा ।६१। मुदे दुरितविच्छेद-

नायसभ्यस्य भूपतेः। ततः सुकृतसूचेव प्रत्यूचे सचिवेन वाक् ॥६२॥ राज्यं सुकृतहीनस्य तेजसा च बलेन च। अभोग-
सारं सारङ्गराजस्य क नु राजते॥६३॥ भूपेभ्यः शोभते भूरि धाम स्थाम च दन्तिनाम्। यदमीषाममी यानं जाने धर्मोऽत्र
कारणम् ॥६४॥ शक्तौ दीनो ऽकुलीनो ऽङ्गहीनो ऽपि नृपपुङ्गवैः। यत्पुण्यात्सन्नृपो ऽसेवि पुण्यं तेन प्रमीयते ॥ ६५ ॥
तथाहि विश्वहृद्ग्राहि महत्त्वद्योति विश्रुते। क्ष्माकेलिपद्मे पद्मायाः सद्म पद्मपुरं पुरम्॥६६॥ तत्र क्षत्रियसंग्रामसत्रधाम
भुवो विभुः। अभवद्भुवनाम्भोजतपनस्तपनाभिधः ॥६७॥ हस्तिरत्नं गृहीत्वात्र व्यवहारी धनावहः। कदाचिदाययौ
कृष्टो भूपभाग्यगुणैरिव ॥६८॥ भाग्याभोगेन भूपानां रत्नमेतीदृशं भृशम्। इति दक्षैस्तदा पुम्भिः ख्याते तत्कुम्भिगौरवे
॥ ६९ ॥ असामान्यो गुणैर्मान्यो ममायमिति तस्य सः। ययौ कुञ्जरराजस्य सम्मुखं राजकुञ्जरः ॥ ७० ॥ युग्मम् ॥
ननादाम्बुदनादेन प्रीतः प्रेक्ष्य नृपं द्विपः। नृपस्त्वपूरि रोमाञ्चैर्वंहूरी भूरिवाङ्कुरैः॥७१॥ वामं च दक्षिणं चाङ्गं शिरःक-
म्पनकैतवात्। मुहुरस्याद्भुतपश्यश्चैवेति ध्यायति स्म सः॥७२॥ द्रष्टुमैरावणमसौ तद्गुणग्रहधीरिव। उच्चैस्त्वांचु नभोग-
भगतो ऽब्द इव गर्जति ॥७३॥ इन्द्रेभस्पर्धया शङ्के यशोभिर्विशदीभवन्। इन्द्रतायोग्यभाग्यानामेवायं याति यानताम्
॥७४॥ इति ध्यायन्धराजानिः सम्मान्य व्यवहारिणम्। विधातुं दन्तिनो मूल्यं तद्विदः स समादिशत् ॥७५॥ त्रिभिर्वि-
शेषकम् ॥ निरीक्ष्य लक्षणान्यस्य द्विरदस्य विशारदाः। जगदीशं जगुर्लोलमौलयः पुलकाङ्किताः ॥७६॥ शास्त्रोक्तानाम-
दोषाणां सर्वसल्लक्षणस्पृशाम्। हस्ती दृष्टो ऽयमेवाद्य द्विरदानामुदाहृतिः॥७७॥ भूपस्य यस्य कस्यापि स्यादसौ द्वारभूष-
णम्। संसाधयति दुःसाधानप्यरीँल्लीलयैव सः ॥७८॥ पदं कृतयुगस्येव निरीतिः सुकृतैकभूः। एतद्दन्तिभृतो भूमिभर्तु-

ईशो ऽपि शोभते ॥७९॥स्वामिन्न स्यादमूल्यस्य मूल्यमस्य गजस्य तत् । ग्राह्यते यद्भणिग्याहग्देयं देव तदेव हि ॥८०॥
किं ते मूल्यं ददामीति राज्ञि प्रीते ऽथ पृच्छति । व्याहारि व्यवहारैकहारिणा व्यवहारिणा ॥८१॥ स्वामिन्विन्ध्याद्रिरा-
जस्य युवराज इव द्विपः । अत्युत्तमो ऽयं विख्यातः साम्प्रतं हस्तिबन्धिषु ॥८२॥ खदारिद्र्यद्रुमद्रोहकृते ऽसौ केन केन
न । महोपायसहस्रेण धर्तुमारभ्यताभितः॥८३॥वितन्वतीभिः साम्यं वा वैषम्यं वा किमप्ययम् । बद्धुं शेके न वारीभि-
र्नारीभिरिव संयमी ॥८४॥सम्यग्मत्वैनमग्राह्यं गन्धेभं गन्धवाहवत् ।अवल्यत विलक्षेण लक्षेण करिबन्धिनाम् ॥८५॥
अथाहमधिकोत्साहः सुखमशकुनव्रजैः । अस्य बन्धाय विन्ध्याद्रिं गत्वा वासमदापयम् ॥८६॥ कथं ग्राह्यः स हस्तीति
चिन्ताचकितचेतसः । मम प्रमोदरोमाञ्चप्रचयं रचयन्नथ॥८७॥मुक्तिस्पृहमसम्यक्त्वमिव मामेतदर्थिनम् । सतां प्रहसतां
चित्ते चमत्कारं प्रपञ्चयन् ॥८८॥ मृदुगर्जितवाद्येन मदषट्पदगीतिभिः । श्रियमग्रे निजक्रीडानर्तकीमिव नर्तयन् ॥८९॥
वनदेवीभिरप्येष वीक्ष्यमाणः कुतूहलात् । शनैर्वनान्ममागारमागान्नागाधिपः स्वयम् ॥ चतुर्भिः कलापकम् ॥ ९० ॥
आश्चर्योन्मत्तचित्तेन मयोत्थाय रयादथ । असावपूजि प्रत्यक्षं स्वभाग्यस्येव दैवतम् ॥ ९१ ॥ नमतो मम
तोषेण सुप्रसन्नः करी करम् । सुस्वामीव दधावेष पृष्ठे कमलकोमलम् ॥ ९२ ॥ भूभृन्नीं विरागीव भूभृतामवनीं
प्रति । संचचालाथ संज्ञाप्य हस्ती हस्तेन मामसौ॥९३॥अथैनं पृथिवीलीलाचारिणं वारणेश्वरम् । वयं प्रीत्यान्वगच्छाम
विवेकमिव सद्गुणाः ॥९४॥दूरतो राजधानीनामुपकण्ठमपि त्यजन् । क्वापि भूभृतां सङ्गं लङ्घमानो बलादपि ॥९५॥
मयानुगम्यमानो ऽयमेत्य निलयघाणकः । इह स्वगृहवत्स्थौ यूथनाथो ऽद्य सुस्थितः ॥९६॥ युग्मम् ॥ रक्ता कोपाग्नि-

तप्तैव जज्ञे यान्येषु राजसु । प्रमोददुग्धधौतेव धवला त्वयि सास्य दृक् ॥९७॥तन्नूनमयमानिन्ये त्वद्भाग्यैरेव वारणः ।
ममैतदनुगामित्वान्मद्भाग्यैरसि दर्शितः॥९८॥ततः स्वसु कृतक्रोल गृह्णाणेन मम विभो । अहं कृतार्थ एवास्य भवद्भालनि-
भालनात् ॥९९॥ अथ वाग्भिः सुधापानपुण्यैः कर्णेन्द्रियश्रियः । प्रीतो महीन्दुर्मन्त्रीन्द्रमुखसंमुखदृग्जगौ ॥ १०० ॥
अमूल्यमेनमानिन्ये चन्येभमगमेकतः । अमूल्यमेकतो ऽचोयद्वचन वचनोज्झितम् ॥१॥ तदमूल्यद्वयीदातुरुर्वीसर्वस्वम-
प्यहे । दत्त्वाप्यस्यानृणीभावं न गच्छामि करोमि किम्॥२॥इति स्थिते नरेन्द्रे ऽथ व्याहारि व्यवहारिणा । स्वामिन्
गजस्तवैवोक्तो मूल्यं गृह्णे ऽस्य न ध्रुवम् ॥३॥ इत्यस्मै निश्चयवते सचिवानुमतो नृपः । दत्त्वा बलेन राज्यार्धं तं द्विपे-
न्द्रमुपाददे ॥ ४ ॥ ततः कृतेभरत्नासिमङ्गलो ऽयं महीपतिः । चक्रे यात्रां जगत्कम्पहेतुं जेतुं दिशो ऽखिलाः ॥५॥
निस्वानध्वानधूलीभिर्बधिरान्धारिविक्रमम् । संकटीभूतभूगोलं लोलं प्रास्थित तद्बलम् ॥६॥स गन्धसिन्धुरो बद्धरत्नपट्टः
पुरो ऽचलत् । मूर्धोर्ध्वभ्रान्तकोपाग्निरिव लोपाय विद्विषाम् ॥७॥ न नेमुः सर्वतो गर्वकुशीभिः कीलिता इव । ये पुरा
वैरिणस्तेषु स तलाज कृपां नृपः ॥८॥ रणेषु वारणेन्द्रस्तु स वात्यावर्तवद् द्रुमान् । लोडयामास विद्वेषिचमूस्तृणसमू-
हवत् ॥९॥ द्विपेन्द्रः प्रेक्षकीभूतसकलस्वबलोच्चयः । शत्रून् स त्रासयामास द्रुतमन्दानिवानिलः ॥१०॥ दन्तघात-
दलद्वप्रकपाटः पाटयन्भटान् । अरीन्करीन्द्रश्चक्रे ऽसौ दुर्गस्थानपि दुर्गतान् ॥११॥ इत्येष समरे ऽजैषीद्न्तलक्षीकृता-
न्द्विपः । लक्षीकृतं तदस्त्रैः स्वं गतिवेगादलक्षयन् ॥१२॥ दिशामन्तेषु मिथ्यात्वख्यातान्प्रेक्ष्येव दिग्गजान् । जितकाशी
स कुम्भीन्द्रो ववले ऽनुचलद्बलः॥१३॥ शक्तिसाधितदुःसाधे सिन्धुरे जयबन्धुरे । तस्मिन् सविस्मयप्रेम रेमे भूमीशमानसम्

॥१४॥ तमेवेभविभुं भूपैर्जयश्रीमङ्गलागतैः । पदे पदे ऽर्चयन्नाप पुरं नरपुरन्दरः ॥ १५ ॥ महोत्सवमयं भूपप्रवेशावेशपेशलम् । सचिवैस्तत्पुरं चक्रे शक्रेणापीप्सितास्पदम् ॥१६॥ अलोककामवामाक्षीजालमालितजालकम् । काश्मीरनीरनीरन्ध्रच्छटाछोटितभूतलम् ।१७। व्योमापगां जयन्तीभिर्वैजयन्तीभिरद्भुतम् । उत्तुङ्गतोरणस्तम्भानद्धसंमदसिन्धुरम् ।१८। कृताकल्पमिवानल्पैरुच्चस्थानासनैर्जनैः। सहासमिव दन्ताभमुक्तातोरणकान्तिभिः।१९। दुर्जयारिजयारोहप्ररोहन्मोहसंमदः तत्पुरं प्रविवेशाथ नृपस्तद्द्विपसंगतः।२०। चतुर्भिः कलापकम्॥ प्रीतिगौरैर्मुहुः पौरैः स्तूयमानः पदेपदे। लिखन्करी करेणोर्वी सविलक्ष इवैक्ष्यत।२१। खेलन् सहेलममलं कराग्रेणायमग्रहीत् । कुतोऽप्यट्टात्खटीखण्डं बीज धर्मतरोरिव २२ करात्तखटिकाखण्डः शुण्डारः स व्यराजत। स्वर्गदण्डाग्रसंसर्गिसोमव्योमतलोपमः।२३। किं कर्तानेन करटी खटीखण्डेन सम्प्रति। इत्यसौ विस्मयस्मेरैः प्रेक्ष्यमाणः पुरीजनैः ॥२४॥ आस्तानागरमङ्गल्यः प्रतिस्थानं मतङ्गजः । लीलालसगतिः प्राप भूपालभवनाङ्गणम् ॥२५॥ युग्मम् ॥ मृग्यमाणो महाश्चर्यनिश्चलैः खेचरैरपि । स गुणी प्रगुणीकृत्य कृत्यवित्खटिकामिमाम् ॥२६॥ चतुष्पंक्ति भवचतुर्गतिनिर्गतिमार्गवत् । श्लोकमेतन्नृपागारद्वारभित्तौ द्विपो ऽलिखत् ॥२७॥ युग्मम् ॥ अविज्ञातत्रपीतत्त्वो मिथ्यासत्त्वोल्लसद्भुजः । हा मूढ शत्रुपोषेण मित्रल्पोषेण हृष्यसि ॥२८॥ श्लोकमालोकयन्नेनमनेनसमसौ नृपः । अजानन्नर्थमर्थज्ञानपृच्छन्मित्रमन्त्रिणः ॥२९॥ श्लोकः कथंचिद्बुबुधे बुधैरपि तैर्न सः । अतिदीर्घो ऽपि न पुमान्पदाभ्यां लङ्घते ऽर्णवम् ॥३०॥ मुक्ताग्रे तोरणीकुर्वन्नथ दन्तांशुधोरणीम् । व्यबीविशन्नृदेवो ऽसौ वाग्देवीं रसनासने ॥३१॥ मदिष्टदेवता कापि मयि दत्त्वा जगत्त्रयम् । श्लोकं शिक्षाविशेषाय लिलेख द्विपरूपभाक् ॥३२॥ तदस्यार्थमविज्ञाय न

विशामि निवेशनम्। अमित्रमित्रसंदेहे कास्तु देहे ऽपि निर्वृतिः ॥३३॥ तदित्युदीर्य काव्यार्थहृल्लेखादीर्यमाणहृत्। तत्रैवास्थानमास्थाय विभुर्निविविशे विशाम् ॥ ३४ ॥ संहृताः सूरयः प्रज्ञावज्ञातसुरसूरयः। तैरप्यभेदि न श्लोकष्टङ्कैर्वज्रमणिर्यथा ॥ ३५ ॥ श्लोकार्थं लोकसार्थेषु समन्तान्मतिगर्वितान्। धर्माचार्यांस्तथाकार्यीपृच्छत्पृथ्वीपतिः क्रमात् ॥ ३६ ॥ अर्थेष्वघटमानेषु तेषामप्युक्तियुक्तिभिः। विषादपात्रं धात्रीशः किंकर्तव्यजडो जगौ ॥ ३७ ॥ श्लोकेनानेन कनकाचलेनेव प्रकम्पनाः। सर्वज्ञमानिनः सर्वे गर्वेण रहिताः कृताः ॥३८॥ अद्यापि विद्यते क्वापि को ऽपि प्रष्टव्यतास्पदम्। न वेति वदति क्ष्मापे सचिवेन्दुरवोचत ॥३९॥ अद्याप्येको विवेकोर्मिसमुद्रो न समेति सः। आनन्दचन्द्रसूरीन्द्रो जिनशासनतत्त्ववित् ॥४० ॥ ऊचे ऽथ राज्ञा नाज्ञापि यदन्यैस्तत्कथं नु सः। तथाप्याहूयतां सो ऽपि दीर्णशल्यो ऽस्तु संशयः ॥४१॥ अथ मन्त्री स्वयं गत्वा नत्वा विनयवामनः। निवेद्य कार्यमाचार्यवर्यमावर्ज्य हृतवान् ॥४२॥ ते कर्तुकामास्तीर्थेशशासनस्य प्रभावनाम्। राजमन्दिरमाजग्मुः सूरयो ऽथ नयोज्ज्वलाः ॥ ४३ ॥ मूर्तं शममिवायान्तं तमवेक्ष्य महामुनिम्। भून्यस्तदशनो हस्ती नमश्चक्रे मुदा नदन् ॥४४॥देवांशः को ऽप्यसौ कुम्भी मोहशुम्भीननाम यम्। न किं मुनीन्द्रं निस्तन्द्रा नमामो वयमप्यमुम् ॥४५॥इति ध्यायन्समुत्थाय भद्रपीठाद्विभुर्भुवः। नमश्चकार सपरीवारः संसारतारणम्॥४६॥सूरिं सिंहासने ऽध्यास्य निविश्याग्रे ऽतिभक्तिभाक्। तं श्लोकं दर्शयन्निस्यामर्थं पप्रच्छ पार्थिवः ॥४७ ॥ दन्तच्छविच्छलान्मुक्तिशिलादीधितिवर्णिकाम्। दर्शयन्निव भक्तेभ्यो गुरुर्गिरमथाकिरत् ॥४८॥ यो देवगुरुधर्माणां त्रयीं जानाति तत्त्वतः। रमते तन्मतिः सत्त्वे स मित्रामित्रभेदवित् ॥४९॥वीतरागप्रभुर्देवो गुरुस्तत्त्वो-

पदेशकः । धर्मश्च करुणारम्यस्त्रयीतत्त्वमिदं विदुः ॥ ५० ॥ तत्सत्त्वं यद्भवाम्भोधिः क्रममात्रेण लङ्घ्यते । मिथ्या सत्त्वं पुनः कर्मपरिष्यन्मार्यमारणम् ॥५१॥ रिपवो रागरोषाद्या मुहुर्देहं दहन्ति ये । मूलादुन्मूलनीयास्ते समत्वास्त्रेण धीधनैः ॥५२॥ मित्राणि प्राणिवर्गस्तु यो द्विषन्नपि कर्महा । कामं क्षा(शा) मयितव्योऽसौ क्रुधा दीप्तः शमामृतैः ॥५३॥कषायविषयाञ्शत्रूंन्परिपुष्यन्ति मित्रवत् । सुहृदोऽसुमतः शत्रूकृत्य निघ्नति धिग्जडाः ॥५४॥ राजन्को ऽप्यवधिज्ञानी तव पूर्वसुहृत्करी । सूक्त्यानया ददौ शिक्षां भुक्तराज्यस्य संयमे ॥५५॥ इति विज्ञाय सूक्तार्थं चमत्कुर्वन्गुरोर्गिरा । मेदिनीजानिरानन्दहृष्टरोमपदोऽवदत् ॥५६॥ अद्य मे फलवज्जन्म यद्भवान्भवपारदः । अलभ्यत गुरुर्गौरगुणगौरवभाजनम् ॥५७॥ त्वत्प्रसादेन संसारसारासारविचारवित् । जाने ऽधुना धुनाम्युर्वीभोगान्योगानुरक्तधीः ॥५८॥प्रभो पीयूषसदृशा दृशा मां वीक्ष्य दीक्षय । विलीयन्तां भवोत्थाना देहदाहज्वरोर्मयः ॥५९॥इत्युदीर्य पदद्वन्द्वमद्वन्द्वस्थिरमानसः । आनन्दचन्द्रसूरीणामग्रहीदाग्रही नृपः ॥६०॥श्लोकार्थज्ञानसंविग्नाः परेऽपि बहवो जनाः । दक्षा दीक्षामयाचन्त मुनिमानम्य तं तदा ॥ ६१ ॥ अयं करात्तकल्याणकलशः करिशेखरः । अभिषिञ्चति यं राज्ये स्थाप्यः कामं स मामके ॥ ६२ ॥ इत्यादिश्य तदा मन्त्रिवृन्दं वृन्दारको नृणाम् । मुक्तिदीक्षाप्रतिभुवं दीक्षामादत्त संमदी॥६३॥युग्मम्॥ ते ऽपि शुद्धधियो धीराः क्षीराब्धिस्फूर्तिकीर्तयः । कति नाददिरे दीक्षां भवक्षोदविनोदिनीम् ॥६४॥ जिनप्रवचनप्रौढप्रभावपृथुभावनः । अथातः सपरीवारो विजहार महामुनिः ॥६५॥ मङ्गल्यकलशं तस्य करे न्यस्य करीशितुः । पवित्रा मन्त्रिणस्तत्र ततः प्राञ्जलयो जगुः ॥६६॥ गजेन्द्रराज राजत्वं विराजयति यो गुणैः । तस्मै कस्मैचिदैश्वर्यं वितीर्य विजयी भव ॥ ६७ ॥

ततो मतङ्गजस्वामी चामीकरविभूषणः । मन्द्रगर्जितवाचालदिक्चक्रः प्रचचाल सः ॥६८॥गङ्गान्तराजस्य राज्याय पुरे ऽसौ
परिपालितः । महतैव दृशा पश्यन्मार्गविघ्नानमन्यत ॥६९॥सरलं तरलं गच्छन्मदागतिरिव द्विपः । स तस्थौ नगरराम-
रामोर्वीमपि न कम्पित॥७०॥क्वानेन हन्त गन्तव्यमित्यन्तश्चिन्तयातुराः । तं मन्त्रिणोऽन्वगुर्मन्त्रं प्रभावा इव साभिनम्
॥ ७१ ॥ रत्नार्थीव पुमानब्धिं पुरत्नार्थी स वारणः । दुःप्रवेशं विवेशाथ दूरदेशाटवीपथम् ॥ ७२ ॥ सुप्तं तरुतले
कंचिद्वीरं ऽक्षशरीरकम् । तत्राभ्यषिञ्चदम्भोभिः कुम्भी कल्याणकुम्भजैः ॥७३॥ ततो बन्दिकदम्बेन कृते जयजयारवे ।
दूरमापूर्यमाणे च तूर्यक्वाणेन दिग्गणे॥७४॥अयमुत्थापयांचक्रे यावद्राज्याय मन्त्रिभिः । दृष्टस्तावदहिंसकोचिहस्ताग्रवयवः
पुमान ॥ ७५ ॥ युग्मम् ॥ प्रत्यक्षलक्षितक्ष्मापलक्षणो ऽपि हहा महान । नैष पद्भ्यां गतौ शक्तो न पाणिभ्यां तृणग्रहे
॥ ७६ ॥ किमीदृशो ऽपि राज्ये स्यादिति ध्यायिषु मन्त्रिषु । करेणारोप्य तं पृष्ठे पुराय प्रययौ द्विपः ॥ ७७ ॥ नूनं
ज्ञानी गजो ऽनेन राज्यं वर्धिष्णु वीक्ष्यते । प्रवेशोत्सवमित्यस्य विचित्रं मन्त्रिणो व्यधुः ॥७८॥अज्ञातकुलशीलस्याप्यु-
न्मीलद्भाग्यशालिनः । राज्याभिषेकमङ्गल्यं तेनिरे ऽस्य नरोत्तमाः ॥ ७९ ॥ राज्यप्रधानपुंवर्गस्तं ननाम च नाम च ।
पुण्यर्द्धिभानतस्तस्मिन्पुण्याढ्य इति निर्ममे॥८०॥राज्यार्धस्वामितागर्वादखर्वस्तु धनावहः । पङ्गुं नामुं नमामीति निर्ययौ
नगराद्बहिः ॥८१॥तद्राज्यार्धबलं तस्य मण्डलेशाः परे ऽपि च । विधुराङ्गधराधीशवैराग्येण तमन्वगुः ॥८२॥ सहस्तिकैर्ह-
स्तिपकैः सतुरङ्गैस्तुरङ्गिभिः । नृपमूलबलाधीशैरप्यसावन्वगम्यत॥८३॥बलीयाञ्जयतीत्येष नियोगिभिरपि श्रितः । बहिर्वकु-
बलत्वेन नागरैरप्यगामि सः ॥८४॥अपि हस्तिपकेनोच्चैर्नुन्नो हस्तिपतिस्तु सः । एक एव वहिर्नागान्क्षिप्रमार्गेषु क नादृशः

॥८५॥अभूत्पुण्याढ्यभूपस्य भूपसद्मैव केवलम्। ययौ राज्यं समस्तं तद्धर्मराज्यहरे नरे॥८६॥भद्रासनैकभक्तात्मा मध्ये ऽपि
भुजभृद्गणः। को ऽपि स्यादिति संनद्धबलजालश्चचाल सः ॥८७॥ आधोरणाग्रणीस्तस्य वारणाधिपतेस्तदा। प्राञ्जलि-
र्जगतीजानिं विजयाय व्यजिज्ञपत्॥८८॥जयत्येव रणोत्सङ्गसंगतो ऽसाविभो विभो। अस्मिन्नारुह्यतामाशु मुच्यतां मा ऽसुहृ-
द्गणैः ॥८९॥ एवमस्त्विति जल्पन्तं गोपमारोपयद्द्विपे। हस्तिपालस्तदा काल इव पूर्वाचले रविम् ॥ ९० ॥ अथायमच-
लयोध्दुमचलश्रीरिभप्रभुः। अवेपिनो भटाः के ऽपि पट्टभक्ताः पुरो ऽभवन्॥९१॥शौर्यलक्ष्मीनटीनाट्यारम्भसंभ्रमभृत्त-
तः। अमिलत्तुमुलोत्तालं तालवन्नद्दलद्वयम् ॥९२॥ विपक्षासिमहाराणां हाराणामिव पातिनाम्। सञ्चीचक्रुः शरीराणि
वीरश्रीलम्पटा भटाः ॥ ९३ ॥ गायत्कोदण्डदण्डज्यो नदद्द्विरदमर्दलः। नृत्यद्वीरकबन्धो ऽयं बन्धुरो ऽभूद्रणक्षणः ॥
॥ ९४ ॥ भटान्पुण्याढ्यभूभर्तुः क्षणेनाथ द्रुमानिव। उन्मूलयद्भिः प्रसृतं द्विट्पूरैः सिन्धुपूरवत् ॥ ९५ ॥ हस्ती न हन्त
हन्तव्यः पत्तुरेवैष हन्यताम्। इत्यूर्ध्वपाणिरवदत्सदा धीरान्धनावहः॥९६॥क्षीणोपान्तस्थसैन्यो ऽपि दुर्धर्षो ऽथ करीश्वरः
रिपुसैन्यं ममन्थासौ दधि मन्थानको यथा॥९७॥करी सर्वाभिसारेण ततो ऽरोधि विरोधिभिः। रजनीसमयोत्क्रान्तैर्ध्वा-
न्तैरिव विपत्पथः ॥९८॥ इत्यस्मिन्संकटे तिष्ठन्पुण्याढ्यनृपतिर्जनैः। किमध्यासि करीशेन राज्ये ऽसावित्यशोच्यत ॥
॥ ९९ ॥ तृणमप्यात्महस्तेन कुरु शस्त्रं रिपूञ्जय। तदेत्युवाच पुण्याढ्यमदृश्या भाग्यदेवता ॥ २०० ॥ तदैव दैवतस्तस्य
मारुतमेरितं करे। आरोहश्च तृणं शत्रौ शस्त्रमित्यक्षिपच्च सः॥१॥अथाशु स्फूर्जद्वूर्जस्विस्फूर्जथुस्फोटिताम्बरम्। लोलकी-
लाकुलीभूत्यधरादिग्मण्डलोदरम् ॥२॥ कम्पमानाचलचयं भयभुग्नजगत्त्रयम्। तृणमप्यभवद्वज्रं व्योम्नि पुण्याढ्यपुण्यतः

॥ ३ ॥ युग्मम् ॥ यो न नंस्यति पुण्याढ्यं तत्र वज्रं पतिष्यति । इत्यभूच्च नभोवाणी भूपभाग्याधिदेवतात् ॥ ४ ॥
इत्युदन्तेन दन्तेषु नृणामीशास्तृणान्यधुः । नृपं नेमुश्च पुण्याढ्यमहो पुण्यमहोदयः ॥ ५ ॥ दासस्तेऽस्मीति जल्पन्तं
कल्पयन्तं मुहुः स्तुतिम् । लुठन्तं भूतले भूपोऽनुजग्राह धनावहम् ॥६॥ पुरं प्रविशतस्तस्य राज्ञो ऽथ जितकाशिनः ।
प्रथीयानरिवारोऽपि परिवारो ऽभवत्तदा॥७॥पुण्याढ्यभूपतेराज्ञां राज्ञां मूर्धन्यतन्वताम् । प्राणनाशार्थमाशासु कुलिशं
विलसत्यदः ॥ ८ ॥ इत्यम्बरगिरा साकं साकम्पभुवनत्रयम् । दूरादसंख्यदेशेषु दिवि तद्वज्रमभ्रमत् ॥ ९ ॥ युग्मम् ॥
प्रदत्तासंख्यदेशान्तःपृथ्वीनाथाज्ञमित्यदः । अनिशं तासु सीमासु भीमार्चिर्वज्रमस्फुरत्॥१०॥अन्यायवार्तामपि यश्चक्रे
दध्यौ च तद्भुवि । तमेवाकम्पयद्वज्रमन्यायकरकायभित् ॥११॥ तस्यः बिभ्रद्भिरिलाशामाशङ्कां च प्रथीयसीम् । आज्ञा
मूर्ध्नि दधे कामं तत्सीमावासिभिर्नृभिः ॥१२॥ वज्रसंचारनिश्चिन्तो बहुदेशमहीपतिः । श्रीपुण्याढ्यः सुखं तस्थाविल्थं
स्वर्गे हरिर्यथा ॥ १३ ॥ हृष्यन्नेत्यावनीपालं वनीपालः कदापि तम् । अवतंसीभवत्पाणिपङ्कजश्रीर्व्यजिज्ञपत् ॥ १४ ॥
स्वामिन्नेतत्पुरस्वामी तपनस्तपसि स्थितः । आजगाम तवाराममवधिज्ञानभानुमान् ॥१५॥इत्याकर्ण्य श्रियः कर्णाभरणं
धरणीपतिः । मुदितो दन्तिराजं तमारुह्योद्यानमासदत्॥१६॥महामुनिमिहानम्य निविष्टो हृष्टहृन्नृपः । कृतानतिः करी-
न्द्रोऽपि तस्थौ वचनगोचरे॥१७॥ पुरस्य पुरभर्तुश्च प्रधानपुरुषैः क्रमात् । दूरं मुनिसभापूरि भूरिभिर्धारिवोडुभिः ॥१८।
ततः श्रुतसुधाम्भोधिविहरल्लहरीनिभाम्।निर्ममे निर्ममेशोऽयं निर्मलां धर्मदेशनाम्॥१९॥इहानादौ भवे ऽनादिजीवोऽनादि-
स्वकर्मतः । अव्यवहारराशौ स्याद्दुःसहग्रहदुःखभाक् ॥२०॥ असंख्या ह्यत्र गोलाः स्युर्गोलोऽसंख्यनिगोदकः । एकैक-

स्मिन्निगोदे स्युरनन्ता जन्तवः स्थिराः ॥ २१ ॥ अन्योन्यजन्तुसंवाससंमर्दोत्पीडपीडितः । जीवोऽनन्तान्भवानेकेन्द्रिय
एवात्र संवसेत् ॥ २२ ॥ उत्पत्तिनाशैस्तत्रैवाकामनिर्जरया चिरात् । स क्षिपेत्कानिचित्किचित्कर्माणि कथमप्यथ॥२३॥
एवं तेषु निगोदेषु सोऽनुभूय महाव्यथाम् । आयाति व्यवहाराख्यराशौ दैववशादिह ॥ २४ ॥ अत्यन्तस्थावरो ऽप्यत्र
कश्चित्कर्मलाघवात् । मानुष्यमुत्तमं प्राप्य भवे तत्रैव सिध्यति॥२५॥प्रायेणान्यस्तु सर्वोऽपि संसारे स्वस्वकर्मभिः । चतुर-
शीतिलक्षासु जीवो भ्राम्यति योनिषु ॥२६॥ तथाहि । जन्मानि सप्त लक्षाः स्युः पृथ्वीकाये शरीरिणः । जले सप्तानले
सप्तानिले सप्त स्वकर्मतः॥२७॥द्विधा वनस्पतिर्ज्ञेयः प्रत्येकानन्तभेदतः । तत्राद्ये दश लक्षाणि द्वितीये तु चतुर्दश ।२८।
द्वीन्द्रिये त्रीन्द्रिये द्वे द्वे द्वे लक्षे चतुरिन्द्रिये । लक्षाश्चतस्रो निरये चतस्रस्त्रिदशालये ॥२९॥ लक्षाश्चतस्रस्तिर्यक्षु मनुष्येषु
चतुर्दश । वर्णाद्यैः सममेक तदुक्तं स्थानं तु बह्वपि॥३०॥चतुर्भिः कलापकम् ॥ इत्थं भ्राम्यन्भृशं भाग्यैरात्माभ्येति भवे
नृणाम्।आर्यक्षेत्रसुगोत्रायुरक्षपटुतान्विते।३१।न स्यात्तत्र गुरुप्राप्तिः।सा चेत्तन्नागमश्रुतिः।सापि चेत्तन्न जीवस्य हृदि श्रद्धा
समुल्लसेत्॥३२॥सत्यां तस्यामपि प्रायस्तुच्छपुण्यस्तु मानवः। कर्तुं न लभते धर्ममाधिव्याधिप्रमादतः॥३३॥निदानं सर्वसौ-
ख्यानां फलं मर्त्यत्वभूरुहः। विरलः कोऽपि शुद्धात्मा शश्वद्धर्मं निषेवते॥३४॥विरुद्धाचरणैः केचिदधन्या धर्ममप्यहो विरा-
धयन्ति दुर्बुद्धियाधिता ह्यात्मवैरिणः॥३५॥आराद्धाच्च विराद्धाच्च धर्मादेव शुभाशुभे। लभते जन्तुरन्यस्तु मुख्यं किंचिन्न
कारणम् ॥ ३६ ॥ इति निश्चित्य सत्कृत्यमावितत्य शुभात्मना । धर्मः संसेव्य एवैषोऽतुल्यकल्याणजन्मभूः ॥ ३७ ॥
इत्थं तस्य मुनीशस्य तैः पपे वचनामृतम् । अतृप्तैरपि मूर्धानं धुनानैर्धर्मिभिर्नृभिः॥३८॥अथ पृथ्वीश्वरोऽप्यर्थं सव्यथो

यदेवं देहवैधुर्यं राज्यं चाप्यत् नत्क्षणं । इन्द्रवारणनारङ्गस-
हृदये दधौ । किं मया युगपद्धर्माधर्मौ पूर्वभवे कृतौ ॥३९॥ यदेवं देहवैधुर्यं राज्यं चाप्यत् नत्क्षणं । इन्द्रवारणनारङ्गस-
मास्वादनसोदरम् ॥४०॥ युग्मम् ॥ इति ध्यात्वाधिकं धात्रीधवः साधुशिरोमणिम् । अपृच्छत्कायसंकोचभाग्यासंकोच-
कारणम् ।' ४१ ॥ ततो दन्तश्रुतिच्छदद्वयधर्मद्रुपुष्पया । आसन्नमुक्तिफलया गिरामीणाजनं मुनिः ॥ ४२ ॥
पुरं लक्ष्मीपुरं नाम शोणश्यामाश्मवेश्मभिः । पदं धर्ममुनेरस्ति महस्तिमिरमेलकृत्॥४३॥जज्ञिरे तत्र मित्राणि त्रयः
क्षत्रियगोत्रजाः । रामवामनसंग्रामनामानः प्रीतिभाजनम् ॥४४॥ चतुर्दशाब्ददेशीयाः कामं विरहकातराः । खेलन्ति स्म
सहेलं ते पुरि पौरप्रियश्रियः ॥ ४५ ॥ ते सज्जनमनस्तोपकारितुल्यक्रियास्त्रयः । साधोर्मनोवचःकायप्रपञ्चा इव रेजिरे
॥ ४६ ॥ कदाप्युद्यानमेदिन्यां ते ययुः केलिलालसाः । ददृशुश्च कमप्युद्यत्कायोत्सर्गस्थितं यतिम् ॥ ४७ ॥
प्रीतिमन्तो नमन्ति स्म ते यतेः पदयोः पुरः । उन्नमन्ति स्म लोकाग्रे यावत्पुण्येन वर्ष्मणा ॥ ४८ ॥
पयःकणोऽपतत्पृष्ठे वामनस्य नमस्यतः । मुक्तिसीमन्तिनीमुक्तलीलाकर्करकोपमः ॥ ४९ ॥ स चातक इवोत्पश्यः
पश्यन्वारिलवागमम् । गलदश्रुजलं साधोरेकमीक्षणमैक्षत ॥ ५० ॥ निरीक्ष्य निपुणं दक्षः स्ववयस्यावुवाच
सः । नेत्रं मुनेर्दुनोत्यस्य दृश्यतामेष कण्टकः ॥ ५१ ॥ मारुतोर्मिधुतो नूनमयमस्यापतद्दृशि । नाकृष्येत शरीरेऽपि
निरीहेणामुना पुनः ॥५२॥अस्मत्करोऽल्पकायत्वान्नैतदस्यकचुम्बकः । तत्कथं कण्टकः क्रष्टुं शक्यो ऽरिष्टमिवात्मनः ।५३।
रामो वामनमाचष्ट सखे मा खेदमुद्वह । चतुष्पदीभवाम्येष पाणिस्पृष्टमहीतलः ॥ ५४ ॥ मत्पृष्ठदत्तपादाग्रो वामन
त्वमवामनः । भव हर्षगृहं कर्ष कण्टकं मुनिनेत्रतः॥५५॥अथ जग्राह संग्रामो व्यामोहद्रोहकृद्वचः । सखे निर्मोहि कर्मैद-

मन्यग्रो मत्करग्रहात् ॥ ५६ ॥ ततश्चतुष्पदीभूततनौ रामे कृतक्रमः । संग्रामहस्तविन्यस्तवामहस्तः स वामनः ॥ ५७ ॥ अहो कियन्मलार्द्रोऽयं संकुचन्निति शङ्कया । अवामपाणिनाकर्षन्महर्षेः कण्टकं दृशः ॥५८॥ युग्मम्॥ सुखसंचरणार्थं ते मुक्तिमार्गमिवात्मनः । कृत्वा निष्कण्टकं नेत्रं मुनेर्मुमुदिरेतराम् ॥५९॥ उपकारपरो न स्यात्को ऽप्यस्मात्क्षत्रियान्विना । इति गोत्रमदं दध्यौ मुग्धत्वाद्वामनस्तदा ॥ ६० ॥ कृतिनः कृतकृत्यास्ते नमस्कृत्य यतिं ततः । पुराय प्राचलन्वाचमिति प्रोवाच वामनः ॥ ६१ ॥ निर्वृतानामिवेहापि येनानन्दोऽजनिष्ट नः । अहो भविष्यति कियत्कर्मणोऽस्याग्रतः फलम् ॥६२॥ आस्येन बहुहास्येन तदा रामोऽकिरद्गिरम् । इहाभूत्पशुरूपत्वं ममैतत्कर्मणः फलम् ॥६३॥ गामग्रहीच्च संग्रामो राम मा मैवमुच्यताम् । हास्योक्त्यापि भवत्येव पुण्यकर्म गलत्फलम् ॥६४॥ यदस्य मुनिराजस्य नेत्रं निःकण्टकीकृतम् राज्यं भवान्तरे भावि तदकण्टकमेव नः ॥६५॥ अथ प्रोन्मीलदुद्दामकामनो वामनोऽवदत् । कर्मामेयफल ह्येतत्फलमानो ऽस्य नोच्यते ।' ६६ ॥ इत्थं मिथः कथालापशालिनः प्रीतिमालिनः । अद्भुतं भावयन्तस्तत्कर्म हर्म्यमहीमगुः ॥६७॥ अजातपौरपीडाभीः क्रीडाभिस्ते निरन्तरम् । वयस्या गमयामासुर्वासरान्धर्मभासुरान् ॥६८॥तेऽथ पातकपूरेण दुरिताः पूरितायुषः । यथा यथा समुत्पन्नाः शृणु भूप तथा तथा॥६९॥फलं मे पशुरूपत्वमिति हासोक्तिकर्मणः स रामः सामजो जज्ञे तैः पुण्यैर्ज्ञानवानयम् ॥ ७० ॥ मुनिदृक्कण्टकाकर्षाद्राज्यं निष्कण्टकं भवेत् । इत्युक्त्वा प्राप संग्रामजीवोऽहं तादृशं फलम् ॥७१॥ प्राग्मैत्रीरागतो नागवरोऽसौ मामुपागतः । बोधितोऽहमनेनेदं प्राक्कर्मफलमासदम् ॥७२॥ यस्त्वासीद्वामनः किंचिद्गोत्रगर्वादवामनः । भूप स्वरूपमेतस्य शृणु शेषं विशेषतः ॥-७३-॥

अस्त्यवन्ती समस्तार्थानवन्ती नामतः पुरी। वाग्लक्ष्म्यौ क्रीडतोऽपीडं यस्यां जनमुखाम्बुजे॥७४॥तस्यां शस्यांसशैलाग्रक्षरत्पौरुषनिर्झरः। विरोधिरोधकृद्बाहुः सुबाहुरिति भूपतिः॥७५॥तस्य धात्रीपतेश्छत्रधरः किन्नरसंज्ञकः। गृहिणी हरिणी तस्य हरिणीनयनाजनि।७६।सुकृती वामनस्यात्मा गर्भेऽस्याः समवातरत्।गर्भानुभावतोऽपश्यत्तदा सा स्वप्नमद्भुतम् ॥७७॥ तत्क्षणं हरिणी त्यक्तनिद्रा चन्द्रमुखी सुखम्। पल्यङ्कादुत्थिता पत्युः सुस्थितेति व्यजिज्ञपत्।७८। ममोदरे रुचां राशेरभिषेकं वितन्वती। मेरुशृङ्गे महालक्ष्मीः स्वप्नेऽस्य ददृशे मया।७९।अथावददसौ नारीं किन्नरः शृणु सुन्दरि। सर्वोत्तमसुतोत्पत्तिसूचकः स्वप्न एष ते।८०।ततोऽवादीन्मुदा वाणीं हरिणी हारिणीमसौ। स्वामिन्धुतसुधावस्तु सत्यमस्तु तवोदितम् ।८१। इत्थमन्योन्यमालापसुखास्वादनमेदुरौ। देवतार्चादिसत्कृत्यं चक्रतुस्तौ प्रमोदतः।८२। गर्भानुभावतः कान्तिकीर्तिसौख्यसमृद्धिभिः। तद्गृहेऽथ मुदा सार्धं ववृधे स्पर्धयाधिकम्।८३।तृतीये मासि संपूर्णे हरिण्याः पुण्यगर्भभूः। रत्नाकरस्य पानेऽभूद्दोहदो हृदि दाहदः।८४।अस्मिन्नपूर्यमाणेऽस्याः शोषस्तोषहरोऽजनि। अविच्छेदस्य खेदस्य सत्रं छत्रधरोऽप्यभूत् ॥८५॥ ते मन्त्रतन्त्रशास्त्रज्ञाः पृष्टास्तेन सहस्रशः। न दधार धियं कश्चिदीदृग्दोहदपूरणे॥८६॥ कदापि क्ष्मापतेरग्रे कुतूहलकलापकम्। दर्शयन्नमुनादर्शि दिष्ट्या कोऽपीन्द्रजालकृत्॥८७॥ पृष्टस्तेनायमित्याह पूरयिष्यामि दोहदम्। किं च ते भविता सूनुः कोऽपि विश्वविलक्षणः॥८८॥गृहस्याग्रे निवेश्याथ तत्र च्छत्रधरप्रियाम्। अदीदृशदसावैन्द्रजालिको जलधिं सुधीः॥८९॥ उच्छलच्छोणरत्नांशुमालामग्नार्कमण्डलम्। समुद्यद्बिन्दुसंदोहोपशान्तश्रान्तखेचरम्॥९०॥ माधुर्यधुर्यदुग्धोर्मिरसप्रीतसुधाशनम्। ऐन्द्रजालिकनिर्देशात्पातुं सा तं समुद्यता॥९१॥ युग्मम्॥ऐन्द्रजालिकविज्ञान-

प्रसादेन रसादसौ। एकेनैव तयापायि श्वासेन पयसांपतिः ॥९२॥ सा पूर्णदोहदा तूर्णमन्तःसंतोषशालिनी। मुहुरा-
नन्दसंदर्भवपुः सपुलकं दधौ ॥९३॥ अथैन्द्रजालिको दर्पहारिणा च्छत्रधारिणा। कृतकृत्यः कृतः कृत्यविदा सर्वस्व-
दायिना ॥९४॥ अङ्गसंगतनिःशेषासुद्रसामुद्रलक्षणम्। सुतं सुते स्म कालेन साथ पाथोधिपायिनी ॥ ९५ ॥ पितृभ्यां
निर्मितानेकमहाभ्यामहनि प्रिये। श्रीदत्त इति चक्रेऽस्य नाम स्वमानुमानतः॥९६॥ विकासिरक्तराजीवराजीसमकरक्रमः
अतन्द्रचन्द्रमश्छायाचौरगौरमुखच्छविः ॥ ९७ ॥ असावनन्यसामान्यसर्वावयववैभवः। बभौ मातृपितृस्वान्तानन्दनो
नन्दनोऽधिकम्। ॥ ९८ ॥ युग्मम् ॥ स क्रमादक्रमारूढगूढागूढगुणोच्चयः।अवाप कामं वामभ्रूनयनैकप्रियं वयः ॥ ९९ ॥
ईदृक्षलक्षणः क्षोणीपतिः स्यादिति लौकिकी। तत्कथा पृथिवीनाथश्रुतिगोचरतां गता॥२००॥छन्नमेव निशामध्ये वध्यः
स इति भूपतिः। भटानाह भयात्तस्य न पापे रमते मतिः ॥१॥ ज्ञात्वेति नृपवृत्तान्तं सुकृतैरेकतो भटात्। श्रीदत्तश्छन्न
एकाकी निरगान्नगरान्निशि ॥२॥ अहर्निशं निराहारविहारः सप्तभिर्दिनैः। क्षुधाक्षामोदरः श्रान्तः कान्तारं किंचिदाप
सः ॥ ३ ॥ अज्ञाततुमनामापि संकोचनतरोः फलान्। आस्वाद्य क्वापि सुष्वाप च्छायायां स पटीवृतः ॥ ४ ॥
तद्वृक्षफलमाहात्म्यात्सद्यः संकुचिताङ्गकः। छिपेनानेन स भवान्भुवनाधिपतिः कृतः ॥५॥ यद्गोत्रगर्वतः साधोः पुरो
ऽल्पमपि चिन्तितम्। तदुत्पन्नोऽसि पुण्याढ्य किंचिन्नीचकुले किल ॥६॥ शुकसंकोचिनाकर्षि शल्यं यन्मुनिलोचनात्।
सममेवाङ्गसंकोचो राज्यं चाप्यत तत्त्वया ॥ ७ ॥ तत्कर्मामेयफलता भवता भाविता च यत्। तदमेयमहत्त्वं ते राज्यं
राजन्नराजत ॥ ८ ॥ कदापि क्वापि कस्यापि तवेवाद्भुतकर्मणः। पुण्यादेवेत्थमैश्वर्यं नाभवन्न भविष्यति ॥ ९ ॥

तदितः स्पष्टदृष्टान्तान्नित्यं कर्मणि निर्मले । स्थातव्यं भवभेदात्तपौरुषैः पुरुषोत्तमैः ॥ १० ॥
अथ पृथ्वीपतिः प्राह प्रभो संयच्छ संयमम् । संसारवारिधेः सेतुं केतुं धर्ममहीपतेः॥ ११॥अथाचष्ट गुरुः स्पष्टं प्रतिलेखादिकर्मसु। अक्षमो ऽसि क्षमाभर्तर्व्रतमस्तु कुतस्तव॥१२॥किं ते व्रतेन कष्टेन विशिष्टसुकृताश्रय। अस्मिन्नेव भवे भाविभवतो ह्यपुनर्भवः ॥१३॥ इत्युक्तोऽप्यस्मयः स्मेरविस्मयः सस्मितं नृपः । गुरूनुवाच किं मे स्याद्गृहिणो ऽप्यपुनर्भवः ॥१४॥अजल्पत्तपनः साधुः शृणु पुण्याढ्यभूपते। ते पञ्चदशभिर्भेदैः सिद्धाः स्युरिह तद्यथा॥१५। सिद्धस्तीर्थकरोऽतीर्थकरः प्रत्येकबुद्धकः । स्वलिङ्गः परलिङ्गश्च नरलिङ्गो नपुंसकः॥१६॥तीर्थसिद्धो ऽतीर्थसिद्धः स्त्रीलिङ्गो बुद्धबोधितः । एकसिद्धो ऽनेकसिद्धः स्वयम्बुद्धो गृही तथा॥१७॥एकस्मिन्समये जीवाः सार्धद्वीपद्वये ऽपि तु । एकमारभ्य सिध्यन्ति यावदष्टोत्तरं शतम् ॥१८॥ सिद्धत्वे केवलज्ञानं कारणं कीर्तितं जिनैः । तत्तु कर्मक्षयादेव ध्यानात्कर्मक्षयो भवेत् ॥१९॥ अन्तर्मुहूर्तमेकाग्रचिन्ता ध्यानमिदं पुनः । आर्त्तं रौद्रं च धर्म्यं च शुक्लं चेति चतुर्विधम् ॥ २० ॥ ऋतमित्युच्यते दुःखं तस्मादेतद्भवेदिति । आर्तं विदुरिदं ध्यानं तदप्युक्तं चतुर्विधम् ॥२१॥ इन्द्रियाप्रियवस्तूनां प्राप्तौ या दुःखतो भवेत् । अतीवविरहातीवोच्छेदचिन्तेदमादिमम् ॥२२॥ द्वितीयं रुजि सत्यां तत्प्रतीकारैकचेतसः । तद्विप्रयोगतदसंप्रयोगातीवचिन्तनम् ॥२३॥ तृतीयं त्विष्टविषयप्राप्तौ संहृष्टचेतसः। चिन्ता तदवियोगे च तत्सङ्गे च महास्पृहा ॥२४॥ तुर्यं च चक्रिशक्रादिगुणर्द्धिप्रार्थनामयम् । निदानमधमं ज्ञानकणिकामप्यबिभ्रतः ॥ २५ ॥ हिंसादिक्रूरतायुक्तं रौद्रमाहुस्तदुद्भवम् । ध्यानमप्युच्यते रौद्रं चतुर्धा तदपीरितम् ॥ २६ ॥ वधबन्धननिर्दाहाङ्कनमारणकर्मणाम् । जीवेषु प्रणिधानं यन्नि-

दंयस्य तदादिमम् ॥ २७ ॥ द्वितीयं त्वतिसंधानसनिर्बन्धस्य मायिनः । असद्भूतभूतघातिकूटवाक्प्रणिधामयम् ॥२८॥ तृतीयं त्वतिदुष्टस्य भूरिलोभक्रुधाहृदः । भूतघातपरद्रव्यापहारप्रणिधामयम् ॥२९॥ शब्दादिविषयापूर्तिहेतुषु द्रविणेषु यत् । लब्धिसंग्रहसंरक्षाप्रणिधा तत्तुरीयकम् ॥३०॥ उत्पद्यमानमप्येतद्द्वयं वार्यं शुभाशयैः । उपेक्षिते प्रमादात्तु महादुःस्वाय जायते ॥ ३१ ॥ धर्माद्यदनपेत तद्धर्म्यं तत्तु चतुर्विधम् । आद्यं तत्र जिनाज्ञायाः पालनं तत्त्वनिश्चयात् ॥ ३२ ॥ कषायविषयापायत्राणचिन्ता द्वितीयकम् । तृतीयं चिन्त्यते कर्मविपाकश्च शुभाशुभः ॥३३॥उत्पत्तिविगमध्रौव्यस्वरूपस्य नराकृतेः । अनाद्यन्तस्य लोकस्य चिन्तनं तच्चतुर्थकम् ॥३४॥ अन्यथा वा चतुर्धोक्तं धर्म्यध्यानमिदं बुधैः। पिण्डस्थं च पदस्थं च रूपस्थं रूपवर्जितम् ।३५। देहस्थं ध्वस्तकर्माणं चन्द्राभं ज्ञानिनं सुधीः । यत्रात्मानं परैश्वर्यं पश्येत्पिण्डस्थमत्र तत् ॥३६॥ मन्त्राक्षराणि शारीरपद्मपत्रेषु चिन्तयेत् । गुर्वादेशेन यद्योगी पदस्थं तदिहोच्यते ॥३७॥ सप्रातिहार्यं समवसृतिस्थं ज्ञानिनं जिनम् । तद्बिम्बं वा स्मरेद्योगी यत्तद्रूपस्थमिष्यते ।३८। यदमूर्तं महानन्दमयं सिद्धं निरञ्जनम् । ध्यायेद्योगी परात्मानं रूपातीतं दिशन्ति तत् ॥३९॥ एवं संक्षेपतः प्रोक्तं धर्मध्यानं धराधिप । इह लोकेऽपि माहात्म्यमस्यानन्तं सतां भवेत् ॥ ४० ॥ दुःकर्मनिर्मितामुचैः शुचं क्रमयतीत्यदः । शुक्लमादिश्यते ध्यानं तदपि स्याच्चतुर्विधम् ॥ ॥४१॥ पृथक्त्वेऽपि पदार्थानामनुमानविचारतः । श्रुते पदे पदार्थस्यादृष्टस्यापि स्वरूपधीः ॥४२॥ दृष्टे पदार्थे विज्ञानं पदस्याप्यश्रुतस्य यत् । स्यात्पृथक्त्ववितर्केण सविचारं तदादिमम् ।४३। युग्मम् ॥ यदच्छब्दार्थयोरैक्यपरिज्ञानं वितर्कतः । अपृथक्त्वविचारेण मनोनैश्चल्यकारणम् ॥४४॥ पूर्वश्रुतानुसारोत्थं केवलज्ञानहेतुकम् । तद्द्वैतीयीकमेकत्ववितर्कमविचारकम्

॥ ४५ ॥ युग्मम् ॥ निरुद्धे वाङ्मनोयोगयुगे केवलिनः प्रभोः । यद्वत्वङ्गयोगेऽर्धनिरुद्धे मुक्तिकालतः ॥ ४६ ॥ श्वासोच्छ्वासक्रिया सूक्ष्मा यत्र यन्न निवर्तते । तृतीयं कथ्यते सूक्ष्मक्रियं तदनिवर्तकम् ॥४७॥ युग्मम् ॥अङ्गत्यागेऽपि यत्रात्मा शैलेशीकरणास्थितः । ईशः शैल इवात्मीयमङ्गरूपं न मुञ्चति ॥ ४८ ॥ मुक्त्युत्पातक्षणे मुक्तश्वासोच्छ्वासादिकक्रियम् । अनिवर्ति च यत्तत्स्यात्तुर्यं व्युपरतक्रियम् ॥ ४९ ॥ युग्मम् ॥ आत्मप्रकाशकैवल्यरूपं कर्मक्षयोदितम् । केवलज्ञानकाले स्याद्ध्यानं शुक्लं तु योगिनः ॥५०॥ एतद्ध्यानं स्वतो जातं सद्गुरोर्वोपदेशतः । वज्रऋषभनाराचदेहस्यैव स्थिरं भवेत् ॥ ५१ ॥ इदं स्थिरत्वमापन्नं कृत्वा कर्मक्षयं क्षणात् । जनयेत्केवलज्ञानं योगीन्द्रस्य शिवप्रदम् ॥ ५२ ॥ तत्पुण्याढ्य गृहस्थो ऽपि ध्यानस्यामुष्य योगतः । केवलज्ञानमासाद्य सद्यः सिद्धो भविष्यसि॥५३॥तत्वेदं शृण्वभिज्ञानमभिज्ञजनमण्डनम् । संकोचदूषण तेऽङ्गादुत्तरिष्यति सर्वथा ॥५४॥ तर्हि देहि गृहस्थानामेव धर्मं मम प्रभो । इत्युक्त्वा भूभुजा सूरिः श्रद्धापूरितचेतसा ।५५॥ तस्मिंस्तदैव सम्यक्त्वं द्वादशव्रतभूषितम् । विधिनारोपयामास प्रकाशितमहोत्सवे ॥ ५६ । युग्मम् ॥ व्रतानां सेवने शिक्षां दक्षायास्मै प्रदाय सः । सद्गुरुर्ज्ञापयामास विशेषादिति तं नृपम् ।५७। अयं सम्यक्त्ववतस्त्वज्ञोऽवधिज्ञाननिधिर्गजः । अवन्धनीयो धर्मात्मा धर्मबान्धवतां गतः ।५८। सिन्धुरो ऽयमबद्धो ऽपि न किंचित्पीडयिष्यति । यद्द्वितीये भवे स्वर्गी सप्तमे सिद्धिसौख्यभाक् ।५९। अतः सुकृतकार्येषु निःशेषनिजदोषहृत् । न शोच्यः पशुरूपोऽपि भूप चिद्रूपचेतनः ।६०। तथेति प्रतिपद्याथ कर्मोन्माथकथामिमाम् । गुरुं नत्वा नृपो धर्मवासः स्वावासमासदत् ।६१। राजा कुञ्जरराजस्य गुर्वाज्ञाराजितस्ततः । बन्धारोहणयुद्धादिबाधावारमवारयत् ।६२। नृपतिर्द्विपनाथस्य

स्वस्थेवास्य व्यधापयत् । नित्यं भोगभूतस्य त्रीन्वारानारात्रिकक्रियाः ॥६३। चलन्पदात्पदान्मन्दं स जन्तुकृपया द्विपः । तन्मन्दगतयो ऽद्यापि तत्क्रमेणैव वारणाः ।६४। मर्यादयान्वितताहारविहारो विदधे ऽन्वहम् । शमजातमनःशैल्यः स चैत्यपरिपाटिकाम् ।६५। द्विपः स पर्वसद्वर्चधर्मकर्मा विनिर्ममे । साधुश्राद्धौघमध्यस्थो जिनयात्रोत्सवादिकम् ।६६। इत्येष करिणामिन्द्रः करुणामुदिताशयः । समयान्नमयामास वहून्राज्ञा वहूकृतः ।६७। अन्येद्युर्गजवैद्यस्तं गजमस्तंगतो-द्यमम् । वीक्ष्य ज्वरभराक्रान्तं राज्ञे व्यज्ञपयद्द्रुतम् ।६८। राजन् राजति यो युष्मज्जीवितस्यापि जीवितम् । कुम्भी रिपुयशः-शुम्भी सो ऽभवज्ज्वरजर्जरः ।६९। ततः पितुरिव भ्रातुरिव मातुरिव ज्वरम् । आकर्ण्य व्याकुलो ऽभ्यर्णे गजस्य स ययौ नृपः ।७०। अथाह पृथिवीजानिर्यः कुर्यान्नीरुजं गजम् । दद्यामद्यात्मनस्तस्मै राज्यार्धं राज्यमेव वा ॥ ७१ ॥ किं राज्यैस्त्वत्प्रसादान्नः किमल्पमिति जल्पिनः । गजराजरुजश्छेदे वैद्याश्चक्रुरुपक्रमम् ।७२। स रिपून्परिपूर्णायुर्जेतुं क्ष्मा-भिमान्पुनः । सार्धं रोगपरीतो ऽयं करी तोयं विमुक्तवान् ॥७३॥ अस्यां रुजि न जीवामि जगृहे ऽनशनं मया । इति च क्ष्मापतेरग्र्यलिक्षितिन्यस्ताक्षरः करी ।७४। मन्ये पुरस्य न श्रेयो मरणं करिणामिति । जगाम सामजन्मायं शनैरुपवना-वनीम् ॥७५॥ अथः क्षिप्त्वेव कर्माणि प्रक्षेप्तुं प्रतिमल्लवत् । उपाविक्षदसौ वक्षःस्पृष्टदृक्पूतभूतलः ॥७६॥ स्वर्गलक्ष्मी-कटाक्षाभस्तस्योपरि करिप्रभोः । पुष्पालम्यप्रभाशुभ्रो नृपेणाकारि मण्डपः ।७७। तस्याशुभविपक्षस्य पार्श्वपक्षेषु पार्थिवः । दापयामास सुरभिद्रव्यद्रवघटाछटाः ॥७८॥ श्राविका भावसाराश्च वन्दिनो गाथकास्तथा । इतश्चेतश्च तस्योच्चैर्जगुर्धर्मो-त्थनान्गुणान् ॥ ७९ ॥ भूरयः सूरयस्तस्य पुरस्तथ्यगिरः कथाः । कथयन्ति स्म पूर्वर्षिकीर्तिपीयूषवर्षिणीः ॥ ८० ॥

इत्थं शमसुखाम्भोधिमग्नो योधिसुधां पिबन् । शक्रादपि द्विपोत्तंसः स्वं स धन्यममन्यत ॥८१॥ तद्वृन्दं करिणः पार्श्वे निशीथे सुप्तमन्यदा । प्रदीप इव भूमीपः स्नेहादेकस्त्वजागरीत् ॥८२॥ रोगाभोगव्यथावीर्यश्लथधैर्यस्तदा गजः । परिमीलितदृग्देहभङ्गं दीनस्वरोऽकरोत् ॥ ८३ ॥ अथाह पृथिवीन्दुस्तं बन्धो रोगबलाकुलः । मा धैर्यतः पत स्तम्भ इव धर्मोऽवलम्ब्यताम् ॥८४॥ अन्नात्क्लेशावलीरङ्गादुदस्य न्यस्यतां मनः । नमस्कारपरावर्ते तदर्तेरुद्भवः कुतः ॥८५॥ इत्यवस्थाप्य नृपतिर्द्विपस्यातिचलं मनः । प्रापश्चयत्कृती पञ्चपरमेष्ठिनमस्कृतीः ॥८६॥ दृशौ बाष्पस्पृशौ बिभ्रद्वपुः सपुलकं पुनः । दूष्यन्करी नमस्कारान्भावनामसृणोऽशृणोत् ॥८७॥ सुखेन प्राप्तया दीर्घनिद्रया स्वप्नभागिव । इभप्रभुरसौ धर्मदिव्यः सौधर्मदिव्यगात् ॥८८॥ चन्दनागुरुकर्पूरकस्तूरीणां भरैरिभम् । अह्नि वह्निहुतं चक्रे शोकाश्रुप्लुतदृग्नृपः ॥८९॥ तस्य कालोचितां धर्मवृद्धां बन्धोरिव क्रियाम् । विधाय दुःखदीनात्मा ययौ धाम धराधिपः ।९०। दुःखदीर्घं दिनमयं गमयित्वा कथंचन । नृचन्द्रश्चन्द्रशालायां निशि शय्यामशिश्रियत् ।९१। श्वासोच्छ्वासोल्लसच्छोकशङ्कुसंकुल्यमानहृत् । निद्रामलभमानोऽयमित्यन्तः समचिन्तयत् ।९२। बहुदेशमहैश्वर्यश्रियापि मम किं तया । मृतेऽस्मिन्सिन्धुरे कृत्तधम्मिल्लेव बभूव या ॥ ९३ ॥ तारयेव विना दृष्टिरात्मनेव विना तनुः । कीदृशी भाति मे भूमिस्तेनेभविभुना विना ॥ ९४ ॥ दृगिन्द्रियेण किं मेऽद्य किमु कर्णेन्द्रियेण वा । येन दृश्यं न तद्रूपं येनाकर्ण्यो न तद्ध्वनिः ॥ ९५ ॥ भ्रमन्ती यत्र तत्रापि खिन्नेयं नयनद्वयी । तद्विलोकसुधापानं विना तसा क शाम्यतु ॥९६॥ पुरातनानि मे सन्ति यदि पुण्यानि कानिचित् । तैरध्वनि दृशोरेकवारमेतु स वारणः ॥९७॥ इति क्षितिपतिर्ध्यायन्नेत्राग्रे गजमैक्षत । अल्पकल्पद्रुनैपुण्यं पुण्यं पुण्यवतां यतः

॥ ९८ ॥ शोकाश्रूण्यथ हर्षाश्रूकुर्वन्नुर्वीन्द्र उत्थितः । आलिङ्गद्धस्तिनस्तस्य हस्तं हस्तोरसा रसात् ॥९९॥ दध्यौ च किं मयादर्शि स्वप्ने व्यसुरसौ गजः । मृत एवाथवा जीवन्नेष स्वमानिरीक्षितः ॥४००। मृतो न जीवतीत्युक्तिर्जिनशासनशास्त्रगा कथंचिदन्यथापि स्यात्किं वा कालेन केनचित् ॥१॥ इत्यनल्पविकल्पालिजल्पालिङ्गनोन्मदम् । नृपं द्विपवरः स्मेरविस्मयं दिव्यया गिरा ।२। हहा महात्मन्मोहस्त्वां किं ध्वान्तोऽर्कमिवाविशत् । यदन्यथा जिनमतग्रन्थोक्तमपि शङ्कसे ॥ ३ ॥ मृत एवास्मि नाजीवमहं राजीवलोचन । विचार्यो चन्द्रशालान्तर्दन्तिनामागतिः कुतः ॥ ४ ॥ दृष्टोऽस्मि यन्मृतो यन्मे रूपमेतच्च पश्यसि । अस्वप्नतुल्यं न स्वप्नाविमौ स्वप्नः क जाग्रतः ।५। तदनल्पयशःशिल्प तल्पमेतदलङ्कुरु । कथयामि यथा भूप स्वरूपमहमात्मनः ॥६॥ अथोदारचमत्कारस्तच्चकार धराधवः श्रोतुं तच्चरितं कण्डूप्रवणश्रवणद्वयः ॥ ७ ॥ स्वान्तस्यसुकृताम्भोधिसुधोर्मिनिभवाग्भिः । अवदन्मदमत्तालिकण्ठतालान्कठोरयन् ॥ ८ ॥ राजन्नाजन्मनिर्व्याजध्यातधर्मपिधायिना । मृत्युक्षणे व्यथौघेन मोहितोऽहमचिन्तयम् ।९। निलाहृतनृपद्रव्या न व्याधिं ये हरन्ति मे । तान्वैद्यान्यदि पश्यामि तन्नयामि यमालयम् ।१०। इति रौद्रतरध्यानैरधोऽधःपातिनं तदा । मामुद्दधार श्रीधर्मस्त्वद्गिरा जातजागरः ॥ ११ ॥ परमेष्ठिनमस्कारसुधाब्धिलहरीभरैः । क्षिप्तः सौधर्मकल्पेऽहं त्वन्मुखेन्दूदितैस्तदा ॥ १२ ॥ प्राप्य सौधर्मदेवत्वं ममेदृग्वैभवं कुतः । इत्याशु ध्यायतादर्शि तन्निमित्तं मया भवान् ।१३। तन्नागविरहार्तस्य सद्यः प्रीतिकृते तव । मुक्तोरुदिव्यरूपश्रीस्त्वामागां नागरूपभाक् ।१४। प्रभुत्वं स्वप्रसादस्य मयि पश्यति स द्विपः । तद्दिव्यं दर्शयामास स्वं वपू रविपूरुकृत् ।१५। जीवतो भोगदस्त्वं मे म्रियमाणस्य धर्मदः । तत्प्रभुश्च गुरुश्चासि शून्यहस्तेन नेक्ष्यसे ॥१६॥

पारिजाततरोः स्वर्गलक्ष्मीलक्षणलक्ष्मणः। गृहाणेदं फलं राजन्स्वैराजिह्मितामृतम् ।१७। सत्र एवेदमास्वाद्यं श्लाघ्योऽस्य रसनिर्झरैः। भगवद्भाग्यविधोः पङ्को वपुःसंकोचविप्लवः ॥१८॥ इदं निगदता तेन तद्दत्तं मुसदा फलम्। आदाय नृपतिः प्रीत्या प्रत्याह स हसन्वचः ॥ १९ ॥ आसन्नमुक्तपशुतासुलभं मोहमुद्वहन्। किं विवेकिन्फलस्वादं निशायां दिशसि स्वयम् ॥२०॥ सुरमुख्य ममेदानीं वपुषः पाटवेन किम्। नैन्श्चादिलाभलोभेऽपि जन्यं रजनिभोजनम् ॥ २१ ॥ आदत्तं दुःखपूराय विमुक्तं पुण्यपक्तये। स्यान्निशाभोजनं हन्त हंसकेशवयोरिव ॥ २२ ॥

तद्यथा पृथिवीकान्ताकुण्डल कुण्डिन पुरम्। अस्ति मुक्तास्रगाकारप्राकारपरिवेषभृत् २३ तस्मिन्यशोधनो नाम यशोधवलिताचनिः। बभूव नवद्रव्योपार्जकचूडामणिर्वणिक् २४ अभूतां भुवनानन्दचन्दनौ तस्य नंदनौ। रम्भाकुक्षिसरोम्भोजश्रीहंसौ हंसकेशवौ २५ ये दोषाभोजने दोषा धर्मघोषाभिधाद्गुरोः। वनं गताभ्यां ते ताभ्यां देशनासु निशामिताः २६ तौ बोधात्तं गुरुं साक्षीकृत्य कृत्यविवेकिनौ। रजनीभोजनत्यागं मुदितौ चक्रतुस्ततः।२७। अथ धाम्नि गतौ मध्यंदिने जनितभोजनौ। भागेऽष्टमेऽह्नस्तौ मातुर्वैकालिकमयाचताम्।२८। किं भोज्यमधुना वत्सौ यतो दुग्धप्रियौ युवाम्। नत्पुनः स्थितवेलायां निशि स्यात्त्किमुत्सुकौ।२९। इति मातुर्वचः श्रुत्वा तौ सत्यमिदमूचतुः। आवाभ्यां नियमान्मातस्त्यज्जे रात्रिभोजनम् ॥३०॥ युग्मम् ॥ इदं गर्भगृहस्थेन निशम्य वचनं तयोः। यशोधनेन सक्रोधं दध्ये मध्ये हृदस्तदा ॥३१॥ ध्रुवं धूर्तेन केनापि सुतौ मे विप्रतारितौ। ततः कुलक्रमायातं त्यजतो रात्रिभोजनम् ॥३२॥ तदवश्यं बुभुक्षार्तौ कृत्वा द्वित्रैर्दिनैः सुतौ। त्याजयिष्यामि तं रात्रिभोज्यत्यागकदाग्रहम् ।३३। एवं चिन्तयता तेन रम्भा स्थालार्थमागता। सुत-

योर्भोजनं देयं मेति च्छद्मं न्यवार्यत ॥३४॥ भर्तुराज्ञावशादेषा तावेत्यावददित्यथ। अन्नपाकोऽधुना भावी पक्वान्नाद्यस्ति वस्तु न ॥३५॥ किं च रात्रौ समं पित्रा युवाभ्यां भोज्यमेव यत् । कुलीनास्ते सुता ये स्युः पितृमार्गानुगामिनः ।३६। स्मित्वा तावूचतुर्मातः सन्मार्गः सेव्यते पितुः । सुपुत्रैरपि किं कूपे पतंस्तातोऽनुगम्यते ॥३७॥ तर्हि सम्प्रति लप्स्येथे न युवां भोजनं सुतौ । मात्रेत्युक्तौ ततो मौनं कृत्वा तौ जग्मतुर्बहिः ।३८। श्रेष्ठिनः सुतयोर्वाक्यं मिथ्यादृष्टेर्जगत्प्रियम् । विशेषाद्दोषकृज्जज्ञे ज्वरार्तस्य हविर्यथा ।३९। भवत्या भोजनं देयं रजन्यामेव पुत्रयोः । इत्थमत्यर्थशपथैः श्रेष्ठी रम्भा-वारयत ॥४०॥ जनन्याथ रजन्यां तावागतावर्थितावपि । न भोजनं महासत्त्वचक्रिणौ चक्रतुस्तदा ॥४१॥ द्वितीयेऽह्नि शठश्रेष्ठः श्रेष्ठी तौ विशदाशयौ । क्रयविक्रयलीलासु न्ययुङ्क्त महतीष्वसौ ।४२। तथा लाभरसाभोगभङ्गीभिस्तौ विले-सतुः । तदेव कुर्वतोः कर्म यथागान्निधनं दिनम् ॥४३॥ तौ धाम यामिनीयामसमये समुपागतौ । अभुक्त्वैवापतुः स्वापं तदभिग्रहसाग्रहौ ॥ ४४ ॥ इति व्यवहृतिं पित्रा कार्यमाणौ रसेन तौ । अजातभोजनावेव प्रसुप्तौ पञ्च शर्वरीः ॥४५॥ षष्ठेऽह्नि निशारम्भे संभेजतुरिमौ गृहम् । आचष्ट च वचः श्लक्ष्णं विनयेन यशोधनः ।४६। वत्सौ यत्सौख्यदं मे स्या-दिष्टं स्पष्टं तदेव वाम् । इति प्रत्ययतः किंचिद्वच्मि तच्च विरच्यताम् ॥४७॥ निशाहारपरीहारं न वेद्मि युवयोर्ध्रुवम् । तदीदृशि भृशक्लेशे युवां कार्ये नियोजितौ ।४८। यदभुक्तवतोर्भुङ्क्ते युवयोर्न जनन्यपि । अथास्यास्तदभूत्षष्ठ उपवासः प्रयासकृत् ॥४९॥ तत्रां षण्मासजन्मासौ स्वसा कुसुमकोमला । स्तन्यान्यलभमानाथ कियन्म्लाना विलोक्यताम् ।५०। म्लानिमस्याः शिशोर्वीक्ष्य कारणं मम पृच्छतः । आख्यद्भवदनाहारपूर्वं सर्वमयं जनः ॥५१॥ तद्भुज्यतां यथा भुङ्क्ते

भवन्मातापि संप्रति । कृपासारो शिशोरस्यां मा भूत्पित्तादिभूर्व्यथा ॥५२॥ पूर्वं निशाया यामार्धं प्रदोषः कीर्त्यते बुधैः प्रत्यूषं पश्चिमं तेन सा त्रियामेति विश्रुता ॥५३॥ इदानीं भोजनं तद्वा न निशाभोजनं भवेत् । यामिनीघटिकायुग्ममपि नाद्यापि याति यत् ॥५४॥ इति तातगिरा भिन्नः क्षुधा च विधुरीकृतः । हंसः क्लेशाहतावेशः केशवाननमैक्षत ॥ ५५ ॥ इति ज्यायांसमुद्वीक्ष्य भ्रातरं कृत्यकातरम् । व्याचष्ट केशवः कष्टजनकं जनकं प्रति ॥५६॥ यस्ते सुखकरो भावः करोमि तमहं पितः । न ते सुखायते तत्किं यन्मे पातकघातकम् ॥५७॥ यज्जनन्यादिवात्सल्यं तच्छल्यं धर्मकर्मणः । स्वकर्मफलभुक्सर्वः कः कस्यार्थे करोत्वघम् ॥५८॥ मुहूर्तोऽह्नो मुखेऽन्ते च निशासन्नो निशासमः । तत्राापि न भोक्तव्यं निशैवास्त्वधुना पुनः ॥५९॥ तद्वारं वारमेवं न वाच्योऽहं भवता पितः । कार्येऽस्मिन्विहिते शान्तिं क्व लभे भवतापितः ॥६०॥ अथैनमेनसां धाता तत्पिता कुपितोऽवदत् । लङ्घसे यदि मद्वाचं मुञ्च लोचनवर्त्म तत् ॥६१॥ ततोऽथ विषभृद्वृन्दकन्दरादिव मन्दिरात् । स निःससार संसारकारणं ममतां त्यजन् ॥६२॥ हंसं तमनुगच्छन्तं कृच्छ्राद्धृत्वा यशोधनः । प्रलोभ्य बहुभिर्वाग्भिर्भोजनाय न्यवीविशत् ॥६३॥ पुरग्रामनगारामविलङ्घनघनक्रमः । स ययौ सप्तमेऽप्यह्नि तथैवाकेशवान्पथि ॥६४॥ अटन्नटव्यां कुत्रापि निशीथसमयेऽथ सः । घनयात्राजनं यक्षायतनं किंचिदैक्षत ॥६५॥ तत्रयात्राजना यक्षगृहे सज्जितभोजनाः । हृष्यन्तः समभाषन्त तमागच्छन्तमुत्सुकाः ॥६६॥ एह्येहि भोज्यमादेहि देहि पुण्यानि पान्थ नः । पश्यामः काममतिथिं वयमारब्धपारणाः ॥६७॥ कीदृग्व्रतं व्रतं यस्य निशि पारणमित्यथ । केशवो विकसत्पुण्यसन्तानस्तानभाषत ॥६८॥ तेऽवदन्मानवाख्योऽयं यक्ष दक्षो जगन्मुदे । स्यादस्याथ महायात्रा पुण्यपात्रायितस्थितिः ॥६९॥

कृत्वोपवासं दिवसे निशीथेऽतिथिमादरात्। भोजयित्वा विधातव्यं पारणं पुण्यकारणम् ७० तदीदृक्षोपवासानां पारणायोपमस्पृशाम्। त्वं भवातिथिरस्माकमाकस्मिकसमागमः ७१ स जगौ नेह भुञ्जेऽहमंहःकारिणि पारणे। रजन्यां भोजन न स्यादुक्तमुक्तमिदं यतः ।७२। उपवासेऽत्र जायेत गुणो गुञ्जासमो न वा। ध्रुवं दोषस्तु दोषायां भोजने भूधराधिकः ॥७३॥ उपवासोऽप्यसौ न स्याद्यत्रैवं निशि भुज्यते। धर्मशास्त्रेष्वहोरात्राभोजने स हि कीर्त्यते ७४ धर्मशास्त्रविरुद्धं ये तपः कुर्वन्ति दुर्धियः। ते यान्ति दुर्गतिं धूर्ताः कृतद्रव्यकृतो यथा ७५ तेऽप्यशंसन्नसावेव देवस्यास्य व्रते विधिः। युक्तैरपि न शास्त्रोक्तैर्विरच्यास्य विचारणा ॥७६॥ अवश्यमतिथिं कंचिद्भोजयित्वाद्य भुज्यते। इति तद्दर्शनेऽस्माकं रजनिर्विपुलाऽजनि ॥७७॥ तत्पूर्णे पारणेऽस्माकमस्मिन्भव पुरःसरः। इत्युक्त्वोत्थाय ते सर्वे तस्य पाणिपदेऽलगन् ॥ ७८ ॥ पुण्येशः केशवश्चैनमप्यवाजीगणद्गणम्। एकस्तदैव यज्ञाग्नाद्भीष्माङ्गो निर्ययौ नरः ॥७९॥ रे दूषयसि मे धर्मं मद्भक्तानवमन्यसे। भुंक्ष्व शीघ्रं न चेन्मुण्डं शतखण्डं करोमि ते ॥८०॥ इत्याक्षिप्य गिरा तीक्ष्णरूपक्षया मंक्षु केशवम्। सोऽथमुद्गमयामास मुद्गरं विकरालदृक् ॥८१॥ हसन्हंसानुजोऽथाह किं क्षोभयसि यक्ष माम्। भवान्तरोद्भवद्भूरिभाग्यद्वेर्मृत्युभीः क्व मे ॥८२॥ आचचक्षेऽन्तरिक्षेऽथ यक्षः स्वान्किङ्करानिति। एतद्धर्मगुरुर्धृत्वानीय वध्योऽस्य पश्यतः ॥८३॥ अथाकाशे कशापाशभृद्भिस्तत्किंकरैर्धृतम्। आर्तघोषमपि धर्मघोषमैक्षत केशवः ॥८४॥ त्वं शिष्यं भोजयेदानीं त्वां वा हन्मि शठं हठात्। इत्युक्तस्तेन यक्षेण मुनीशः केशवं जगौ ॥८५॥ अप्यकृत्यं सृजेद्देवगुरुसङ्घकृते कृती। मामी मामीदृशा घ्नन्तु त्वद्गुरुं कुरु भोजनम् ८६ धर्माख्यानेऽपि यो वक्ति विधिमन्यापदेशतः। सत्त्वी मृत्युभिया दत्तां स पापेऽनुमतिं कुतः

॥८७॥ तन्नूनं मद्गुरुर्नीयमियं मायास्य मायिनः । इति ध्यात्वाथ मौनेन यक्षोघ्नसुतः स्थितः ॥ ८८ ॥ युग्मम् ॥ मुनौ मुद्गरमुधम्य त्वद्गुरुं हन्मि मुंक्ष्व वा । इति कोपकरालाक्षो जगौ यक्षोऽथ केशवम् ॥८९॥ सोऽपि व्याचष्ट रे मायिन्ममायं न गुरुः स हि । तादृक्षचारुचारित्रपात्रं न त्वादृशां वशः ॥९०॥ त्वद्गुरुस्त्वद्गुरुः सोऽस्मि कृपाढ्ये मुञ्च रक्ष माम् । इत्यारटन्नथ मुनिस्तन्मुद्गरहतोऽपतत् ॥९१॥ तं व्यसुं वीक्षमाणस्य केशवस्याग्रतस्ततः । एल्लादत्त गिरं यक्षो मुद्गरभ्रमिभीषणः ॥९२॥ संप्रत्यश्नासि चेत्तत्ते जीवयामि गुरुं जवात् । वितरामितरामृद्धिं प्राज्यं राज्यं च किंचन ॥९३॥ पतन्मुद्गरनिर्घातनिर्विघ्नगगनक्रमः । पथि कीनाशहर्म्यस्य पथिकीक्रियसेऽन्यथा ॥९४॥ ततः पुण्यसुधासिन्धुहंसो हंसानुजो हसन् । दशनांशुभिपप्रेक्ष्यमाणसत्त्वगुणो जगौ ।९५। नैवायं मद्गुरुः किंच त्वया जीवन्ति चेन्मृताः। तदमीषां स्वभक्तानां सर्वाञ्जीवय पूर्वजान् ॥९६॥ किं राज्यदानशक्तेन नामी राज्यभृतः कृताः । किं भापयसि मां मृत्योः का भीर्नियतभाविनः ॥९७॥ एवं नियमवाग्दक्षं यक्षोऽयं क्षान्तिमानिव । प्रहृष्टो हृष्टरोमालिः समालिङ्ग्य जगाद तम् ।९८। साधु मित्र धियां पात्र न स्यादेष गुरुस्तव । मृता मया न जीवन्ति नैव राज्यं च दीयते ॥९९॥ इत्थमुक्तेऽथ यक्षेन्द्रे साट्टहासं सहसोत्थितः । मुनिरूपं परित्यज्य स्वं ययौ यक्षकिंकरः ॥५००॥ विस्मयस्मेरवक्त्राक्षमनया चित्रमायया । उवाचाचलाचित्तेशं केशवं यक्षपुङ्गवः ॥१॥ खिन्नः ससोपवासैस्त्वं क्लिष्टश्चाध्वविहारतः । विश्रम्येह निशामह्नि सहैभिः कुरु पारणम् ॥२॥ इत्युक्त्वादर्शयत्तस्मै स तल्पं शक्तिकल्पितम् । केशवोऽस्मिन्विशश्राम श्रेयसीव यशाश्रयः ॥३॥ यक्षयात्राजनैर्यक्षादिष्टैः संवाहितक्रमः । केशवोऽकलयन्निद्रामुन्निद्रसुकृतक्रमः ॥४॥ विभावरी विभातेयं निद्रा विद्रा-

व्यतामिति । तं प्रत्यक्षो जगौ यक्षो निद्रातन्द्रालुलोचनम् ॥५॥ अथ निद्रादरिद्राक्षो विश्वं वीक्ष्य दिनोज्ज्वलम् । नभोऽर्कभूषितं चेति चिन्तयामास केशवः ॥६॥ ब्राह्म एव मुहूर्तेऽहमन्वहं कृत्यनिष्ठधीः । स्वयं यामि त्रियामान्तयामसुप्तोऽप्यनिद्रताम् ॥ ७ ॥ अह्नि यामार्धमात्रेऽपि त्रियामार्धशयोऽप्यहम् । स्वयं नाथ विनिद्रत्वमासदं किमिदं किल ॥ ८ ॥ दिवसेऽप्यद्य किं निद्राविवशे मे दृशौ भृशम् । किं नान्तुः पद्मवीकाशसुरभिः श्वासमारुतः ॥ ९ ॥ इति शङ्काजुष यक्षस्तमूचे मुञ्च जिह्मताम् । प्रातःकृत्यानि कृत्वाशु भूहार कुरु पारणम् ॥१०॥ सोऽप्युवाच न वञ्च्योऽहं यक्ष दक्षतया तव । विशालेव निशाद्यापि त्वमान्योत्थमहर्महः ॥११॥ इत्यस्य जल्पतो मूर्ध्नि पुष्पवृष्टिर्दिवोऽपतत् । स त्वं धीमञ्जय जयेत्यभूत्नभसि भारती ॥१२॥ पुरः सुरमसौ कंचिचञ्चदर्चिषमैक्षत । न यक्षं न च यक्षौको न च यक्षार्चकान्वने ॥१३॥ स्मितांशुकुसुमश्रेणिशृङ्गारसुरभीकृतम् । मुखश्रीलक्षितप्रीतिरित्यादृत्त वचः स च ॥१४॥ एकः पुण्यवतां रत्नं निःसपत्नगुणो भवान् । भवादृशां प्रसूत्यैव रत्नगर्भा बभूव भूः ॥१५॥ शृणु सत्त्वभराश्रान्तस्वान्त वृत्तान्तमान्तरम् । मध्येसभमिति प्रोचैश्चक्रे शक्रस्तव स्तवम् ॥ १६ ॥ अहो वरेण्यतारुण्यः पुण्यवान्सुखलालितः । यशोधनस्य वणिजस्तनुजो मनुजोत्तमः ॥ १७ ॥ रजनीभोजनत्यागात्केशवः क्लेशकोटिभिः । अचलाचलचैतन्यश्चाल्यते नामरैरपि ॥ १८ ॥ युग्मम् ॥ तदाकर्ण्य तदा कर्णतप्तत्रपुसमं वचः । स्वभावादाभवादेव देवत्वेऽपि सुखोचिते ॥१९॥ दुःखिनोऽन्यप्रशंसाभिर्देवः सर्वाभिसारवान् । महर्द्धिर्वह्निनामाहमिहागां त्वां परीक्षितुम् ॥ २० ॥ युग्मम् ॥ त्रैलोक्यचालनोत्तालशक्तिनापि न ते मया । रोमाप्यचालि नियमाद्वीरः कोऽस्तु भवानिव ।२१। वह्निना परितप्तोऽपि

मूलोत्तरगुणाग्रणीः। सुवर्ण इव सद्वर्णभूमिभ्रातर्भवानभूत् ।२२। यक्षादिक्षोभसंरम्भो यः कश्चिद्विदधे मया । तं मयि प्रणयं तन्वन् त्वं सहस्व सहस्व भोः ।२३। किं च याचस्व किंचिन्मां क वा याञ्चा भवादृशाम् । त्वद्वाक्यपयःसिक्तो रोगी नीरुग्भविष्यति ।२४। यच्च किंचित्कदाचित्त्वमातुरश्चिन्तयिष्यसि । भविष्यलाशु तत्पुण्यशुभानां किमु दुर्लभम् ।२५। कस्यापि नगरस्यान्ते त्वां मुञ्चाम्यधुना पुनः । क्लेशावेशाय तुच्छापि त्वादृशामंहिचारिका ।२६। इत्युक्त्वा श्रुतिदीप्ताशास्तिरोधत्त सुरोत्तमः । प्रान्ते पुरस्य कस्यापि स्वमपश्यच्च केशवः ।२७। चतुर्भिः कलापकम् । प्राचीनाचलचूलाग्रचुम्बिन्यम्बुजबान्धवे । कृतप्रातःक्रियोऽथाय प्राचलत्पुरमीक्षितुम् ।२८। धर्माख्यानगिराहूतः स जीमूतरवश्रिया । आरामे वामतः सूरिं सूरनामानमानमत् ।२९। देशनारसपीयूषरसनप्रमृतश्रुतिः । सव्यक्तवासनस्तत्र युक्तमासनमासदत् ।३०। पुरस्य तस्य साकेतनाम्नः स्वामी धनञ्जयः । देशनान्ते मुनीशं तं मुदा नत्वा व्यजिज्ञपत् ।३१। प्रभो जरापराभूतो व्रतग्रहचिरस्पृहः । अपुत्रः कुत्र राज्यं स्वं न्यस्यामीत्यस्मि दुःखितः । ३२ । मत्पुण्येनेव मूर्तेन पुंसा दिव्येन केनचित् । स्वप्ने ममेति शान्तेन निशान्तेऽद्य न्यवेद्यत ।३३। प्रातर्देशान्तरादेति यस्ते गुरुपुरः स्थिते । योग्ये तस्मिन्भुवं न्यस्य भव पूर्णमनोरथः ।३४। अथास्तनिद्रो निर्माय प्रातःकृत्यमिहागमम् । अपश्यं चैनमायातमाकारख्यातसत्कुलम् ।३५। अथादिशद्गुरुर्ज्ञानी केशवस्य शुभात्मनः । वृत्तं निशाशनत्यागनिश्चयामोदसुन्दरम् ॥३६॥ मम केनोपदिष्टोऽयमिति पृष्टेऽथ भूभुजा । वह्निनामुष्य सत्कर्महृष्टेनेति गुरुर्जगौ ।३७। इति श्रुत्वा गुरुं नत्वा सत्वाधिकगुरुः पुरम् । केशवेन समं प्रीतः प्रविवेश विशां विभुः ३८ स्वराज्ये केशवं भूमानभ्यषिञ्चन्महोत्सवैः ।

स्वयं सूरगुरोः पार्श्वे तदैव व्रतमग्रहीत् ।३९। ययौ श्रीकेशवो राजा नन्तुं देवान्विवेकवान् । सामात्यस्तत्र चैत्येषु पताका-
भासुरे पुरे ॥४०॥ विहितातुल्यमङ्गल्यः स्वसौधे शुद्धधीर्व्यधात् । दुःस्थितानां स दानेन तारणः पारणस्थितिम् ॥४१॥
प्रतापाक्रान्तसीमालभूपालः पालयन्प्रजाम् । स राज्यं न्यायनैपुण्यहृष्यन्मन्त्रिजनोऽतनोत् ।४२। कदाचित्पितुरुत्कण्ठामाप
भूपो गवाक्षगः । ददर्श च पथि श्रान्तं भुवि यान्तं यशोधनम् ।४३। अनुधावत्परिजनप्रकरः सत्वरस्ततः । सौधादुत्तीर्य
नृपतिः पितुः पदयुगेऽपतत् ।४४। तादृग्विभूतिपर्यङ्कोऽप्यत्र रङ्कोपमाश्रयः । कुतः पितरितोऽसीति प्राह च प्रीतिदुःखितः
॥४५॥ नन्दनस्य नरेन्द्रत्वपदेन मुदितोऽपि सन् । दुःखाश्रूणि दधद्गेहवार्तामाह यशोधनः ॥४६॥ धीमन्गते त्वयि
तदा हंसो भोक्तुं निवेशितः । भूमौ पपात संजातभ्रमिर्भुक्तार्धभोजनः ॥४७॥ एतत्किमिति तन्मात्रा दीपे दूरादुपाहृते ।
तद्ग्रेऽदर्शि गरलं तुलापट्टे च पन्नगः ।४८। धर्मज्ञं मन्यमानेन त्वां तदा तदुदाहृतेः । कुटुम्बेन महाक्रन्दश्चक्रे दिक्च-
क्रविक्रमी ॥४९॥ तदाक्रन्दमिलल्लोकवर्ती विषभिषग्वरः । एको हि मान्त्रिकाह्वानकृतोद्यममुवाच माम् ॥ ५० ॥ न
कार्यः क्लेशलेशोऽपि सर्पस्यास्य विषक्रमैः । सटत्स्फुटद्गलत्कायो मासमेवैष जीवति ।५१। जनं विसृज्य शय्यायां
शायितोऽथ त्वदग्रजः । स्थितोऽस्मि तत्स्वरूपं च ज्ञातुं पञ्चदिनीं गृहे ।५२। रोमरोमपतच्छिद्रं मत्वाथ मृतमेव तम् ।
त्वां द्रष्टुं निरगां गेहात्सुकृतैर्दर्शितोऽसि च ।५३। विषग्रासदिनान्मासः पूर्णः क्ष्मामद्य तो मम । त्वज्ज्येष्ठोऽद्य मृतो
वास्तु म्रियतां वा हतोऽस्मि हा ॥५४॥ योजनानां शतमितस्तत्पुरं मत्पुराद्भवेत् । कथं याम्यद्य तत्राशु जीव-
द्बन्धुमुखोत्सुकः ।५५। तद्वार्तार्त इति ध्यायन्नेव हंसस्य पार्श्वगम् । स्वमैक्षत ततः क्ष्मापः सतातं सपरिच्छदम् ।५६।

॥युग्मम्॥ कुथिताङ्गातिदुर्गन्धत्रस्तबन्धुकदम्बकम् । एकयैवाम्बया युक्तं रोदनोच्छूननेत्रया ॥५७॥ अर्तिभिर्नरकार्तीर्ना
सारोद्धारैरिवार्दितम्॥ आसन्नमृत्युं भूक्षिप्तं दुःखी हंसं ददर्श सः ॥५८॥युग्मम्॥ तद्व्यथाव्यथितोऽपीद्दूरमागंतुता-
गतौ। कुतःशक्तिरिति ध्यायन्सोऽपश्यद्वह्निदैवतम् ।५९। मा कार्षीर्विस्मयं मत्वावधिज्ञानात्तव व्यथाम् । आगां कर्तुं वरं
सत्यमित्युक्त्वागाद्दिवं सुरः ॥६०॥ हृष्टेन केशवेनाथ पाणिस्पृष्टेन पाथसा । हंसः सिक्तश्च रोगौघमुक्तश्च द्रुतमुत्थितः
॥६१॥ पूर्वस्माद्युत्तरेणैव वपुषा विपुलश्रुतौ । जातेऽस्मिन्बन्धुवर्गस्य प्रावर्तन्त महोत्सवाः ॥६२॥ एवं प्रभावमुद्भाव्य
केशवस्य नरेशितुः । दधौ व्याधिवधाय स्वे मूर्ध्नि पादोदकं न कः ॥६३॥ किं वर्ण्यः केशवोर्वीशः सिषेवे यत्पदोदकम्।
भूतभाविरुजो भेत्तुमासमुद्रं नृपैरपि ।६४। भाविरोगभिया स्वर्णकलशे क्षिप्तमोकसि। न जीवितमिवारक्षि केनोर्व्यां तत्प-
दोदकम् ॥६५॥ सद्यः प्रभावमासाद्य भूपतेरिति धर्मजम् । रात्र्याहारपरीहारपरा जज्ञे धरा स्वयम् ॥६६॥ अथायं
दिग्जयं कृत्वा स्थित्वा साकेतपत्तने । पात्वा चिरं धरामत्रामुत्राभूत्परमः सुखी ॥६७॥

॥ इति रजनीभोजनत्यागे केशवकथा ॥

इत्थं हंसस्य विपदं संपदं केशवस्य च। श्रुत्वा मुखाद्गुरोः स्वर्गिन्कथमश्नि फलं निशि ।६८। सुरा ह्यविरता नित्यं
श्रावका विरतिस्पृशः। तदेवमावयोर्भेदो जज्ञे पुण्याढ्यपार्थिव ।६९। तदभ्यर्च्य जिनं धर्मिन् धर्माशाबुदयस्पृशि। अङ्गरो-
गविभङ्गाय तदिदं फलमाहरेः ।७०। इत्युदित्वा तिरोभूते सुरे दध्यौ नरेश्वरः । अहो जीवन्मृतोऽपीभः कियन्मय्युपकारकः
।७१। त्रिभिर्विशेषकम्॥ तदस्य नागनाथस्य नाम्ना धाम जिनेशितुः । कारयिष्याम्यनशनस्थाने कैलासशैलवत् ।७२।

इत्यादिमधुरध्वानो गमयित्वा तमीमिमाम् । जिनपूजनपूतात्मा भूपस्तत्फलमाहरत् ।७३। तदैव फलतस्तस्मादकस्माद्भूप-
तेर्वपुः । सरोजमिव संकोचमुन्मुमोच विरोचनात् ।७४। भूपः स्वभावसुभगो धूतसंकोचविक्रियः । विश्वदृक्पेयतां प्राप
दिनमुक्तेन्दुधामवत् ॥७५॥ अङ्गपाटवमङ्गल्यगर्जनागरगौरवः । व्रजन्नहानि भूजानिर्जानीते स्म न कानिचित् ॥७६॥
क्रीडदन्तःपुरीलोकस्तोकीभूतत्रपाभरः । निनाय नायकः क्ष्मायाः प्रीत्या कत्यपि वासरान् ॥७७॥ उत्पन्ननन्दनानन्दसुधा-
स्नानवशेन्द्रियः । स मेने कत्यपि समाः स्वसमान्नाकिनोऽपि न ॥७८॥ वनक्रीडारसाधीनो रसाधीशः कदाप्ययम् ।
तद्द्विपानशनस्थानं वीक्ष्य दुःखादचिन्तयत् ॥७९॥ हा मां कामान्धहृदयं भवभावा व्यलोभयन् । स्वभङ्गभीरवो यन्मे
कृत्स्ननाशं वितेनिरे ॥८०॥ नात्रोपकारिणस्तस्य करिणः कर्तुमीहितः । मोहोल्लासादिह हहा प्रासादोऽपि न कारितः ॥८१॥
एवं ध्यानपतच्चित्तोऽमात्यानित्यादिशन्नृपः । विपुलं द्विपनाम्नात्र कार्यतां जिनमन्दिरम् ॥८२॥ अहा मासेन वर्षेण
दशवर्ष्यापि भोजनम् । करिष्यामि जिनं प्रेक्ष्य प्रासादेऽत्र प्रतिष्ठितम् ॥८३॥ नृमाणिक्य न शक्योऽयं तरीतुं निश्च-
यार्णवः । इत्येष लपतोऽमात्यानवमत्याविशत्पुरम् ॥८४॥ जिनधामद्रुताधानबद्धारम्भास्तदैव ते । पुण्याहमङ्गलं
तत्र मन्त्रिमुख्या व्यधापयन् ॥८५॥ हृदुत्सारितसंसारव्यापारः सारधर्मधीः । अकृताहार एवाष्टौ नृपो निन्ये दिनानि सः
॥८६॥ ततः प्रत्यूपशेषायां रजन्यां जातजागरम् । देवः स एव प्रत्यक्षीभूय भूपमभाषत ।८७। जय त्वं कीर्तिविस्तीर्ण
निस्तीर्णभवसागर । प्रतिपन्नमनोदार्ढ्य श्रीपुण्याढ्य महीपते ।८८। अवधिज्ञानतो ज्ञात्वा त्वद्दुःपूरं तवाग्रहम् । लोकोत्तरं
स्वरूपं न किंचिदनेव भावि ते ।८९। शुभापुर्यां तत्तपनाञ्चिश्लिष्ट ज्ञानभास्करात् । बिम्बं निर्माय जैनेन्द्रं प्रतिष्ठाप्य

यथाविधि ।९०। अस्थापयं वने तस्मिश्चैत्ये पूर्णीकृते क्षणात् । अहं तवैव भाग्यानां सम्प्रति प्रतिहस्तकः ॥९१॥
तत्कल्याणनिधे तूर्णमेहि पूर्णमनोरथः । जिनं चन्द्राननं नत्वा नमस्यो जगतां भव ॥९२॥ एवं देवस्य तस्योक्तं श्रुत्वा
दध्यौ धराधिपः । अहो कियानयं मेऽभूदुपकारी द्विपामरः ९३ पञ्चभिः कुलकम् । नवांमासादतीर्थेशदर्शनोत्कण्ठितस्ततः ।
पुरःकृतसुरः पृथ्वीपतिः प्रति वनं ययौ ।९४। प्रासादमौलिमारूढां नृत्यन्त्याः सुकृतश्रियः । लोलं हस्तमिव प्रेक्ष्य पताकां
मुमुदे नृपः ॥९५॥ कल्याणकलशं पश्यन्मौलौ जिनगृहश्रियः । मुक्तिप्रस्थानकृद्भूपः शकुनेनान्वमोदत ॥९६॥
चान्द्रीः कलाः शिलाभावं गमयित्वेव निर्मितः । जिनालयोऽसौ भूपस्य निन्येऽक्षिकुमुदं मुदम् ।९७। ततो न्यरूपयत्तत्र
भूवरस्तोरणं पुरः । पुण्यश्रीदूरविधृतस्वयंवरणमाल्यवत् ।९८। चैत्यद्वारं ददर्शासौ सद्धर्मपुरगोपुरम् । सतां यत्र स्थितानां
स्याज्जिनः सुलभदर्शनः ।९९। निर्लोयतस्य निर्जेतुमधर्मं सद्मभूपतेः । गुप्यद्गुरूमिवापश्यत्स तुङ्गं रङ्गमण्डपम् ६००
गुर्वीरुर्वीश्वरोऽद्राक्षीद्रम्यास्त्रिकचतुष्किकाः । धर्मस्य श्रद्धया सार्धं विवाहे वेदिका इव ।१। असंख्यसुखसंप्राप्तिनित्या-
नन्दात्मसेवितः । साक्षान्मोक्ष इव प्रीत्यै राज्ञोऽभूद्गूढमण्डपः ।२। अथार्हत्प्रतिमामर्ककोटिकान्तिकृतामिव । पश्यन्स
भूपश्चिक्षेप भवकोटिभवं तमः ३ रूपातिशयविस्फूर्तौ विभोर्मूर्तौ नरेशितुः । स्पर्धयेवाक्षियुग्मस्य जगाम स्थिरतां मनः
।४। आनन्दामृतमग्नस्य लीनं तस्य मनस्तथा । यथा जिनं च विश्वं च स्वं च नो बुबुधे तदा ।५। ममत्वमसृणीभूतः
प्रभूताद्भुतशक्तिभृत् । आरूढः क्षपकश्रेण्यां शुक्लध्यानामलो नृपः ।६। तस्य घातीनि कर्माणि दग्धानि ध्यानवह्निना
तद्वियोगादिव भवोपग्राहीण्यप्यगुः क्षणात् ७ तस्यामिव सहाय्यायां घटिते घनमेलतः । नृपेऽस्मिन्कृतसंकेते ज्ञानमो-

क्षश्रियौ समम् ॥८॥ अथ विज्ञाय तज्ज्ञाननिर्वाणमवनीविभोः । मूढत्वेनैव मन्वानान्वज्रपातमिवोत्सवम् ॥९॥
हा तातेति हहा भर्तरिति हा त्रायकेति च । नन्दनान्तःपुरीलोकान्क्रन्दतः प्रतिबोध्य सः ॥१०॥ तदा मुदागतैः सम्यग्दृ-
ष्टिभिस्त्रिदशैः सह । कृत्वौर्ध्वदेहिकं कृत्यं स्वमित्रस्य शुभात्मनः ॥११॥ पुण्यसाराभिधं न्यस्य पुत्रं राज्येऽत्र भूपतेः ।
अनुशास्य जिनाचार्यां द्विपदेवो दिवं ययौ ॥१२॥ चतुर्भिः कलापकम् ॥

॥ इति हंसकेशवनिदर्शनान्विता पुण्यप्रामाण्ये पुण्याढ्यभूपतिकथा ॥

तदेवं देव जानीहि पद्मोत्तरनृपोत्तर । प्रभावं प्राच्यपुण्यानां पुण्याढ्यस्य निदर्शनात् ॥१३॥ किं च कर्मवशं विश्व-
मवश्यमिदमीश तत् । मया कृतमदः कार्यो न कदाचिदयं मदः ॥१४॥ जडः कार्ये सुनिष्पन्ने मयाकारीति माद्यति ।
तस्मिन्पुनरनिष्पन्ने दोषं दैवाय यच्छति १५ पूर्वगर्वग्रहक्रीडाव्रीडापीडातुरस्ततः । अभ्यधाद्वसुधाधीशः स सुधाबन्धुरां
गिरम् ॥१६॥ स्वच्छन्दं छन्दवृत्त्या ये रञ्जयन्ति महीभुजम् । लक्ष्मीहृतिकृतोपायाः शत्रवस्ते न मन्त्रिणः ॥१७॥
अप्रवृत्तिगतं भूत्वा मुदे भूपं स्तुवन्ति ये । ते पाययन्ति सर्पींषि कुवैद्या इव सज्वरम् ॥१८॥ अच्छन्दवादिनो नीतिपात्रं
मन्त्रीश मन्त्रिणः । भवन्ति भूभुजां भाग्यवैभवेन भवादृशाः ॥१९॥ युक्तं दुर्गतिकूपस्य कण्ठाग्रादिव गर्वतः । बालको
जनकेनेव त्वयाहमपवाहितः २० युक्तमुक्तं च कर्माणि प्रमाणं प्राक्तनानि यत् । दुःस्थादुःस्थव्यवस्थेयमन्यथा प्रथते
कथम् ॥२१॥ कर्माणि न प्रमाणं चेत्तत्सर्वोऽपि न किं प्रभुः । अवश्यं स्वस्य नैव स्यात्कोऽपि काप्यल्पचिन्तकः ॥२२॥

१ अद मया कृतमित्यन्वय

विस्मयः । गत्वाशु नृपमित्यूचे चञ्चद्रोमाञ्चकञ्चुकः ॥४०॥ प्रभो पञ्चविधोदञ्चन्मणिसंकोचयरोचिषः । नृत्यन्त इव केतूना-
मञ्चलैर्वायुचञ्चलैः ॥४१॥ सुस्वादनादाः प्रासादाः प्रसर्पन्तः पुरोपरि । निपतन्तो निरूप्यन्ते नभसः केलिकानने ॥४२॥
युग्मम् ॥ अथ कौतूहलोत्तालश्चचालाच्छपरिच्छदः । हयैः कतिपयैः केलिवनाय क्षितिनायकः ॥४३॥ स यावज्जगतीहारः
प्राकारद्वारमागमत् । गलातुरः पुरस्तावदारामपतिरापतत् ॥४४॥ वनस्वरूपं भूपेन पृष्टः संहृष्टमानसः । स जगौ जगदा-
नन्दरसनिस्यन्दिनीं गिरम् ॥४५॥ स्त्रास्मिन्कश्चन चन्द्रांशुनिवहस्य रहस्यवत् । धाम्नां धाम त्वदारामममाजगाम महामुनिः
॥४६॥ आगत्य कापि शम्पाभसंपचम्पककाननात् । अमु ननाम कामस्याङ्गिनी शक्तिरिवाङ्गना ॥४७॥ कुसुमद्रुममौ-
लिभ्यः समुत्तीर्य तदा मुदा । स्त्रीणां गणः प्रणम्यापि वर्यस्तं पर्यचारयत् ॥४८॥ ततो धात्रीतले तत्र पवित्रे चित्रकारणम् ।
सहस्रपत्रमामृत्रि तपनीयमयं तया ॥४९॥ धन्यस्तन्मध्यमध्यास्य घनाघनघनध्वनिः । कर्णैकपेय पीयूषमुच्चैः किंचिदुवाच
सः ॥५०॥ लोलाः कोलादयो वन्या धन्यंमन्या इवाभितः । तद्वागनवसुधां पातुमुपान्तवसुधां श्रिताः ॥५१॥
व्योमतस्तूर्णमुत्तीर्णा वर्णिनीभूताः । उद्यदानन्दविद्योतमाननिर्माननमानसाः ॥५३॥ जगद्गुरो जय जय वज्रनाभ
मुनीश्वर । इति स्तुत्वा च नत्वा च तस्थुस्तस्य पुरः सुराः ॥५४॥ युग्मम् । इत्यक्षिसाक्षिणीमाख्यामाख्यातुं
भवतः प्रभो ॥ मुक्त्वा मनोऽपि तत्रैव त्वरयाहमिहागमम् ॥५५॥ अथ धात्रीभुजा मन्त्री वीक्ष्यमाणमुखोऽवदत् । याङ्कोऽसौ
केवलज्ञानी वज्रनाभो महामुनिः ॥५६॥ महीरुहामधिष्ठानदेवीभिः सेव्यमानया । वनदेवतया देव तयादौ कृतसत्कृतिः

॥५७॥ मुदां निदानं मत्त्वानां तत्त्वानां रत्नदीपिकाः । मुनिः प्रतनुते धर्मदेशनाः क्लेशनाशिनीः ॥५८॥ तत्रा-
न्निर्णय ते मेव धर्मः साक्षात्प्रमीयताम् । यद्देव देवतावृन्दैः सेव्यते स पुमानपि ॥५९॥ राजाथ तेन धर्मस्य प्रामाण्येन
चमत्कृतः । लोलमौलिः सहर्षाश्रुः सरोमाञ्चः क्षणं स्थितः ॥६०॥ सत्कृत्याथ वनीपालमवनीपालपुङ्गवः । आगाद्वुधा-
नमेदिन्यां मुनीन्द्रोत्कण्ठया रयात् ॥६१॥ विलोक्य पुलकी तत्र चित्रां मुनिविभोः सभाम् । भवार्णवतरङ्गाभासुरकाङ्-
सतार सः ॥६२॥ ततो विमलबोधेन बोधितो वसुधाधिपः । भव्यभूपोचिताः पञ्च वितेने विनयक्रियाः ॥६३॥
तथाहि । गुरोरंह्रिरजो मूर्ध्ना स्पृशतो तेऽन्तरस्थितः । असौ स्खलनकारीति किरीटं किल सोऽमुचत् ॥६४॥ भूपावतंसः
संसारवार्धिशुद्धिकरं ततः । निशाधवमिव च्छत्रं गौरच्छायमदूरयत् ॥६५॥ गन्तव्यं भुवनाम्भोजभास्करस्य पुरो गुरोः।
इत्यमुञ्चत शस्त्रालीं क्ष्मापः पापतमस्तमीम् ॥६६॥ वयं भाति ममैश्वर्यं गुरुपादनखांशुभिः । सम्प्रलाभ्यां किमित्येष
चक्रे चामरवारणम् ॥६७॥ समुत्तीर्णेव संसाराटवीमुत्कटकण्टकाम् । सोऽमुञ्चन्मुनिवाग्वापीरसं पातुमुपानहौ ॥६८॥
पुनः सचिवराजेन राजा विज्ञापितस्ततः । चकार पञ्चाभिगमानुचितान्गुरुदर्शने ॥६९॥ तद्यथा । चन्दनाम्बुजताम्बूल-
परिहारपदात्तदा रागत्यागस्य पुण्याह्ममङ्गलं विदधे सुधीः ॥७०॥ विशेषाद्भूषणं बिभ्रद्भूपोऽभान्मुद्रिकादिकम् । पूर्ण-
गर्वागतश्रद्धः पुण्यद्रुरिव पुष्पितः ॥७१॥ नवरत्नप्रभामञ्जुमञ्जलिं मस्तके दधत् । गुर्वालोके बभौ भूपोऽशेखरोऽपि
सशेखरः ॥७२॥ प्रदर्श्या वामता नात्र प्रकाश्या दक्षिणस्थितिः । स दक्षः कृतवैक्षश्चरुयावंसमिषादिव ॥७३॥
गुरोर्गिरः सुधाधारा यान्तु मा कर्णतो बहिः । इत्यसौ द्वन्द्वं स्थैर्ये सुस्थिते सुस्थितं व्यधात् ७४ अथ हर्षप्रकर्षश्रीपद्म

पद्मोत्तरः सुधीः । प्रविवेश नरेशस्तां मुनिहंसस्य संसदम् ॥७५॥ संक्षिपन्निव संसारं भ्रमणत्रयमात्रया । विततार मुनेस्तस्य तिस्रो दक्षः प्रदक्षिणाः ॥७६॥ हृष्यन्मना ननामाथ क्ष्मानाथः कर्ममाक्रथम् । एनं मुनिन्द्रमुन्निद्रभावनापावनात्मकः ॥७७॥ मुनिक्रमनखज्योतिः सन्ध्याभं मूर्ध्नि भूपतेः । नमतः सूचयामास सद्ध्यानार्चिर्विधूदयम् ॥७८॥ मुनीन्द्रावेक्षणक्षूणकारिणि स्युरिमानि किम् । इत्यश्रूणि निनिन्दैष हर्षोत्कर्षोद्भवान्यपि ।७९॥ इत्थं स पार्थिवगुर्गुरुभक्तिमुच्चै रोमाञ्चकञ्चुकधरो मधुरां विधाय । हृष्टाशयः समुचितासनसंनिविष्टः श्रद्धां श्रियामभिनवां स्वहृदा दधानः ॥८०॥ आह्लादनं सकललोकविलोचनानां श्रीवज्रनाभवदनेन्दुमुदीक्षमाणः । वाक्चन्द्रिकां रसयितुं सुरसद्गसेव्यां पद्मोत्तरः परिचकार चकोरचर्याम् ॥ ८१ ॥

इति दण्डाधिपतिश्रीमदाह्लादनसमभ्यर्थितश्रीविजयसिंहसूरिशिष्यश्रीवर्धमानसूरिविरचिते श्रीवासुपूज्यचरित आह्लादनाङ्के महाकाव्ये सद्गुरुलब्धिवर्णनो नाम प्रथमः सर्गः ॥

१ विघ्नकारीणि.



## अथ द्वितीयः सर्गः ॥

अथ ज्ञाननिधिर्जानन्राजानां भाविनं जिनम् । वचः प्रपञ्चयांचक्रे मोहद्रोहकरं गुरुः ॥१॥ भ्रान्तैश्चतुरशीत्यङ्गिलक्षयोनिवने ऽङ्गिभिः निर्भाग्यैर्दुर्लभः कल्पद्रुकल्पो मानवो भवः२ जन्यते निष्फलः स्वर्गापवर्गफलदोऽप्यसौ। अज्ञानैश्च प्रमत्तैश्च कैश्चित्प्राप्तोऽपि पुण्यतः ३ तदिष्टफलदं मर्त्यपदं जानीत सज्जनाः। विरच्यतां विपश्चिद्भिरप्रमादश्च तत्फले ४ सिक्तो गुरूक्तिपीयूषैः प्रथयन्पुण्यपुष्पितम्। दानशीलतपोभावमिषं शाखाचतुष्टयम् ५ श्रितच्छायो भवारण्यभ्रमिखिन्नैः सुरासुरैः। तस्मै फलाय कस्मैचिन्मानवानां भवो भवेत् ६ युग्मम्। जना दानं तु जानन्तु प्रधानं सर्वकर्मणाम्। अपि शीलतपोभावैः शुद्धैर्यद्दुरि धार्यते ७ शक्रचक्रधरादीनामदीनामपि संपदम्। भोगभाग्यनिदानस्य दानस्यैव वशां विदुः८ भवार्णवस्य वीचीषु श्रीषु लोलासु लालसाः। मज्जन्ति पात्रदानं ये यानपात्रं न तन्वते ॥९॥ भवाब्धियानपात्रेषु यत्पात्रेषु निधीयते। असंख्यीभूय भूयस्तद्दातुर्भोगाय जायते ॥१०॥ पात्रदानं हृदानन्दहेतुरत्र परत्र च। कृतिनो रतिसारस्य कुमारस्येव कल्पते ॥११॥

तथाहि विद्यते माहिष्मतीति विदिता पुरी। यत्पौरैः पूर्यते लक्ष्म्या लोलत्वं दानलीलया ॥१२॥ सुभूम इति भूपोऽभूत्तत्र निश्छत्रितद्विपत्। यस्य दानाश्रियः केलिकाननं कल्पपादपाः ।१३॥ पुत्रः क्षितिपतेस्तस्य बभूव भुवनाद्भुतः। रतिसाराभिधः शुद्धकलाकमलिनीरविः ॥१४॥ पतिव्रतेव रूपश्रीर्यस्य विश्वमनोहरा। नापे सुरैरपि ध्यानतूर्णपूर्णमनोरथैः १५ अदूषणैर्गुणैर्यस्य मुदितो मेदितो मेदिनीपतिः। अदात्प्रसादतः स्वेच्छाविच्छन्व्ययनवल्गितम् ।१६।

स कदापि कलावद्भिर्वृतो रविरिवांशुभिः। विचिक्रीड पुरक्रोडे पौरहत्पङ्कजप्रियः १७ असावपश्यदुत्पश्यैर्वीक्ष्यमाणं विचक्षणैः। नरं कंचित्पताकाग्रजाग्रद्ग्रन्थिं चतुष्पथे ।१८। अथोचितचमत्कारे कुमारे परिपृच्छति.। तस्य स्वरूपं त्रिद्रूपः. कश्चिदेवं न्यवेदयत् ॥१९॥ कुमार कोऽपि साकारस्तुङ्गमानः पुमानयम्। कुतोऽपि.केतुमान्प्रातरापपात पुरान्तरम् ॥२०॥ वीक्ष्य ग्रन्थिं ध्वजाग्रेऽस्य नागरैर्गुणसागरैः। इह वस्तु , किमस्तीति स्पष्टं पृष्टोऽयमभ्यधात् २१ इह श्लोकस्त्रिलोकस्य स्थितोऽस्ति महितो बुधैः। विक्रीणे कार्यतो निष्कलक्षेणामूल्यमप्यमुम् ॥२२॥ इत्यस्य वचसाश्चर्यवशंवदहृदस्तदा.। अमिलन्नमलप्रज्ञाः प्रज्ञाः पुरःपुरःसराः ॥२३॥ ते भृशं तादृशश्लोकसमालोकसमुत्सुकाः। अमुं जगुः क गुप्तस्य मूल्य-श्रीरस्तु वस्तुनः ॥२४॥ अथायमभ्यधाल्लभ्या न सभ्याः क्वचिदीदृशाः। छद्मैव प्रस्तुतं वस्तुलब्धौ येषां धनं घनम् ॥२५॥ आस्वादमात्रविध्वस्तरोगां रोगवतेऽर्थिने। स्वादं परीक्षितुं दत्ते विक्रेता कः सुधां मुधा २६ मूल्यं संसारसारस्य यक्रा-श्लोकस्य भोः कस्य विकयः क्रियतां मया ॥२८॥ इत्यनेन कृता कामं यन्निदा कोविदावलिः। अस्ति श्लोकावलोकार्थमु-पाश्रयाग्निनी चिरात् २९ इत्याकर्ण्य कुमारोऽन्तःसमारोपितविस्मयः। सुहृदां हृदयाकूतमास्यं पश्यन्नदोऽवदत् ३० अपि चित्रमयीहृद्यान्कुर्वती त्वर्थितोत्तरान्। अतुल्यमूल्या यस्योक्तिभङ्गिरप्यत्र स्फुरति ३१ स विक्रीणाति यं श्लोकं लोकस्तुणगुणं भणन्। तं कीणन्हेमलक्षेण दक्षो विक्षोभमेति कः ३२ युग्मम् ॥ वदन्निति सुहृद्वृन्दैर्नन्दितो नृपनन्दनः। प्रीतः किंचित्परि-कम्प्य श्लोकविक्रयिणं जगौ ॥३३॥ गृहाण स्पृहया हेम सुकृतरत्नं वितीर्यताम्। पुनरस्य नरश्रेष्ठ कथ्यतां तथ्यमाकरः ३४ अथ प्रीतिसुधासिन्धुचञ्चद्वीचीयितस्मितः। कुमारस्तुन्नमार्तण्डकाकः श्लोकधनोऽभ्यधात् ३५ शृणु सुश्लाकरं श्रीमदस्ति

श्रीमन्दिरं पुरी । श्रावस्तीति समाहूतपुरुहूतपुरस्तुतिः ॥३६॥ स्वर्द्धेमानमजानानः स्वस्य स्थाम्ना इव क्षिपः । तस्यामद्य
प्रमिद्धोऽहं सुबन्धुर्नामतो मतः ॥३७॥ हयहेषितवेषेण बिभ्राणा भूषणक्वणान् । ननर्त नर्तकीव श्रीरश्रमं मम वेश्मनि
॥३८॥ सद्भाग्यव्यवसायाभ्यां पक्षिणीभिर्विभूतिभिः । पारावारस्य पारेऽपि चरन्तीभिरवर्धि मे ॥३९॥ नरं कंचन रङ्कं च
नृपतिं च न वेद्मि तम् । अदर्धादधमर्णत्व यो मे नो मेदिनीतले ॥४०॥ चिरमित्थमभव भूपभव भूरिविभूतिभाक् । अहं
दुहितृदौहित्रपुत्रपौत्रालिमालितः ४१ एकदा क्षणदापुच्छे स्वप्नेऽपश्यं वरस्त्रियम् । विभूषणगुणैर्भान्तीं निर्यान्तीं निजम-
न्दिरात् ॥४२॥ यावद्ध्यायामि निद्रान्ते स्वान्ते दुःखप्रशान्तिकम् । तावन्मूर्तमिवाभाग्यं धूमोऽभूद्विभवौकसि ॥४३॥
तत्कालमेव मे भाग्यभङ्गभङ्गिगरीयसाम् । तत्रोदभूदभाग्यानां प्रताप इव पावकः ॥४४॥ वित्तालिनिःस्पृहश्चित्ताद्युत्तीर्णरव-
जनव्रजः । निःसृतोऽहं तदागारात्संसारादिव निर्ममः ॥४५॥ तदा तु यद्यदाकृष्टं दह्यमानं धनं जनैः । छलिनस्तत्तदादाय
पलायांचक्रिरे रयात् ॥४६॥ मदीयाभाग्यमङ्गल्यदीपे तस्मिन्प्रदीपने । प्रपतद्भिः पतङ्गानां भङ्गिरङ्गीकृता हयैः ॥४७॥
पदार्थदाहदुःखोर्मिव्यथया मूर्छिते तदा । ओको विमुच्य लोकोऽभूत्प्रतिकारपरो मयि ॥४८॥ यावच्चिच्छेद मे मूर्छा
जनस्तावद्विभावसुः । निन्ये निःशेषमप्येप वेश्म भस्मावशेषताम् ४९ सद्मतो निःसृताशेषस्वजनं मुक्तमूर्छनम् । दग्धसर्व-
स्वमप्याहुर्मां जनाः पुण्यभाजनम् ॥५०॥ तप्तं स्वर्णादिपिण्डस्थं देयमूल्यपदे तदा । एत्य क्रयाणवाणिज्यकारिभिर्जगृहे
गृहात् ॥५१॥ लभ्याक्षरेषु दग्धेषु विदग्धैरधमर्णकैः । दत्तं नोत्तरमप्युच्चैर्याच्यमाने धनोच्चये ॥५२॥ निध्यायामि निधा-
नानि यावत्तावदहिव्रजः । न्यलोक्यत स्वकाभाग्यलताकन्दलवृन्दवत् ॥५३॥ दिगन्तगतवाणिज्यवित्तप्राप्तिप्रतीक्षणम् ।

श्व ॥४३॥

धनिभ्यो धनमादाय स्वकुटुम्बमजीवयम् ।५४। किं तु मद्दिवसप्रान्ते मद्भाग्यतमोमये । सर्वे मम वणिक्पुत्रा मार्गेऽगृह्यन्त
तस्करैः ॥५५॥ मद्भाग्यविप्रयोगाग्निकीलालिङ्गाकुला इव । पोतभोजस्तु पाथोधौ ममज्जुर्मम सम्पदः ॥५६॥ एतद्वार्ता-
श्रुतेरार्तामन्तर्भूर्त्ति वहन्नहम् । अवापं न रतिं कापि चिन्त्यदिन्यगणाहणी ॥५७॥ किं देयमुत्तमर्णानामुत्तरं याचतामिति ।
भृशं देशान्तरायाहमुत्साहमसृज निशि ॥५८॥ दशाश्रुमिश्रया वीक्ष्य पूर्णेन्दुवदनां चिरम् । निद्राणां प्रेयसीं पृष्ट्वा दैन्य-
गद्गदया गिरा ॥५९॥ दृश्यानि पुनरीदृंशि केति साश्रु दृशं मुहुः । क्षिपन्मुखेषु सुप्तानां शिशूनां मुग्धकान्तिषु ॥६०॥
दुःखौघशम्बलो बाहुसहायः पदवाहनः । निशीथे निःसृतो मन्दं मन्दं मन्दिरतस्ततः ॥६१॥ त्रिभिर्विशेषकम् । अथाशु
गतिचातुर्यातुर्यो बहिरहं गतः । कुमार सुकुमारत्वान्मेदुरं खेदमासदम् ।६२। अन्वेषद्भयो धनिभ्योऽथ भीतः प्रीतिं मृतौ
वहन् । झम्पां दातुं पुरीलीलाशैलमौलिं गतः शनैः ॥६३॥ दुःखानि सह देहेन तूर्णं चूर्णयितुं मयि । झम्पार्थं
प्रस्थमान्दे कुतोऽप्युक्तिरभूदिति ॥६४॥ मा मानवं भवं हन्त चिन्तामणिमिवार्भकः । परिक्षेप्सीर्मुधा मूढ प्रौढभाग्य-
भराजितम् ॥६५॥ इत्याकर्ण्य क्षिपन्दिक्षु चक्षुरप्रेक्ष्य कंचन । पुनर्जातोऽस्मि पातोत्कस्तदा वागित्यभूत्पुनः ॥६६॥
खेदभेदभिया प्राणप्रहाणं मुग्ध मा विधाः । स्फीतशीतभिदे कल्पशालं ज्वालयतीह कः ॥६७॥ इति श्रुत्वार्पयन्दिक्षु
पक्ष्मपाति पदान्यहम् । कंचिदप्रेक्ष्य झम्पार्थी जातश्चाभूच्च वागियम् ॥६८॥ दुःखलेशेन किं मूर्ख निजं त्यजसि जीवितम् ।
रेणुलेशेन पीयूषच्छटां किरति कः क्षितौ ।६९। तामुक्तिमवगण्यैव तुङ्गतः शैलशृङ्गतः । झम्पामहमदां नाम यावन्मा मेति
भाषितम् ।७०। पातसंवेगसंजातमहावातधुतस्ततः । मूर्च्छामहं महीदेशसद्देशगमनोऽगमम् ।७१। अथोन्मीलितदृक्तस्य

शैलस्यैवोपरि स्थितम् । अपश्यमहमात्मानं मुनिमेकं च कंचन ॥७२॥ किं स्वप्नः किं मतिभ्रान्तिरसाविति वितर्किणम् ।
विस्मयस्थमथोवाच स मामसमवाग्मुनिः ७३ मया मुहुर्निषिद्धोऽपि मर्तुं धावसि किं मुधा । दुःखानां ह्यौषधं मृत्युरात्मनः
सहचारिणाम् ॥७४॥ इत्युक्त्वा मयि मीमांसासंमुखे स मुनीश्वरः । विगलन्म मनःशोकं श्लोकं जल्पन्नमुनयौ ॥७५॥
ततः क्षणं तनूकान्तिपुनरुक्तारुणोदये । गते तस्मिन्नदृश्यत्वमहमित्थमचिन्तयम् ॥७६॥ नूनं कोऽप्येष संसारतारणश्चारणो
मुनिः । रात्रावत्राचले कायोत्सर्गं मत्सुकृतैर्दधौ ॥७७॥ अनेनैव दयार्द्रेण पतन्नद्रेरहं धृतः । कृतश्च श्लोकदानेन सदानेन
सुनिर्वृतः ॥७८॥ इति ध्यात्वा धरां नत्वा मुनेस्तस्य क्रमाङ्किताम् । तच्छ्लोकध्यानपीयूषपानच्छिन्नग्विदाभरः ॥७९॥
सुप्तेष्वेव मनुष्येषु स्वेषु शेषे निशाक्षणे । मन्देतरतरैराशु पदैः सदनमासदम् ॥८०॥ युग्मम् ॥ मुनीन्द्रालोकनश्लोक-
लाभौ मनसि भावयन् । अजीगणं गुणायाहं विपदं सम्पदः पदे ८१ मां क्षीणाशेषलक्ष्मीकं मत्वा दाक्षिण्यदीक्षितैः ।
कदाचिदपि नायाचि लब्धमिभ्यजनैर्धनम् ॥८२॥ किंचित्कैश्चित्त्रपावद्भिरधमर्णैर्मम स्वयम् । दत्तं वित्तं कुटुम्बस्य
बभूव कशिपुं[1]श्रिये ॥८३॥ इत्थहं यद्भविष्यः सन्प्रियामपि विपद्गताम् । चक्रे श्लोकस्य तस्यार्थसामर्थ्येन प्रमोदिनीम् ॥८४॥
साम्प्रतं मत्प्रियायास्तु सोदरः परिणेष्यते।सागदद्गद्गदोक्त्या मां तदुत्सवगमोत्सुका ८५ न भूषणानि भूरीणि चीवराणि
वराणि न । नाध्वयोग्यानि युग्यानि दानीयानि धनानि च ॥८६॥ स्फारशृङ्गारसारासु दानीयाद्भुतभूतिषु । रंस्ये
प्रधानयानासु सोदरासु कीमीदृशी ८७ आत्मानमपि विक्रीयाधिकं किंचित्ततोऽपि वा। मानं मे पाहि मानो हि स्वात्मनो-

१ अन्नवस्त्रयोः.

ऽप्यधिकः सताम् ॥८८॥ न मानः पूर्यते चेत्तन्मरणं शरणं मम । मन्यन्ते मानिनो मानमात्मनोऽपि हि दुस्त्यजम् ॥८९॥
इत्याग्रहमहं तस्या हन्त श्याममुखस्तदा । चिरं विचार्य चित्तेन किंकार्यत्वजडोऽभवम् ।९०। वस्तु पश्यामि नो गेहे यिना
देहेन किञ्चन । मूल्यं कर्मकृतामेव प्राप्यं तद्विक्रये पुनः ॥९१॥ तत्किं कुर्वे क्व गच्छामीत्युग्रदुःखहृदा तदा । स श्लोकः
सस्मरे दुःस्वमरणायतया मया ॥९२॥ ततः कदाग्रहग्रस्तमहिलामोहिताशयः । कुलतत्त्वं स्वसत्त्वं च तृणयन्धनतृष्णया
॥९३॥ तं मातृवदविक्रेयमपि श्लोकमिहाप्यहम् । इत्यर्थोक्तेऽश्रुधारालद्दगेप न्यग्मुखोऽभवत् ॥९४॥ युग्मम् ॥ ततस्तं
ग्रन्थिमुद्ग्रन्थ्य तदङ्गुल्यग्रसंज्ञया । कुमारः स्वयमादाय स्वकरे श्लोकपत्रिकाम् ॥९५॥ क्षणमात्रं ततो गात्रं स्तम्भपात्रं
सृजन्नमौ । किञ्चित्तदैव तत्स्वादमास्वाद्योचैरदोऽवदत् ॥९६॥ युग्मम् ॥ द्रागिन्द्रियमयीं धीराः श्रवणे सृजत स्रजम् । अस्यैप
श्लोकराजस्य प्रवेशो भवतीह यत् ।९७। कार्यः सम्पदि नानन्दः पूर्वपुण्यभिदे हि सा । नैवापदि विपादश्च सा हि प्राक्पा-
पभित्तये ॥९८॥ इति श्लोकामृतं पीत्वा प्रीत्या नृत्यभृतामिव । श्रुतीनामाश्रयैरापि कम्पः केषां न मौलिभिः ॥९९॥
प्रीतिगौरवगौरेषु तदा पौरेषु दुःखिनम् । भूपभूरभ्यधाद्वाग्भिः सुबन्धुं मधुबन्धुभिः १०० नूनं त्वमसि मे पूर्वजन्मबन्धुर्य-
तस्त्वया । सूक्तपीयूषपानस्य भागेनास्मि न वञ्चितः । १॥ धनं हरिकरिस्वर्णरत्नाद्यमिह मामकं । विद्यते यत्र कुत्रापि
स्पृहा तव गृहाण तत् ॥२॥ इत्युदित्वा ससंमानममुं प्रपीन्द्रपाङ्गजः । दत्त्वा दुकूलकल्याणरत्नवारणधोरणीः ॥३॥
तत्तन्दानानि दीनेषु गुणलीनेषु विस्मितः । ततो भूशाकभूश्चक्रे श्लोकभावेशिकोत्सवम् ॥४॥ निर्गम्य दिनमुखिन्द्रकवीन्द्र-
कुलकेलिभिः । असौ नक्तं नृदेवस्य सेवार्थं संमदी ययौ ॥५॥ क्षणेऽत्र क्षोणिनेतारमेत्य व्यवनियोगिना । अथाच्यत

मुग्ध
चमत्कुर्वन्वित्तो वित्तोच्चयव्ययः ॥६॥ अथ क्रोधादिलाधारः कुमारमिदमूचिवान् विभवं विभुतामाणान्मुधा
किमुज्झसि ॥७॥ आकरः परमः काव्यमणीनामनर्णीयसाम् । न स्यात्कशिपुमात्रस्य दानतः कानतः कविः ॥८॥
तत्किमेष तदुन्मेपमात्रगात्रव्यवस्थितिः । श्लोकः कनकलक्षस्य क्षयादङ्गीकृतस्त्वया ॥९॥ बीजं लोकद्वयानन्दकारिणोः
कामधर्मयोः । तृणवत्त्यजति व्यक्तबोधनः को धनव्रजम् ॥१०॥ कलाविक्रमबुद्धीनामसाध्यमपि साधयेत् । यत्तद्वित्तम-
वज्ञानरूपे कूपेऽपि कः क्षिपेत् ॥११॥ द्रविणैः कृपणोऽप्येति सेव्यतां महतामपि । सेव्यः स्वर्णाद्रिरुच्छिद्रैः किं सदैव न
दैवतैः ॥१२॥ गुणी रक्तोऽपि मुच्येत क्षीणश्रीराश्रितैरपि । त्यजन्ति निशि, निःश्रीकानलिनो नलिनोत्करान् ॥१३॥
ध्यात्वेलर्जयितुं वित्तं न स्वं कः संशये क्षिपेत् । अबालस्त्वमिवोत्तालः क इव व्ययति श्रियम् ।१४। अथ पुंस्कोकिलालाप-
कल्पामयमकल्पयत् । कुमारः पुण्यकान्तारसहकारतरुर्गिरम् ।१५। शतशः सत्सु विद्वत्सु सत्काव्याभिगमः कृतः । वज्रा-
करेऽपि सवज्र निष्पुण्यैः कापि नाप्यते ।१६। श्रद्धा धर्मस्य कामस्य प्रीतिरुत्पत्तिकारणम् । लीला तत्कर्मणि श्रीस्तु दासी
कस्तत्र रज्यति ।१७। लीलयैव कलाशौर्यबुद्धयः साधयन्ति यम् । तमर्थं तदसाध्येऽपि साधकं कः सुधीर्दिशेत् ।१८। अ-
ज्ञानकूपश्छिद्रपैरर्थं एवोपदिश्यते । अशक्यं कण्डुमात्मानमत्र कस्तृष्णया क्षिपेत् १९ निर्ग्रन्थोऽपि विरक्तोऽपि निर्गुणोऽपि
यतिः सताम् । सेव्यः स्वाधेन तज्ज्ञानं यतन्तेऽर्जयितुं बुधाः ।२०। इत्यनादरणीयैः स्वैरसंख्यैरपि गृह्यते । सतामादरणीय
ज्ञानलेशोऽपि लभ्यते ॥२१॥ एवमुत्तरमुद्दामं ददाने नन्दने नृपः । कामं कामपि नोवाच वाचं रोषातिरूक्षदृक् ॥२२॥
अथोत्तस्थौ कुमारोऽयं भूवल्लभसभान्तरात् । देशान्तरगतिध्यानतत्परस्तत्पराभवात् २३ गुप्तः सुप्तं जनं मुक्त्वा पुरान्निशि

विनिःसृतः कुमारो वारिजव्यूहमिव व्योम्नो विभाविभुः ॥१२४॥ खुरलीखेलनाभ्यासादजातक्रमणश्रमः । अलं चलन्न-
लङ्घिष्ट महीमेष महीयसीम् ॥१२५॥ श्वापदाः स्वापकालेऽपि महारण्ये महस्विनः । ज्वलदग्निधिया नासन्नासन्नास्तस्य
कुत्रचित् ॥२६॥ ईदृशा न रामत्वं वहन्ते कोऽप्ययं सुरः । हेलया खेलतीत्येनं तस्करा न पराभवन् ॥२७॥ इति
सत्त्ववतां धुर्यस्तुर्येऽहनि नृपाङ्गजः । धराहारो निराहारः श्रावस्तीं नगरीमगात् ॥२८॥ मध्यन्दिने दिनेशस्य कान्तिभिः
क्लान्तिमागतः । श्रान्तस्तत्र विशश्राम कामस्यायतने ततः ॥२९॥ कोऽप्युज्ज्वलज्वलद्धामा सामान्यो न पुमानयम्
इति ध्यानवशादेव देवपूजिकया रयात् ॥३०॥ आनीय शुचिपानीयकरकं नरकुञ्जरः । सफलीक्रियतां वीर नीरमीत्यभ्य-
धायि सः ॥३१॥ युग्मम् ॥ ता माधुरीधुरीणाः स वनरीणः पपावपः । प्रीतो भवभ्रनिश्रान्त इव तीर्थेशदेशनाः ॥३२॥
तदा संदर्पवाचालपिकीजालकुहूपमम् । रवं श्रुत्वा किमत्रेति तत्रेमां पृच्छति स्म सः ॥३३॥ सा जगौ राजगौराणां यशसां
विनिवेशनम् । नृपः कृप इतीहास्ति रिपुहास्तिककेसरी ॥३४॥ तस्य कान्त्यधिकन्यासा कन्या सारङ्गशावदृक् ।
सौभाग्यमञ्जरीत्यस्ति सौभाग्यतरुमञ्जरी ॥३५॥ मुधा सुधाभुजां चक्षुरनिमेषत्वभूरभूत् । सा : रम्यरूपपी-
यूषकूपिका न न्यरूपि यैः ॥३६॥ सर्वस्वं रूपपुण्यस्य कन्यारत्नमिदं महत् । बाल्येन धार्मिकेनेव यौवनाध्या-
पितं मनः ॥३७॥ धीराख्यमन्त्रिधन्याख्यश्रेष्ठिकन्ये शुभे उभे । तस्याः सख्यौ कलाहृद्ये विधेले तुल्ययौवने ॥३८॥
ध्यापनराजसुतारूपे न्यायं घोणाक्षरं विधिः । शिल्पिसिद्धिपरीक्षार्थमिव ते व्यधितात्मुते ।३९। प्रियंवदासुताराख्ये सख्यौ

१ रमणीयकम्—शोभाम्. २ पृथिव्या हारसदृशः. ३ धनबाणेन खिन्नः.

ते सर्वकर्मसु । तां कदाचिन्न मुञ्चेते रतिकान्ती इव श्रियम् ॥१४०॥ त्रैलोक्यरमणीरूपसम्पदामिव देवताः । तिस्रोऽपि कौशलं प्रापुः सकलासु कलासु ताः ॥४१॥ श्रीतनूजस्य पूजार्थमायान्त्यन्वहमत्र ताः । तत्परीवारनारीणां रवः सम्यग्निशाम्यते ॥४२॥ इत्यस्यां विकम्द्वाचि साचिचञ्चद्विलोचनाः । व्यलोक्यन्त कुमारेण योषितस्तोषितस्मराः ॥४३॥ तिस्रो नरविमानस्थास्तासु प्रैक्ष्यन्त कन्यकाः । तेनानङ्गक्षितीशस्य प्रत्यक्षा इव शक्तयः ॥४४॥ यूनां मनोवनोत्सङ्गं ज्वलयन्कनकोज्ज्वलः । चकाम कामदावाग्निरिवैष स्त्रीजनः शनैः ॥४५॥ दीपयद्भिर्नृसन्दोहहृदि मोहमयीं निशाम् । भासमाना निशानाथसमानांशुभिराननैः ॥४६॥ विवेककुसुमे लीनं सतां भृङ्गायितं मनः । कर्षद्भिर्नयनाम्भोजैर्भूषयन्तीर्भवार्णवम् ॥४७॥ मन्दयद्भिर्मुनीन्द्राणामपि जात्युज्ज्वलं यशः । शरीरधामभिः कामदीपिकाभिरिवाद्भुताः ॥४८॥ तिस्रोऽपि शनकैः कन्याः समीपं समुपेयुषीः । ददर्श च कुमारस्ता मारस्य च वशं गतः ॥४९॥ चतुर्भिः कलापकम् ॥ तं च चञ्चत्प्रभाचक्रं नरशक्रं निरीक्ष्य ताः । मिथोऽपि वचनं चारुस्मितसूचितमूचिरे ॥५०॥ अस्मद्भक्तिगुणक्रीतः प्रीतः श्रीलनगः किमु । प्रासादान्निर्गतो मार्गलस्सन्मार्गमयं स्वयम् ॥५१॥ कर्तुं कश्चिदसौ कामसेवां देवाग्रिमः किमु । अभ्यागाद्वह्लभालाभलोभलोलुभधीरिह ॥५२॥ अस्मभ्यं वा वरं दातुकामः कामः कमप्यमुम् । स्वतोऽप्यधिकधामानमानयन्मानवं नवम् ॥५३॥ इत्युक्तियुक्तिभाजस्तास्तस्मिँल्लीनदृशो भृशम् । उत्तेरुः कन्यका धन्यंमन्या नरविमानतः ॥५४॥ चतुर्भिः कलापकम् ॥ मुहुः पिहितमप्यङ्गं पिदधत्योंऽशुकेन ताः । स्खलन्मृदुपदन्यासाः प्रासादक्रोडमासदन् ॥५५॥ दिदृक्षवो मुखं तस्य ह्रिया वीक्षितुमक्षमाः । नेत्रकोणावलोकस्य व्यधुः प्रारम्भमङ्गलम् ॥५६॥ भवद्भ्यां भासुरं रूपमी-

दृशां शुश्रुवे क्वचित् । इति प्रष्टुमिवाभ्यर्णे कर्णयोस्तद्दृशोऽगमन् ॥५७॥ भावभिन्नां कुमारः स्वे तत्प्रवेशोत्सवे हृदि ।
ददौ दृशां भृशं नीलोत्पलस्रक्तोरणोपमाम् ॥५८॥ विलङ्घ्य दृक्पथं तस्य कथंचिदपि ता ययुः । तदधीनहृदो मीनकेत-
नायतनान्तरम् ॥५९॥ विरहस्य भियान्योन्यं रहस्य(ऽ)थ रहस्यवत् । सा मन्दमिदमाचख्यौ सख्यौ प्रति नृपाङ्गजा ॥६०॥
कदापि प्रगुणप्रेमगुणबन्धनिबन्धनम् । न नो मनोऽपि सम्भिन्नं डिम्भतारम्भतोऽप्यभूत् ॥६१॥ पतिभ्यः पितृभिर्दत्ता
भिन्नेभ्यो भिन्नजातिभिः । कथमाश्लथयिष्यामो वयस्यत्र वयस्यताम् ॥६२॥ अवियोगनियोगस्त्वयदि वां हृदि वाञ्छितः ।
एकचक्षुःसुधासेकस्तदयं दयितोऽस्तु नः ॥६३॥ असमक्षं समस्तानां जनानां रजनाविह । वियोगपातभीत्याय क्रियते-
ऽस्य करग्रहः ॥६४॥ एवमुक्त्वाऽऽत्तमौनायामेते दत्तः किमुत्तरम् । इत्याकुलहृदि क्ष्मापपुत्र्यां प्राह प्रियंवदा ॥६५॥
यत्त्वयोक्तं तदेवासीन्न देवि यदि मे हृदि । तत्त्वतस्सत्यनिदानाय प्रेयसे श्रेयसे शपे ॥६६॥ इत्यस्या वचनस्यैव प्रतिशब्द
इवाभवत् शब्दस्तदा सुताराया वदनोदरकन्दरे ॥६७॥ इत्थं मिथः कथासारसुधासारपरिप्लुतैः । मनोभिर्निर्मलैरेताः
श्रीतनुजमपूजयन् ॥६८॥ अथागत्य बहिः कामस्तुतिप्रस्तुतिकैतवात् । इमाः कुमारमुद्दिश्य जगुर्मञ्जुगुणां गिरम् ॥६९॥
अभजन्मनः स्थिरं नाथ यथा त्वयि तथा त्वया । मात्राधिके प्रसादेऽत्र स्थिरीभाव्यमहर्निशम् ॥७०॥ इत्युक्तियुक्तिभि-
स्तासां कुमारः स्वं व्यचारयत् । क्षपायामपि तत्रैव प्रासादे स्थापितं कृती ॥७१॥ ताश्चेलुरथ चक्षूंषि क्षिपन्त्यः पृष्ठतो
मुहुः । स्मरार्त्तानामृतादीपसत्ताभ्यालोकनच्छलात् ॥७२॥ दीप्तस्मरानलज्वालापक्वैः रागरसैस्ततः । कुमारं चित्रवच्चित्तफ-
लके न्यस्य ता ययुः ॥७३॥ अधिकं दधदौज्ज्वल्यं तापायैवाभवत्सदा । तासां मारश्च हारश्च कुमारश्च हृदि स्थितः

॥७४॥ भक्तोऽसौ कामदः कामं कामः इत्युक्तिभागथ। कुमाराय ददौ शेषान्मोदकान्देवपूजिका ॥७५॥ तदा कृततदाहारः कुमारः शुशुभे शुभैः। पुष्पेषुशेषताम्बूलपुष्पावलिविलेपनैः ॥७६॥ अथ तस्य च तासां च दृक्प्रभादण्डमण्डलैः। भानुर्नुन्न इव प्राप प्रत्यग्गिरिशिरस्तटीम् ॥७७॥ तेषां हृदि तदोद्दामः कामतापः स कोऽप्यभूत्। यज्जितेनेव सूरेण गतं दूरेण लज्जया ॥७८॥ विभ्रदभ्रलिहीभावं संध्याभ्रपटलच्छलात्। तेषां भृशं निशारम्भे जजृम्भे रागसागरः ॥७९॥ तदङ्गज्वलितानङ्गदावपावकजन्मभिः। अपूरि भूरिभिर्धूमैरिव ध्वान्तभरैर्नभः॥८०॥ इति क्रमान्निशीथिन्यां निशीथसमयस्पृशि। पौरेषु परितो निद्रामुद्रितेन्द्रियवृत्तिषु ॥८१॥ भूषिताभरणाः पाणिग्रहोपकरणान्विताः। तास्तिस्रोऽपि ययुर्मीनकेतनस्य निकेतनम् ॥८२॥ युग्मम् ॥ आगमिष्यन्ति ता नो वा भविष्यति न वात्र सः। इत्याकुलहृदोऽन्योन्यं तेऽमिलन्समदास्पदम् ॥८३॥ तैर्हृष्टैरथ तत्कालज्वालितज्वलनच्छलात्। दीप्यमानो बहिश्चक्रे हृदयाद्विरहो महान् ॥८४॥ भवाम्भोनिधिडिण्डीरभरविभ्रमभृत्प्रभे। चीवरे पीवरप्रेमप्रकर्षास्तेऽथ पर्यधुः।८५। अमन्दमोदैर्मदनफलान्यथ करेषु तैः। कन्दर्पलतिकाकन्दबन्धुराणि बबन्धिरे ॥८६॥ अथ ताः प्रथितोत्साहः करे जग्राह कन्यकाः। विप्रयोगपयोराशौ निमज्जन्तीर्नृपाङ्गजः ॥८७॥ तेषां जिह्वासुधावल्लिपुष्पाण्यथ मिथः कथाः। जग्मुर्मधुमुचश्चारुवर्णाः कर्णावतंसताम् ॥८८॥ ततः प्रभातमिश्रायां तमिस्रायां निजं निजम्। ता निकेतं गताः स्वापं कुमुदिन्य इवासदन् ॥८९॥ एष्यद्रविभयान्निद्रा नलिनेभ्यः पलायिता। विशश्राम कुमारस्य तदा नेत्रारविन्दयोः ॥९०॥ द्राग्दृष्टनष्टया स्पष्टं सध्यया सुधियो वपुः। सत्वरं गत्वरं मत्वा धर्मतत्त्वान्यधुस्तदा।९१॥ वीक्ष्यैव कुमुदे लक्ष्मीं क्षणात्क्षीणां विचक्षणाः। श्रियश्चलत्वं जानन्तो

दानं तोपद्वदो ददुः ॥९२॥ संयोगे विप्रयोगान्तं द्दृयन् कोकदर्शनात् । सत्सु साधुजनः सम्यग्विदधे धर्मदेशनाम् ।९३।
सुसस्मापि ममेति श्रीर्ममेव समये स्वयम् । तस्यै मा क्लिश्यतामब्जमितीवाख्यदलिस्वनैः ॥९४॥ पवित्रितधरित्रीकः
पादन्यासैरिवांशुमान् । आकर्षत्तिमिराद्विश्वं दुःकृतादिव तीर्थकृत ॥९५॥ अथ सुतां विवाहश्रीचिह्नां सौभाग्यमञ्जरीम् ।
वीक्ष्य क्षितिपतेराख्यत्कञ्चुकी चकितस्तदा ॥९६॥ केनापि निशि कन्ये नौ व्यूढे इति पतिः क्षितेः । एत्य तत्र क्षणे
मन्त्रिश्रेष्ठिभ्यां व्यज्ञपि स्वयम् ॥९७॥ इहेदृग्विडं केन विडम्बनमिदं कृतम् । इति कोपाकुले भूपे कोऽप्येत्य पुरुषोऽ-
वदत् ॥९८॥ स्वामिन् कश्चन कन्दर्पायतनेऽनुपमः पुमान् । हृदश्रीर्विद्यतेसद्यःपार्थिवग्रहणावेषभाक् ९९. इत्याकर्ण्य तला-
रक्षमिलारक्षः क्रुधादिशत् । आगसां सागरो मङ्क्षु स बध्वाऽऽनीयतामिति २०० अथ गत्वा तलारक्षस्तं दक्षो वीक्ष्य दोर्भृ-
तम् तूर्णमेत्य भयापूर्णः क्ष्माभुजं व्यजिज्ञपत् ॥१॥ अस्ति विस्तीर्णदृक्पाततृणीकृतजगत्त्रयः । तत्र स्वामिन्पुमान् कोऽपि
द्वादशार्कनिभप्रभः ॥ २ ॥ रूपं निरुपमं तस्य निरूप्य निरुपाधिकम् । स्त्रीत्वाय स्पृहयत्येव देवानामपि मानसम्
॥ ३ ॥ मन्ये तादृग्गुणोल्लाससत्ताद्युक्तादृगाकृतिः । अपीन्द्रमनसा मान्यो न सामान्योऽस्ति कोऽप्यसा ॥ ४ ॥ तदेक-
मपि मोद्रेकपरिव्यूढोऽप्यहं नहि । अमुं धर्तुं समर्थोऽग्निकणं तृणगणो यथा ॥५॥ इत्युक्तिविकटामर्षस्तत्कर्षणकृते नृपः ।
प्रैषीद्वीररसानन्त्यं सेनान्यं सेनया रयात् ।६। अथो रथेभपत्त्यश्वसेनाभिर्नाभिवद्वृतः । तरसा सरसोत्तालश्चचाल करबा-
लभृत् ॥ ७ ॥ राज्ञा सैन्यं त्वयि प्रैषि कथितेऽपि जनैरिति । तदा तस्य न रोमापि नरोत्तमस्य कम्पितम् ॥ ८ ॥

१ "वीररसं च (वा) न्यं" इति वा पाठः ।

॥

बिभ्रद्भिरधिकं दर्पं कन्दर्पायतनं ततः ॥ अवेन्ध्यत चमूशूरैः क्रूरैरात्मेव कर्मभिः ॥९॥ उच्चनीचस्फुरच्छीर्षैः शूरः शोणमुखे रूपा । कुमरो मुहुरालोकि कृकलासैरिवांशुमान् ॥१०॥ एवमालोचय सेनानीर्गृह्यतां गृह्यतामयम् । इति कोपानलज्वालां वाग्मालामुदलालयत् ॥११॥ इत्युक्त्या तस्य कल्पान्तवातवेगिनि धावति । वीरवारे कुमारेण मेरुणेव न चुक्षुभे ॥१२॥ स्थानलागे प्रियारागे भयभागे च तत्र मः । तं श्लोकं संस्मरन्निभं न मनः क्वचन व्यधात् ॥१३॥ ते तु दैन्यमुचः सैन्यभटाः सर्वेऽपि गर्विताः । कुमाराय क्रुधावन्तो धावन्तो दधुरन्धताम् ॥१४॥ ततः स्वमपि हस्ताग्रमपश्यन्तोऽन्धदृष्टयः । पुरो यत्रापि तत्रापि स्वलनादपतन्त ते ॥१५॥ भृशं विसंस्थुलां धीरा दधतः परितो गतिम् । अन्धा मिथोऽप्ययुध्यन्त मंमुग्धीनैर्द्विपद्विया ॥१६॥ किं रे कन्यास्त्वया व्यूढा मद्धेनेत्युद्धतोक्तिभिः । ताडितोऽश्मपुमान्कैश्चित्त्रासः स्मरसुरौकसि ॥१७॥ तत्रावलम्बितं प्राप्य पाणिस्पर्शेन चामरम् । कुमारकेशबुद्ध्यान्येऽच्छिदन्दुर्वाक्यदुर्धराः ॥१८॥ केऽपि कोपाकुलाः प्राप्य प्रौढाश्मकरिणः करम् । चक्रुर्दन्तदष्टोष्ठाः कुमारेन्द्रभुजभ्रमात् ॥१९॥ इत्यनेकविधोद्दामसंग्राममयकौतुकः । चमूचारः कुमारस्य चकार नयनोत्सवम् ॥२०॥ एवं श्रुत्वा चमूचित्रमूचिवान्सचिवं नृपः । पुमानसावसामान्यः सन्मान्यानीयतामिति २१ अथ गत्वा त्वरावेशराजिना राजवाजिना । नास्मिन्वीरे विरोद्धव्यमित्यूचे सचिवश्चमूम् ।२२। ईदृग्मन्त्रिगिरा शान्तमनसः पृतनाजनाः । सद्यो दृष्टदृशः स्वस्मिन्नत्वा युद्धं ललज्जिरे ।२३। सचिवस्तु विमुच्याश्वं गतः स्मरमन्दिरम् । अग्रेकुमारमारूढविनयां वाचमाचरत् ॥२४॥ धीरचूडामणे वीर गम्भीरगुणनीरधे । त्वन्मुखेन्दौ नृपश्चक्षुश्चकोरयितुमिच्छति ।२५। उत्थानमेव भूमीपसमीपगतये ततः । वितनार कुमारस्तद्गिरमुत्तरमुत्तरम्

॥२६॥ रथेन प्रथितेनाथ मन्त्रिनाथनिदेशतः । अगादगारं जगतीभुजङ्गस्य महाभुजः ॥२७॥ क्ष्माजानिस्तमायान्तं सभान्तर्भान्तमंशुभिः। उपमानामनध्यायं निध्याय ध्यायति स्म सः ।२८। स धन्यः स सतां मान्यः पश्येद्यः सकृदप्यमुम्। बन्धुः श्रीबन्धुरो येषामेष तेषां तु किं ब्रुवे ॥२९॥ तासां तु सफलं जन्म दूरे तासामनिर्वृतिः । प्रेम यासामसौ कामः सौहृदेन हृदेच्छति ॥३०॥ ईदृग्ध्यानसुधापानरसमानसमानमत् । इलातलमिलन्मौलिः कुमारः कामुकं भुवः ॥३१॥ ततः प्रीतिं परां बिभ्रदभ्युत्थाय धराधवः । दूरादुल्लासयन्पाणी वाणीमेतामुवाच तम् ।३२। गुणमालिन्समालिङ्ग ममाङ्गानि समुत्सुकः । इमान्यमृतपानेन हृष्यन्तु रसनेन्द्रियम् ।३३। अथार्पितपरीरम्भं दोर्भ्यां संभाव्य भूविभुः । निवेश्य गुणसंकेतस्थानमङ्के तमभ्यधात् ॥३४॥ प्रवीर भवता हीरप्रतिवीरगुणैर्गुणैः । को वंशः सर्ववंशानामवतंसः कृतिन्कृतः ॥ ३५ ॥ स्वाभिधेयसुधासिक्तैरक्षरैरभिषिञ्चसि । भवदुःखाग्नितप्तानि सज्जनानां मनांसि कैः ।३६। कैरस्मद्वसुधाभाग्यैराकृष्टेन त्वयाधुना । अकारि स्ववियोगेन खेदिनी मेदिनी च का ॥३७॥ ईदृक्षवेषसंभाव्यस्तव पाणिग्रहोत्सवः । कस्याः सफलयामास जीवितं जन्म वर्ष्म च ॥३८॥ दृक्प्रियेऽपि त्वयि प्रापुर्मण्डलानि किमन्धताम् । उलूकमण्डलानीव भासुरे वासरेश्वरे ॥ ३९ ॥ इत्युक्ते भूभुजाचख्यौ कुमारश्चरितं निजम् । कुट्टसैन्यान्धताहेतुं न वेद्मीति जगाद सः ॥ ४० ॥ अथ धात्रीशमन्त्रीशश्रेष्ठिश्रेष्ठैरतन्यत । प्रमोदप्रीणितं पुत्रीपाणिग्रहमहामहः ४१ श्लोकासियन्धुताप्रीतिबन्धुरेण सुबन्धुना । तदुक्तिश्रवणादेत्य कुमाराय ददे मदः ।४२। कुमारस्य प्रसादेन धनं धात्रीश मेऽधुना । इति विज्ञपनात्तेन विशेषात्तोषितो नृपः ॥४३॥ कुमारेण समं प्रीतिवार्ताभृतमिलाभृतम् । गत्वापराह्णकालेऽथ वनपालो व्यजिज्ञपत् ॥४४॥ स्वामीन्को-

ऽप्यथ दक्षोघवारणधारणो मुनिः। उत्तीर्य व्योमतोऽकार्षीत्कायोत्सर्गं वनेऽधुना ॥४५॥ इत्यभिश्रुत्य सत्कृत्य वनीशम-
वनीशिता। ययौ समं कुमारेण मुनेरुत्कण्ठया वने ॥४६॥ नमस्यतो नरेशादीनभव्यान्संभावयन्नथ। ज्ञानत्रयमयः
कायोत्सर्गमप्यमुचन्मुनिः ॥ ४७ ॥ देशनां भवाकान्तारतापनिर्वापनोचिताम्। व्यधान्मुक्तिपुरद्वारसुधासिन्धुं
यतिस्ततः ॥४८॥ सुबन्धोः स्वस्य च प्राच्यं कर्मवैचित्र्यकारणम्। भवं भूपभवोऽपृच्छद्देशनान्ते नतो यतिम् ॥४९॥
मुनीन्दुरपि दन्तांशुच्छलप्रचलदश्चलाम्। आन्दोलयत लीलायां दोलायामिव भारतीम् ॥५०॥ श्रीहस्तिपुरमित्यस्ति
भुवस्तिलकवत्पुरम्। सेव्यन्ते कृतकीर्त्यम्बुमज्जनैर्यज्जनैः श्रियः ॥५१॥ तत्रासीदद्वितत्रासी सुमित्र इति भूपतिः। यत्प्रता-
पतानिन्यां निन्ये भानुः प्रसूनताम् ॥५२॥ तस्य सूनुरभूद्विश्वसेनाख्यो विश्वभूषणम्। यः कलानां गुणानां च शङ्के
सङ्केतकेतनम् ॥५३॥ अदृष्टयैव दृष्ट्या स स्वभावाविर्भवत्कृपः। ददर्श सर्पतः सर्पानपि दर्पातिपातिनः ॥५४॥
कदाप्यन्यायवल्लीनां मरकरेऽपि न तस्करे। करुणाकरिणीविन्ध्यो वधबुद्धिं व्यधत्त सः ॥५५॥ अपराधपराधीने क्रोधा-
सीनेऽपि विद्विषि। न कदाचिदसौ चक्रे मत्सरं विश्ववत्सलः ॥५६॥ चत्वारोऽस्य कलासारसूरवीरजयाख्यया। मन्त्रिक्ष-
त्रवणिग्वैश्यनन्दनाः सुहृदोऽभवन् ॥५७॥ एभिः समं स मन्त्रीन्द्रपुत्राद्यैर्मोदद्रुमः। चतुर्भिः शुशुभे खेलन्धर्मैरात्मेव
धीमतः ॥५८॥ स प्रैक्षत कृपाशीलो लीलोद्यानेऽन्यदा व्रजन्। चण्डालैश्चालितं कंचिच्छूलमूलचरं नरम् ॥५९॥
दशामीदृशमागच्छत्किमागः कलयन्नयम्। इति भूपभुवा पृष्टश्चण्डालपतिरालपत् ६० नभोरत्नसपत्नाभरत्नाभरणपेटिका।

१ लतया. २ वंशे.

त्वन्मातुरसुनाहारि राजासौ समहारि तत् ॥६१॥ मन्मातुर्विस्तहर्तायं हन्तव्यः स्वेच्छया मया । इत्युदित्वाथ तेभ्यस्तं
कुमारश्चौरमग्रहीत् ॥६२॥ अन्यायाद्गृह्यमाणा श्रीर्मणिः फणिपतेरिव । मर्त्येषु मोहमत्तेषु दत्ते मृत्युमसंशयम् ॥६३॥
आकृष्टिमन्त्रे लक्ष्मीणां विष्टियन्त्रे महापदाम् । धर्मस्य जीवितप्राये मतिर्न्याये चितन्यताम् ६४ इत्युक्त्वा शिक्षयित्वायं
कुमारेण मलिम्लुचः । वरचीवरदानेन तोषितः प्रेषितो ययौ ।६५। त्रिभिर्विशेषकम् ॥ एकदा राजसेवार्थं व्रजन्राजगृहाजिरे ।
प्रभूतां मण्डलीभूतां भूपजः प्रैक्षत प्रजाम् ॥६६॥ किमत्रेति कुमारेण पृष्टः कोटीरयन्करौ । व्यक्तभक्तिकलादक्षस्तलारक्षो
जगाद गाः ॥६७॥ निजा निजघ्निरे येन विपर्याद्छद्मसद्मना । त्वरावत्पत्रसेनेन श्येनेनेव पतत्रिणः ॥६८॥ प्रच्छन्न
सुनियुक्तेन रसदानेन यः सदा । हन्ति नो दन्तिनो लीलाशैलानिव जयश्रियः ॥६९॥ जगत्यस्ति समस्तेऽपि नास्माकं
यत्परः प॰ : । सैष विक्रमसेनाख्यस्तामलिप्तीपुरीश्वरः ॥७०॥ वीरसेनेन सेनान्या छलघाटिकया धृतः । क्षेपितः क्ष्माभुजा
हन्तुमिह मन्तुमहोदधिः ॥७१॥ चतुर्भिः कलापकम् ॥ इति श्रुतिकृतक्रोध इवाकृष्टं प्रनर्तयन् । कृपाणं भृकुटीभीमभालः
कालकटाक्षवत् ॥७२॥ मन्तुमन्तममुं हन्ता हन्तायं भूपभूः स्वयम् । इति कौतूहलोत्तालालोके लोके स्थितेऽभितः ॥७३॥
मृत्युर्ममायमायातीत्युदग्रत्राकुलचक्षुषः । तामलिप्तीपुरीभर्तुरुपर्यागत्य वेगतः ७४ कृपाश्रुपूर्णदृक्प्रीत्या वपुः सपुलकं वहन् ।
असौ जगदसंबन्धयन्नुर्बन्धनमच्छिनत् ॥७५॥ चतुर्भिः कलापकम् ॥ त्वरया ये मनांसीव मनसामपि रेजिरे । तैरश्वैर्वि-
श्वसेनेन प्रेषितः सः ययौ जवात् ॥७६॥ तत्परिज्ञाय विच्छायः कुपितो नृपतिर्जगौ । कुमारं प्रति सारङ्गपतिवन्निष्ठुरस्वरः
॥७७॥ येनैकेन हतेन स्याद्धनां देहिनां सुखम् । स वध्यः शुद्धबुद्धीनां कृपातिशयलिप्सया ॥७८॥ कृपा ते कृपपातेन

किमियं न क्षयं गता । यद्विपं मुञ्चता देशः पातकिन् घातितस्त्वया ॥७९॥ कुर्वन्भूरि स्वदेशघ्ने निर्विवेक कृपां रिपौ। त्वमप्यमि विपक्षो मे न स्थेयं मद्भुवि त्वया ॥८०॥ इति व्याहृतिमाकर्ण्य कुमारस्तारसंमदः । स्फारविक्रमत्कारचनं वचनं दधौ ॥८१॥ श्वसँल्लसन्ग्रमन्को न जन्तून् हन्ति सहस्रशः । तदेकस्य वधः कस्य प्राज्यप्राणिप्रियाय न ॥८२॥ एवं मति मतिप्रष्ठैर्बहूनां हृष्टिहेतवे । को हन्तव्यः क्व कर्तव्यः कृपावद्भिः कृपाकणः ॥८३॥ तन्मन्ये सर्वथा नाथ दूरव-स्थागतेऽङ्गिनि । मिश्रामिश्राविचारेण प्राणित्राणं विधीयते ॥८४॥ सहन्त एव ये हन्त शत्रुं तेऽपि शिवाध्वगाः । ये तु तत्रोपकुर्वन्ति तेषां गतिमवैति कः ॥७५॥ तद्विपं मुञ्चतस्तात क्व मेऽभूदविवेकिना । क्व वास्मि द्वेषिपक्षोऽहं त्वत्पादा-म्बुजषट्पदः ॥८६॥ यदादिष्टं च देवेन मन्मही मुच्यतामिति । तद्रतोऽयमहं पापं पितुराज्ञाभिदं विदुः ॥८७॥ इत्युदीर्य महावीर्यः प्रस्थितो दूरदेशधीः । प्रावृषीवाम्बुजाद्धंसः पुंवतंमः स मंमदः ।८८। कृपायाः परमप्राणः परत्राणाय शुद्धधीः । योऽस्माकं हृदयाधारः स कुमारः क गच्छति ॥८९॥ पराभूतान्परैः पाति यो मातेव पितेव नः । जगतां जीवितधारः स कुमारः क गच्छति ॥९०॥ जगन्त्यपि विजानाति यः स्वस्येव कुटुम्बकम् । पवित्रचरितोदारः स कुमारः क गच्छति ॥९१॥ शरीरं जीवितेनेव येनैकेन चकास्ति पूः । कृताखिलपरीहारः स कुमारः क गच्छति ॥९२॥ इत्याक्रन्दपरैर्म-न्ददृग्भिस्त्यक्तचेतनैः। पौरैः प्रेक्षितसंचारः कुमारो निर्ययौ पुरात् ॥९३॥ पञ्चभिः कुलकम् ॥ निर्याते जीवितप्राये वीरे-ऽस्मिन्गुणवेश्मनि । नगर्या नागराश्चक्रुरपस्नानमिवाश्रुभिः ॥९४॥ पौरेऽनुगन्तुकामेऽपि स्थिते क्षितिपतेर्भयात् । सुहृदस्ते महासत्त्वाश्चत्वारोऽपि तमन्वगुः ॥९५॥ शुशुभे-स स भूदेशो यं यं सोऽर्क इवागमत्। यं यं मुमोच स श्रीमान्स

स निःश्रीकतां गतः ॥९६॥ विलङ्घ्य पञ्चभिः कंचिद्वनदेशं दिनैरसौ । क्वचिद्ग्रामे गतस्तस्थौ सरस्तीरे तरोस्तले ॥९७॥ तत्र क्षत्रवणिक्पुत्रौ शूरवीरौ वरस्वरौ । ग्रामगर्भौत्किमप्यन्नं समादाय समागतौ ॥९८॥ तौ तु मन्त्रिभिपत्पुत्रौ कलासारजयौ स्यात । कारयांचक्रतुर्विश्वमेन देवार्चनक्रियाम् ॥९९॥ अथ सोऽतिथये पश्यन्द्विशो मासोपवासिनम् । मुनिं मंक्षिष्ठ धन्यानां फलन्त्याशु मनोरथाः ॥२००॥ तत स्वच्छन्दचतुरः पप्रच्छ चतुरः सखीन् । कुमारः पारणाहेतोरन्नं दातुमना मुनौ ॥१॥ क्षुधान्धैः सन्निदाक्षिण्यमायाभावनया ततः । उक्तं वणिग्भिपग्मन्त्रिनन्दनैर्दीयतामिति ॥२॥ शग्स्त्वुत्साहनान्याह मन्ये धन्येतरैर्नरैः । पात्रमत्र क्षणे नेदृग्दृश्यं द्राग्द्दीयतामिति ॥३॥ अथाभ्युत्थाय भूनाथसूनुनाभ्यर्थितो मुनिः । दक्षो निर्दूषण जानन्नन्नमादातुमुद्यतः ॥४॥ आनन्दार्णवकल्लोलदीकरायितदृक्पयाः । कुमारेशः समारेभे तस्मै दातुमनातुरः ॥५॥ दत्ते भोज्यार्धमात्रेऽथ स्मरः माकूतमभ्यधात् । कुमार त्वं कृपाधारः क्षुधार्तान्विषु नापरः ॥६॥ विज्ञाय तदभिप्रायमपि साधौ निवेषति । कुमारः पुरुषाहारमानमन्नमदान्मुदा ॥७॥ चलमानस्य निःसङ्गपतेरग्रमथैक्षत । कुमारः पश्चिमं स्फारद्द्रुमण्डलमण्डलम् ॥८॥ सम स मित्रैर्भूजानिजनिर्जनितभोजनः । जग्मुत्साहयन्साधुचिकित्सात्युत्सुकोऽभवत् ॥९॥ विश्वसेनकलासारौ शुश्रूषां चक्रतुर्यतेः अमजयत्रयः शूरवीरानीता महौषधीः ॥१०॥ इति क्रमेण निःक्रान्तकजि सश्रान्तकान्तते । मुनौ संमदविश्रान्ते तमिस्रान्तेऽचलन्नमी ॥११॥ क्रमयामिकतावश्यत्रयस्यगणमध्यगः । क्षपायां विपिने क्वापि सुष्वाप क्ष्मापनन्दनः ॥१२॥ तृतीययामिनीयामयामिके जयनामनि । प्रमादतः प्रसुप्तेऽत्र दैवाद्दावानलोऽज्वलत ॥१३॥ कुमारो द्राग्जजागार स्फुटद्वेणुघटास्वनैः । प्रमादसुप्तस्तत्रको लोकशोकरथैरिव ॥१४॥ भाव॰

त्पश्यत्ययं तावद्दावानलशिखावलिः। नृत्यतीव वनं प्राज्ययोजनं प्राप्य भोजनम् ॥१५॥ उत्थाप्य सुहृदो यावत्करोत्येष पलायनम्। तावद्बभार निर्द्धारप्राकाराकारतां दवः ॥१६॥ स निर्जिगमिषुर्दौवारिकं तु निर्गन्तुमक्षमः। संभ्रमी बम्भ्रमीति स्म मिथ्यादृष्टिर्भवादिव ॥१७॥ अनल्पाः स विपत्कल्पाः क्षिपन्कीला दवानलः। धूमैस्तमान्धयन्मोह इवाभव्यं कदाग्रहैः ॥१८॥ कामं संकटयामास कृशानुस्तं क्रमान्मिलन्। परितः सरितः पूर इव द्वीपासिनं जनम् ॥१९॥ यत्र यत्र जगामायं वयस्यास्तत्र तत्र ते। अन्वगुस्तं शुभात्मानं पुरुषार्थास्त्रया इव ॥२०॥ तापव्यापदि संभ्राम्यन्स बभावात्मपञ्चमः। अक्षग्राम इवोद्दामव्यथाया विपिनश्रियः ॥२१॥ चेलान्तं चिकुरान्तं च गृह्णन्कीलाग्रपाणिना। मुहुराच्छोटितो वह्निस्त्रसद्भिस्तैश्चपेटया ॥२२॥ अगम्येषु प्रदेशेषु सर्वेष्वेकप्रदेशगान्। नृमांसस्वादलोभीव दावस्ताञ्जिह्वयालिहत् ॥२३॥ तेषां कीलाग्रचकितैः संकुचद्भिः समन्ततः। अङ्गैरङ्गेष्विव तदा प्रवेष्टुमुपचक्रमे ॥२४॥ रुद्धायां जीविताशायामाशाभिः सह वह्निना। क्षणेऽत्र सुहृदः प्राह महीदयितनन्दनः ॥२५॥ आकृष्ये मन्त्रेवाहमाकाशं प्रति संप्रति। आलिङ्गत मदङ्गं तन्मा मृत्यौ विरहोऽस्तु नः ॥२६॥ अथ लग्नौ दृढं वीरजयौ पदसरोजयोः। कुमारस्य कलासारशूरौ तु करपद्मयोः ॥२७॥ अमी समीरसंवर्तहृता इव चमत्कृताः। आरामुक्ता इव दवज्वालाभिः खमथागमन् ॥२८॥ तापातुरस्फुरज्जन्तुपटलं ज्वलनं ततः। तेऽपश्यन्पुरुषोत्तंसाः संसारमिव योगिनः ॥२९॥ अथो दवदवीयस्यां ते वयस्याः क्षितौ स्थितम्। स्वमोत्थितमिवात्मानं कलयन्ति स्म विस्मिताः ॥३०॥ यावत्किमिदमित्यन्तश्चिन्तां विरचयन्ति ते। तावदाविरभूत्कोऽपि पुरः श्रीभासुरः सुरः ॥३१॥ कमलाभमुखोन्मीलत्कलहंसकलस्वरः। स जगौ जगतीजानितनयं विनयान्वितः ॥३२॥ शिक्षयित्वा

त्वयामोचि चौरः कारुण्यगौर यः। सोऽहं सद्धर्मनिर्माणादीदृशीं श्रियमश्रयम् ॥३३॥ विपन्निपतितं मत्वा त्वामवधि-
नाधुना । प्राप्तोऽस्मि प्राणदानेन क्रीतानां मनयो ह्ययम् ॥३४॥ एवमुक्त्वा समित्रस्य वपुर्नृपतिजन्मनः। स चकार करस्प-
र्शादतापं दलितश्रमम् ॥३५॥ नाद्य प्रभृति दुःखस्य लवोऽपि भविता तव । इत्युदित्वा स विद्योतैर्द्योतयन्द्यां तिरोदधे
॥३६॥ तेऽपि तोयरुहभ्रान्तभृङ्गीगीतेऽरुणोदये । कान्तारान्ताय संचेलुस्तच्चरित्रार्द्रचेतसः ॥३७॥ तीरे तरङ्गिताकण्ये
कारुण्येन व्यलोकितैः। आपतद्विपिनक्रोडे क्रोडानामाकुलं कुलम् ॥३८॥ युद्धाय धावता यूथं पश्यता नश्यता मुहुः। खेदितं
मेदुरेणाग्र प्रोथिनाथेन केनचित् ॥३९॥ कंचिदञ्चितकोदण्डमुद्दण्डहयमण्डनम्। उत्किरीटं नरं प्रेक्ष्य कुमारस्तारगीर्जगौ
॥४०॥ युग्मम् ॥ त्वमीशोऽसि महाभाग महीभागस्य कस्यचित्। अङ्ग त्वदङ्गलक्ष्याणि लक्षणानि वदन्त्यदः ॥४१॥
राज्ञां द्विपोऽप्यवध्यास्ते ये दधुस्तृणमानने । नृहंस हंसि तज्जन्तून्किमन्तृर्णिक तृणाननान् ॥४२॥ अकृताङ्गपरिष्काराः
सदाचारा वनौकसः। मुनीन्द्रा इव विश्राव्याः पशवो न विवेकिना ॥४३॥ हन्ति जन्तुः पुरा हन्तॄनेभिरग्रे च हन्यते ।
तद्वध्यरक्षया दक्षः वैरं स्याद्वैरपारगः ॥४४॥ कां योनिं न जगामायमात्मा प्रतिकुलं किल । तत्सर्वस्यापि सर्वोऽपि
बन्धुर्वध्योऽस्तु कस्य कः ॥४५॥ इति क्षत्रत्वधर्मीत्वनीतिसौजन्यजन्यया। कृपया नृपकोटीर रक्ष्यतां रक्ष्यतां पशुः ॥४६॥
इत्युक्तिश्रुतिहृष्टोऽयमुत्तीर्य त्वरया हयात्। लुठन्कुमारपादारविन्दयोरिदमब्रवीत् ॥४७॥ त्वत्प्रेष्यस्यापि मे जन्तुजानघात-
कृतागसः। त्वयि निर्लक्षमाभाजि क्षमस्वेति न भाति वाक् ॥४८॥ अथवाहं तवालोकविगलद्वृजिनव्रजः। न किंचि-
त्क्षमये साक्षाद्भीरुजां किमु जायुभिः ॥४९॥ कुमार नृपतिद्वारि बद्धस्य लुठतः क्षितौ। तदा प्राणप्रदानेन त्वया मे

जनकायितम् ॥५०॥ तामलिप्त्यां पुरि स्वाम्यं ततः स्वामिन्नुरीकुरु । इहैश्वर्यं न मे युक्तं पीतरीव त्वयि स्थिते ॥५१॥
अथामुं तामलिप्तीशं जानन्भूजानिनन्दनः । उत्थाप्य प्रीतिवर्यश्रीः पर्यरब्ध प्रमोदिनम् ॥५२॥ निजदेशपरीवारपरीहार-
निबन्धनम् । अथाख्यत्पृच्छते सोऽस्मै कुमारः कारणान्तरम् ॥५३॥ अथ स्फारास्यफेनासु हयसेनासु हेषया । हसन्ती-
ष्विव चेतांसि समेतासु त्वराभरात् ॥५४॥ अमूढतुरगारूढं प्रौढभक्तिर्धराधिपः । कुमारं ससुहृद्वार नगराय निनाय तम्
॥५५॥ युग्मम् ॥ हस्तपादाग्रलग्नेन भूपेन व्यक्तभक्तिना । लक्षणानां गणेनेव स राज्येऽध्यासितो बलात् ॥५६॥
वेत्रीभूय पुरः प्रीत्या नरदेवः स्वसेवकान् । पदद्वयं कुमारस्य नमस्कारयति स्म सः ॥५७॥ एवं सेव्यपदो विश्वसेनस्तेन
महीभुजा । धामभिस्तामसौ तामलिप्तीं चिरमभूषयत् ॥५८॥ इत्यशेषं निशम्यास्य चरेभ्यश्चरितं नृपः । सुमित्रः विप्रिये
पुत्रपुण्यपात्रत्वनिश्चयात् ॥५९॥ यास्यता जनकेनाथ योगभोगधिया वनम् । अयमाकार्य नाकेन्द्रप्रतापः क्ष्मापतिः कृतः
॥६०॥ सुहृद्भिः सह हृद्भित्तिचित्रितान्योन्यमूर्तिभिः । स चकार चिरं राज्यं सुकृतैककृतोद्यमः ॥६१॥ महीभोग-
महीनं ते भुक्त्वाऽऽनते सुरौकसि । जग्मुः पश्चापि तत्रापि मैत्र्यपात्रमिमेऽभवन् ॥६२॥ क्रमात्समस्तमप्येते पीत्वा स्वर्ग-
सुखामृतम् । तदर्जनधियेवोर्वीतलं पुनरवातरन् ॥६३॥ स जीवो विश्वसेनस्य रतिसार भवानभूत् । जीवस्तु क्षत्रपुत्रस्य
सुबन्धुत्वमधारयत् ॥६४॥ जयवीरकलासारजीवाः सौभाग्यमञ्जरी । प्रियंवदा सुतारा च कन्याः संजज्ञिरे पुनः ॥६५॥
चञ्चद्गुणप्रपञ्चानां पञ्चानामपि तेन वः । जयत्ययं पृथुस्थेमा प्रेमा प्राग्भवसंभवः ॥६६॥ जयाद्यैर्यन्मुनौ दानं मायया नुमतं
तदा । भाग्ये भोग्यस्य तुल्येऽपि स्त्रीत्वं तेषामिदं ततः ॥६७॥ त्रयाणां हृदयं तेषामजानन्नन्नदानकृत् । आहारस्यान्तरायेण

त्रिदिनं दुःखभागभूः ॥६८॥ अथाहारे मुनीन्द्राय दत्ते यत्ते पुरस्तदा। कुमार त्वं कृपाधारः क्षुधातांविषु नापरः ॥६९॥ इति स्तुतिवचोभङ्ग्या क्षुधार्त्तं स्व निवेदयन्। अल्पेतरान्नदानस्य निषेधं क्षत्रसूर्न्यधात् ॥७०॥ सुयन्धोरर्धभुक्तैव तेन श्रीमुंवतश्च्युता। पक्षिणः फलवत्स्फार विषाद ददती हृदि ॥७१॥ त्रिभिर्विशेषकम् ॥ यद्भवद्भिर्भवभ्रंशकमप्रथमसाधकम्। चक्रे त्रिकमुनेरङ्गं तद्वो रूपर्द्धिरीदृशी ॥७२॥ त्वमवश्यः पुरा दृष्टया यदुष्टानप्यदुष्टया। त्वया कालमुखात्कृष्टा यत्प्राज्या हन्त जन्तवः ॥ ७३ ॥ तत्त्वां प्रत्यधुना कोऽपि विरोधं विदधाति न। ये च किंचिद्भिद्यन्ते दधते युधि तेऽन्धताम् ॥७४॥ युग्मम् ॥ ददानि देहिनां पुण्य कानि कान्यद्भुतानि न। अपि देवा यदेताप्य भवन्त्याश्चर्यभूमयः ॥७५॥

एवं प्राग्भवमाकर्ण्य रतिसारे रतिस्पृशि। भूपो भक्तिनमन्मौलिरित्यपृच्छन्मुनिप्रभुम् ॥७६॥ लक्षणानि निरीक्ष्यन्ते क्षोणिरक्षाक्षमाणि ते। अथापि चास्ताकण्यो भगवन्भाषते भवान् ॥७७॥ वयसीह ततस्तत्र तरुणीकरुणोचिते। अपि राज्यमभित्यज्य किमात्मा तपसेऽर्पितः ॥७८॥ अथ दन्तांशुसंदोहच्छद्मना देहिनीमिव। अनर्तयद्गिर रङ्गन्मृदङ्गाभध्वनिर्मुनिः ॥७९॥ तारुण्य वा जरा वास्तु वास्तवः कस्तवःक्षणः। यत्र वा तत्र वा मृत्युरनवस्थो हि देहिनाम् ॥८०॥ राजन्नरमि शक्तिः क्व क च शक्ति विना तपः। परिव्रजन्जनस्तस्यां योध नयति मोहताम् ॥८१॥ शक्तिकार्याणि कार्याणि जराया मारभेत यः। तस्य महस्यते बुद्धिः पलितच्छलतस्तया ॥८२॥ मृत्योश्चामरधारिण्या भान्त्या पलितचामरैः। जरयालिङ्गितस्यास्तु फलदा कस्य धर्मधीः ॥८३॥ मोहमत्तद्विपालानतम्लरुणिमा पुनः। मदद्भिन्नो न कस्यैष स्यात्कुकर्मालिमालितः ॥८४॥ अमु लीलास्पदीभक्ते विवेको केशरीव मे। आगत्य वर्त्मना येन तदपूर्वं निवेश्यते ॥८५॥

श्रीसूर्यपुरमित्यस्ति पुरं यत्रास्तिको जनः । धत्ते धर्मनृपक्रीडाकल्पद्रुमवनश्रियम् ॥८६॥ इहाजनि महीजानिर्महेन्द्र इति विश्रुतः । अन्तर्वैरि[1]द्विपव्रातं शास्त्रं शस्त्रं च यो दधौ ॥८७॥ कुलोचितासु विद्यासु गुरुभिः कारितश्रमः । तस्याहं नन्दनश्चन्द्रयशा इत्यभिधामधाम् ॥८८॥ दर्पी पोडशवर्षीयं सुधावर्षी गिरां भरैः । भवतापा कदापीदं मामुपांशु नृपो जगौ ॥ ८९ ॥ राज्यं ससारकान्तारे शृङ्गाटोऽयमटन्निह । कलितस्खलितः श्रीभिः पिशाचीभि' प्रपात्यते ॥ ९० ॥ वहन्ति मणयो मोहमहीपमहदीपताम् । यल्लोभलोलुभा नाथः के पतन्ति पतङ्गवत् ॥९१॥ तितीर्षवो भवाम्भोधिं बोधिबोहित्थवाञ्छिताः । त्यजन्ति दूरतो मध्यभूधरानिव सिन्धुरान् ॥९२॥ भवाटवीकुरङ्गाणां तुरङ्गाणां चलात्मनाम् । मोहश्रीदृग्विलासानां गोचरे नो चरेत्कृती ॥९३॥ मोहभूमिभुजङ्गस्य जङ्गमास्थानमण्डपम् । छायाछलात्तले व्याप्तं पातकैस्तस्य सेवकैः ॥९४॥ छत्रं विवेकमार्तण्डप्रकाशभरनाशकम् । न कोऽपि सेवते तादृग्जडताचकितः कृती ।९५॥ युग्मम् ॥ रत्नान्यगाधवर्तीनि स्त्रियो भान्ति भवार्णवे । पुमान्मज्जत्यनुन्मज्जो यत्पाणिग्रहणाग्रही ॥९६॥ एतदीदृग्विधं मोक्तुमशक्तः सकलः कृती । असक्त एव सेवेत शीतभीत ईवानलम् ॥९७॥ तदिदानीमहं मोहादतो निर्गन्तुमुद्यतः । राज्ञां राज्यश्रमः सूनुयौवनान्तो हि नः कुले ॥९८॥ तातो मामिव वत्स त्वां स्वस्थानेऽस्मिन्निवेश्य तत् । मोहवीरस्य कारातः संसारान्निरयेऽधुना ॥९९॥ इत्युक्त्वा वलतो राज्याभिषेकं विरचय्य मे । नृपो लक्ष्यतपोलक्ष्मीयौवनं प्रययौ वनम् ॥४००॥ परिपालयतो राज्य ममापि क्ष्मापशिक्षया । राज्ञी रत्नावली नाम प्राणेभ्योऽपि प्रियाभवत् ॥१॥ भवानुबन्धिनीं जानन्नपि

[1] तन्नाम्ना गिरि ।

तां तद्गतं मनः आक्रष्टुं न क्षमोऽभूवं पङ्कमग्नमिव द्विपम् ॥२॥ लग्नं तस्यां तथा प्रेमवज्रलेपेन मन्मनः । न यथा-कर्षि राज्यश्रीधुरीणैरपि वारणैः ॥३॥ तस्यामुच्छृङ्खलं कामपिशाचेन मनो मम । गृहीतं हन्त नामोचि मन्त्रशैरपि मन्त्रि-भिः ॥ ४ ॥ तदेकायत्तचित्तस्य राज्यश्रीरीर्ष्यया मम । परहस्तं यती तस्थौ वृद्धामाल्यह्रिया यदि ॥ ५ ॥ मानसे मान-सेविन्या तया नित्याश्रितेऽविशन् । स्त्रीसंघट्टभयेनेव न धर्मगुरवोऽपि मे ॥ ६ ॥ इत्यनन्यमना धन्यंमन्यस्तन्न्यस्तलो चनः । अमन्ये मान्मथं पर्व निर्वाणपदमप्यदः ॥७॥ अन्यदा मदनानन्दरसनिद्रावशंवदः । स्वमपश्यमहं स्वप्ने मुक्ता-गिरिशिरश्चरम् ॥ ८ ॥ तस्यामुन्निद्रनिद्रायामुन्निद्रोऽहं तदा हृदा । अचिन्तयमिदं चिन्तान्तरावसरशालिना ॥ ९ ॥ स्वप्नः सर्वोत्तमस्तावन्मुक्तेर्लाभं दिशत्यसौ । किं तु कान्तावशहृदः क तत्संभावनापि मे ॥१०॥ किंकुर्वत्काञ्चना कान्ति-स्तुणन्मत्तगजा गतिः । दासदग्धा दशुल्लासाः कर्करन्मणयो नखाः ॥११॥ चेटत्कर्पूरकस्तूरिमुख्यगन्धो मुखानिलः । यस्या रेणुकणद्विपदुकूला दशनद्युतिः ॥ १२ ॥ युग्मम् ॥ युक्तं तयैकया हन्मे राज्यभोगे श्लथीकृतम् । एतद्रोगं श्लथीकर्तुं कोऽप्युपायोऽस्तु मेऽधुना ॥ १३ ॥ किमस्या न महानीललीलां दधतु कुन्तलाः । हृद्वर्तिभिः कलुषितं श्रुतं मे क्षीरहारि यैः ॥ १४ ॥ किममुष्या मुखं नेन्दुर्यल्लीलामीलितं मम । विवेकमब्जवद्वीक्ष्य हसगौरैर्गतं गुणैः ॥ १५ ॥ अस्या नीलाब्जसदृशो दृशो नित्यधृतस्मिताः । शंसन्ति तत्त्वविज्ञानभानुमस्तमितं मयि ॥ १६ ॥ अगरोमयुमायुर्यधुर्योऽस्या यद्दशं भृशम् । प्रमत्तं मन्मनोऽमुञ्चन्दूरतः स्मरगो रयात् ॥ १७ ॥ एतस्याः कम्बुवत्कण्ठो

१ गच्छन्तो

गम्भीरमधुरस्वरः । कृत्स्नानां मम कृत्यानां प्रयाणायैव कल्पितः ॥१८॥ अप्येतन्मृदुदोर्नालपाशबद्धं निजं मनः । नाहं मोचयितुं शक्तो धिगसारनराधमीः ॥१९॥ लीलयैव विलङ्घेऽहमहो भवमहाटवीम् । तस्यामस्यास्तु दुर्लङ्घ्यो वेणिदण्डो हृदापि मे ॥२०॥ सर्वतोऽपि भवाम्भोधिः सुतरः सुतरामसौ । इहैतन्नाभिगम्भीरावर्तबन्धस्तु दुस्तरः ॥२१॥ एतत्स्मिञ्जानमञ्जीरगलचित्तस्य विस्मृतौ । हसस्येवामलौ पक्षौ धिग्ममोर्ध्वगतिक्षमौ ॥२२॥ इत्यादिध्यानसंलीने मयि स्वं निन्दति स्वयम् । अपठन्मातृकतालस्वरं वैतालिका बहिः ॥२३॥ निद्रां नरेन्द्र मुञ्चाशु बोधस्य समयो ह्यसौ । हन्तुं तमोऽभ्ययाद्भानुः समोहमिव सद्गुरुः ॥२४॥ एनामुपश्रुतिं मुक्तिसूचिनीं बन्दिनां गिरम् । स्वप्नसंवादिनीं जानन्नानन्दमहमासदम् ॥२५॥ क्षणेऽस्मिञ्जाग्रती साग्रे प्रेक्ष्य मां प्रथमोत्थितम् । ह्रीनम्रास्या वचः किंचिन्नोचे मयि चटूचितम् ॥ २६ ॥ अगाधबोधिदुग्धाब्धिसंमुग्धान्तरचक्षुषा । ममभापि मयाप्येषा न किंचिन्नर्मभाषया ॥ २७ ॥ अथाग्रभागमागत्य प्रणिपत्य च मां मुदा । व्याजहार प्रतीहारी हारीकृतरदद्युतिः ॥२८॥ देव विज्ञपयत्येवममात्यो मतिसागरः । चिराद्भवन्मुखालोककौतुकी सेवको जनः ॥२९॥ इति तद्वचनान्तेऽहं नित्यप्रत्यूषकृत्यकृत् । सेवितो सेवकस्तोमैः सभाभुवमभासयम् ॥ ३० ॥ ततः प्रणमतः सर्वानुर्वीनाथान्निरूपयन् । वीक्ष्य कस्यापि हस्तेऽब्जं तामब्जदृशमस्मरम् ॥३१॥ वचोवीचीषु पीयूषसध्रीचीषु मनीषिणाम् । तदा तद्विरहोत्तप्तं न रेमे तत्र मे मनः ॥३२॥ उत्कः क्षिपाम्यहं चक्षुर्यावदन्तः पुरं प्रति । तावद्वारुतनुं कंचिद्दुदश्चदतुलद्युतिम् ॥३३॥ गाढग्रन्थिपरीधानं कटिवेष्टोत्तरीयकम् । अंसलम्बितनिस्त्रिंशमुरोबद्धासिधेनुकम् ॥ ३४ ॥ बिभ्राणं दक्षिणे पाणौ ताम्बूलदलमण्डलीम् । वामे

तया तु हर्षिण्या कृतहस्तावलम्बनेम् ॥३५॥ चक्षुपा धैर्यधुर्येण पश्यन्तं मामवज्ञया। नरं निरूपयामास निर्गच्छन्तं द्रुतैः पदैः ॥३६॥ चतुर्भिः कलापकम् ॥ क एप क नयत्येतामिति कोपारुणेक्षणम्। मामित्यूचे हसन्ती सा तं स्थिरीकृत्य सत्वरम् ॥३७॥ अहं महापातकिना बन्दीचक्रे चिरं त्वया। प्रयामि संप्रति न्यस्य त्वदीयहृदये पदम् ॥३८॥ ईदृक्तद्वचनक्रुद्धो भटानित्यहमभ्यधाम्। म्रियतां म्रियतामेष हन्यतां हन्यतामयम् ॥३९॥ ततो मरुत्वरातारप्रचरच्चरणः क्षणात्। तया सह स हर्षिण्याऽगमद्गृहबहिर्महीम् ॥ ४० ॥ एप यात्येप यातीति प्रध्वानैरनुधावताम्। पुरःस्था अपि पौरास्तं न धर्तुं शेकुराहताः ॥ ४१ ॥ उत्फुल्लफेनया धावद्धयानां सेनया मया। मनसेवेन्द्रियग्रामः सोऽन्वगामि प्रवेगिना ॥४२॥ पर्यन्ते पर्यटन्पुर्यास्तदन्वेषपरः पुरः। आलोकयं चमूं कांचित्काञ्चनोद्भासिभूषणाम् ॥४३॥ तदन्तर्भद्रदन्तीन्द्रपृष्ठारूढस्य कस्यचित्। करे तेनार्पि सा सोऽपि तां वामाङ्के न्यवीविशत् ॥४४॥ सा च वाचः सुदूरस्थं मां वीक्ष्य स्त्रीत्वलम्पटा। तदङ्गालिङ्गिनी वामकराङ्गुष्ठमनर्तयत् ॥४५॥ तन्निरीक्ष्य विलक्षोऽहमेतच्चेतस्यचिन्तयम्। अहो महोदधिर्मोहमहिम्नां महिलाजनः ॥४६॥ मदिराया गुणज्येष्ठा लोकद्वयविरोधिनी। कुरुते दृष्टमात्रापि महिला ग्रहिलं जनम् ॥ ४७ ॥ परापकाराहंकारि किं विषं सन्ति हि स्त्रियः। यत्सेवनभवस्तापः परत्रापि न शाम्यति ॥४८॥ स्त्रियां वियतनौ दक्षा लक्षणावैपरीत्यतः। सुधाकरायैरौपम्यं ददुस्तत्र जडा विदुः ॥४९॥ विश्वासघातिनां मौलिरत्नं जानामि योषितः। नरकाब्धौ नरं प्रेम्णा परिरभ्य क्षिपन्ति याः ॥५०॥ अबला इति न स्त्रीभिः कर्तव्यं हस्तमेलनम्। हरन्ति जीवितं पुंसां संशये च क्षिपन्ति याः ॥५१॥ इयं हि मम रक्तस्य प्रतीचीव विवस्वतः। मानम्लानिं ददौ कां तु गतिं

दातेति वेत्ति कः ॥५२॥ धिग्मामेतद्वशित्वेन शिवोदयनिरादरम् । घूकनेत्रमिव ध्वान्तमित्रत्वेनार्कनिःस्पृहम् ॥ ५३ ॥ एतद्वैराग्यतो नैतद्वैरं मुञ्चेऽधुना पुनः । कुलस्यापि कलङ्कः स्यादपमानो हि मानिनाम् ॥ ५४ ॥ यः भदत्ते हृदि पदं तमूर्ध्वं गिलति क्षणात् । अपमानेऽप्यनुद्योगी पङ्कादप्यधमः पुमान् ॥५५॥ क्षुद्रोऽप्युपद्रवं कुर्यान्निकाममपमानितः । विदधुर्मधुहर्तारं विधुरं मधुमक्षिकाः ॥५६॥ गृह्णन्तं रससर्वस्वं भास्वन्तं प्रत्यपक्रियाम् । कांचित्कर्तुमशक्तस्य पङ्कस्यापि स्फुटत्युरः ॥५७॥ दूरे त्यजति मातापि परावज्ञासहं नरम् । क्षममप्यक्षमैर्वेद्रं गजं विन्ध्याटवी यथा ॥५८॥ तदेतस्यापमानाब्धेः पारं गत्वासिनौकया । संसारार्णवपाराय भजिष्ये पोतवद्व्रतम् ॥५९॥ अपमानेऽपि चेद्गृह्णे व्रतं तन्मे निदर्शनात् । मत्पूर्वेषामपि भवत्येषा संभावना व्रते ॥६०॥ यावदित्युद्धतध्यानस्त्यानचित्तोऽस्मि युद्धधीः । सैन्यसर्वाभिसारेण मन्मन्त्री तावदागमत् ॥६१॥ ततोऽन्तरस्फुरद्भूताविर्भूताद्भुतवैरयोः । मम तस्य च सेनाभिः समरः समवर्तत ॥ ६२ ॥ मिथो रथो रथं नागं नागोऽश्वोऽश्व भटं भटः । समियाय समीकाय स्वकायव्ययनिर्भयः ॥ ६३ ॥ समनम्यत कोदण्डैः स्वर्णदण्डैरकम्प्यत । तत्र रौद्रे रणोद्रेके न तु शौर्योद्धटैर्भटैः ॥६४॥ वपुषो निखिलस्यापि शक्त्या मुष्टिप्रविष्टया । दृढयन्तः प्रहरणान्यहितान्प्राहरन्भटाः ॥६५॥ तादृग्युद्धश्रिया धन्यंमन्यो मन्योर्वशं गतः । प्रहारेषु लगत्स्वङ्गे भटः कण्टकितं दधौ ॥६६॥ विलुठत्तुरगव्रातं पतन्मातङ्गमण्डलम् । त्रुटच्छकटसंधानबन्धं नृत्यत्कबन्धकम् ॥६७॥ लोलत्कीलालकल्लोलनालिनीमण्डलं ततः । पक्षद्वयक्षयकरं प्रावर्धत रणक्षणम् ॥६८॥ युग्मम् ॥ भ्राजिष्णुभूरितेजस्कैः क्रमान्मत्पृतनाः परैः । कर्शयामासिरे ग्रीष्मवासरैरिव रात्रयः ॥६९॥ राजबाह्यमथारूह्य जवादिभविशु विभीः । अहं

तेन सह क्रुद्धो द्वन्द्वयुद्धोत्सुकोऽमिलम् ॥ ७० ॥ मयि मुञ्चति नाराचवीचीर्दक्षेण रक्षितः । तेनात्मा च गजेन्द्रश्च तलवर्गश्च मार्गणैः ॥७१॥ स तु निर्नाशयामास मार्गणानां गणैः क्षणात् । मद्बलं सकलं भानुर्भचक्रमिव भानुभिः ॥७२॥ गदादस्त्रं मयामोचि तत्तदेष क्षणादपि । छेकश्छिच्छेद सद्यस्कं भवत्कर्मेव केवली ॥७३॥ पतत्यथ तदस्त्रातैं गजे क्षीणाखिलायुधः । अस्त्रयन्मुष्टिदृढलागमं तदिभमूर्धनि ॥७४॥ धृत्वाथ हस्तयोस्तेन क्षिपन्पादाहतीरहम् । उत्क्षिप्तः पतितो दूरे यन्त्रोत्क्षिप्तग्रावगोलवत् ॥७५॥ सहसा सह सेनाभिः प्राविशन्मत्पुरं स तत् । तन्वन्साकं तयोत्तालहस्ततालः कथा मिथः ॥७६॥ एवमालोकमानोऽहमपमानोच्चयाकुलः । इष्टमिष्टतमेभ्योऽपि गणयन्मरणं तदा ॥ ७७ ॥ यद्यस्ति सुकृतं किञ्चिन्मम तत्तन्निदानतः । मा भूद्भवान्तरेऽपि स्त्रीसङ्गः सत्पथभङ्गकृत् ॥ ७८ ॥ इत्यालपन्पुरः प्रेक्ष्य कूपं तत्र पपात च । सभान्तर्भद्रपीठस्थं स्वं ददर्श च पूर्ववत् ॥७९॥ त्रिभिर्विशेषकम् ॥ ये युधि क्रुधि दुर्धर्षाः क्षताः प्रपतिता मृताः । तानक्षतानहं संसद्गतं पार्श्वतो भटान् ॥८०॥ ये दृष्टाः संगरे पिष्टास्तेषामशृणव रवम् । हस्तिनां हस्तिशालासु वाजिशालासु वाजिनाम् ॥८१॥ अन्तरन्तःपुरं यावत्क्षिप्ता दृक्तावदैक्ष्यत । तद्वालिमाला तादृक्तत्प्रतिकर्मक्रियोन्मुखी ॥८२॥ इत्यद्भुतयुतस्वान्ते मयि कान्तेन तेजसा । अर्कं कर्करयन्कश्चिदाविरासीत्पुरः सुरः ॥ ८३ ॥ तद्विलोकादहं जातजातिस्मृतिरचिन्तयम् । प्राग्जातौ धनधन्याख्यौ सुहृदावहमेष च ॥८४॥ अनेन सह संसारनिःसारत्वविचारवान् । व्रताभिरर्गलस्वर्गलक्ष्मीभोगमुपार्जयम् ॥ ८५ ॥ अभ्यर्थितोऽयमाश्लिष्य दिवः प्राक् च्यवता मया । उद्धर्तव्यस्त्वया मोऽहं भवे मोहार्णवादिति ॥८६॥ तन्नूनममुनैवाहं घटयित्वेति नाटकम् । बोधितो बोधदुग्धानामन्धुना बन्धुनाधुना ८७

इत्युत्थाय मया प्रीत्या सत्कृतः स तिरोऽभवत् । अहं च प्रावजं मङ्क्षु भवारण्यं विलङ्घितुम् ॥८८॥

ईदृक्चरित्रश्रवणाद्भवभीतो भुवः पतिः । राज्ये जामातरं न्यस्य व्रतव्रततिभूरभूत् ॥ ८९ ॥ नृपे विरतिसारेऽथ रतिसारेण भूभुजा । व्योमेव व्योमरत्नेन तेन राज्यमराज्यत ॥९०। नृपाज्ञाकृज्जनध्वंसी नृपध्वंसीव दीव्यति । निरायुध वधं राज्ञामाज्ञाभङ्गं विदुर्विदः ॥९१॥ तन्मल्लोकद्रुहां सद्यो विपदो मद्द्रुहामिव । भविष्यन्तीति देशान्तस्तेनाताड्यत डिण्डिमः ॥९२॥ युग्मम् ॥ तरात्पुण्यप्रभावेण तदैवोद्गच्छदापदः । देशे तस्य परार्तिभ्यो विन्यवर्तन्त जन्तवः ९३ सर्वा अपि स्त्रियः सत्यः सत्यवाक्सकलो जनः । मलिम्लुचो न च क्वापि कापेय न च कस्यचित् ॥९४॥ अपि केलीषु नो बालैरुत्तालैः कलहायितम् । गुर्वभिः स्नेहद्रोहोऽपि कलहो गलहस्तितः ॥ ९५ ॥ तिर्यञ्चोऽपि विषाणाद्यैर्न चक्रुः कस्यचिद्व्यथाम् । आत्मभोगास्पदं रोगा न च किंचिदतन्वत ॥९६॥ न कोऽप्यास्कन्दि मायद्भिर्यन्तरादैरपि क्वचित् । चुल्लीन्धनेष्वपि ज्वालाजिह्वो मर्यादयाऽज्वलत् ॥ ९७ ॥ पान्थवृन्दखिदामात्रजायुभिर्वायुभिर्ववे । ददौ सरः कृपिफलं काले वारि च वारिदः ॥९८॥ सकृत्सिक्तापि विस्फारं पफाल सरसा रसा । तमःशममितं चांशुस्तोमं व्योममणिर्व्यधात् ॥ ९९ ॥ इति प्रभावमुद्भाव्य रतिसारस्य भूपतेः । सर्वेऽप्युर्वीभृतः स्वोर्व्यां तस्यैवाज्ञामवर्तयन् ॥१००॥ सुभूमस्तत्पिताप्येवं श्रुत्वा माहिष्मतीपतिः । स्वदेशे न्यस्य तस्याज्ञां हृष्टोऽमुत्रहितं व्यधात् ॥१॥ तस्याज्ञा यत्र यत्रेन्दोः कौमुदीव स्फुटाभवत् । न पापतमसां भूमिः सा सा भूमरजायत ॥२॥ इति क्रमादशेषायां क्ष्मायां तच्छासनस्पृशि । बभूव धर्मनिर्माणेऽलंकर्मीणोऽखिलो जनः ॥ ३ ॥ इत्यशेषां स्मिता मेष चिरकालीमपालयन् ।

मद्त्तनरकद्वारं भग्नस्वर्गार्गलं भुवम् ॥४॥ कदापि कौतुकागारे प्रियाणां त्रिस्तृगां मुखम्। विलोकयन्नयं प्राप कामं कामपि निर्वृतिम् ॥५॥ इन्दुहृद्ये मुखे भाति चान्दनं चित्रकं न ते। विलुप्य तन्वि तेनेदं कुर्वे कस्तूरिकामयम् ॥६॥ इत्युक्त्वा सात्त्विकस्वेदजलार्द्रैरङ्गुलीदलैः। भूपो लुलोप सौभाग्यमञ्जर्या वर्यकान्ति तत ॥७॥ युग्मम् ॥ अथापतिलका तारशृङ्गारमप्यरापि सा। अरलेन्दुः स्फारतारापि रजनीव रराज न ॥८॥ पुण्ड्रेणैकेन हीनापि यन्निःश्रीकेयमीक्ष्यते। तद्विराजिष्यते कीदृग्मुक्तनिःशेषभूषणा ॥९॥ इति ध्यात्वा विरागोर्मिघर्मितस्वान्तवार्धिना। नृपेण स्वकरेणास्याः क्रमाद्भूषाभरो हृतः ॥१०॥ युग्मम् ॥ ततो हृतशिरोरत्नां निशि निर्दीपसद्मवत्। आकृष्टकुण्डलद्वन्द्वां द्यामिवास्तेन्दुभास्कराम् ॥११॥ गतहारां सुरागारद्वारं निस्तोरणामिव। अकेयूरभुजां लूनपद्मोर्मिसरसीमिव ॥ १२ ॥ अकङ्कणकरां वल्लिमुक्तवृक्षां वनीमिव। क्वणन्मञ्जीरहीनांह्रिमहंसाब्जामिवाब्जिनीम् ॥१३॥ एवं निरस्तनिःशेषभासमानविभूषणाम् दलपुष्पफलत्यक्तां फाल्गुनीयां लतामिव ॥१४॥ तां पश्यन्नान्तरेणाक्ष्णा स दध्यौ नास्ति कुत्रचित्। अप्रक्षालितशुद्धाङ्गः कोऽप्यभूषितभासुरः ॥१५॥ पञ्चभिः कुलकम् ॥ का वान्यस्य कथात्मापि धौतकर्मावलीमलः। ज्ञानदर्शनचारित्रैर्भाति रत्नैरलंकृतः। ॥१६॥ तदस्मिन्कर्ममलिने यत्परिष्करणं तनोः। विशुष्कपश्चाद्भागं तन्मयूरस्येव नर्तनम् ॥ १७ ॥ नाङ्गस्य भूषणैरात्मा भूष्यतेऽस्य तु भूषणैः भूष्यतेऽनिलमप्यङ्गं नभोऽर्कस्य करैरिव ॥१८॥ तत्कार्यः काममात्मायमकर्ममलमण्डलः। ज्ञानदर्शनचारित्रभूषणः कायभूषणः ॥ १९ ॥ इत्यन्तर्ध्यायतस्तस्यात्मनि स्थिरतरं मनः। अदीप्यत यथा दीपो निर्वाते वेश्मनि स्थित ॥२०॥ शुक्लध्यानेऽवतीर्णेऽथ घातिकर्मेन्धनानले। उत्पेदे केवलं लोकत्रयत्रैकाल्यदर्पणः २१

दत्तं शासनदेव्यैष मुनिवेषं समाश्रितः । तयैव विहिते तत्र काञ्चने ऽब्जे कृतासनः ॥२२॥ त्वरायातैः सुरव्रातैः
प्रणतः पुष्पवर्षिभिः । किमेतदिति साश्चर्यैः प्रेक्ष्यमाणः पुरीजनैः ॥२३॥ अन्तःपुरीभिरेताभिरुद्भ्रान्तस्वान्तवृत्तिभिः ।
किमेतन्नाथ नाथेति मुहुरुत्तरमर्थितः ॥२४॥ दशनांशुमिषात्पुण्यं मूर्तिमत्तन्वतीमिव । स जिनो वृजिनोच्छेदावेशिनीं
देशनां व्यधात् ॥२५॥ चतुर्भिः कलापकम् ॥ अहो महोद्भुतैरेव भवसेवकजन्तवः । कर्मभिर्मर्मभिद्रूपैस्ताप्यन्ते सर्वथा
कथम् ॥२६॥ तानि जानीत हे सन्तः संगतानि सदात्मभिः । अष्टसंख्यानि संसारकारणं नामभेदतः ॥२७॥ ज्ञाना-
वरणं दर्शनावरणं वेदनीयकम् । मोहायुर्नामगोत्रान्तरायं तानीति नामतः ॥२८॥ मतिश्रुतावधिमनःपर्यायकेवलाभिधैः
आवृतैः पञ्चभिर्ज्ञानैरावं पञ्चविधं स्मृतम् ॥२९॥ निर्मलापि यथा दृष्टिः पटच्छन्नाल्पदृश्वरी । तथात्माच्छादितस्तेन
तत्पटसमं विदुः ॥३०॥ सागराणां स्थितिस्तस्य स्यात्त्रिंशत्कोटिकोटयः । ततो बध्नाति तत्कर्म पुनरात्मा सकल्मषः
॥ ३१ ॥ दर्शनावरणीयं तु नवभेदैरिति स्मृतम् । पञ्च निद्राश्च चत्वारः स्युश्चक्षुर्दर्शनादयः ॥३२॥ तत्र निद्रा भवेद्यत्र
प्रबोधः स्वल्पहेतुना । निद्रानिद्रात्मनो यस्यां भवेद्दुःखेन जागरः ॥३३॥ ऊर्ध्वस्थितस्य जायेत या जन्तोः प्रचला
हि सा । प्रचलाप्रचला सा तु भवेद्या पथि गच्छतः ॥ ३४ ॥ चिन्तितस्याह्नि कार्यस्य स्त्यानर्द्धिः साधका निशि । सा
पुनर्जायते जन्तोरुदये क्लिष्टकर्मणः ॥३५॥ चक्षुराव्रियते येन तच्चक्षुर्दर्शनावृतम् । शेषेन्द्रियाणां वरणमचक्षुर्दर्शनावृतम्
॥३६॥ अवधिः स्याद्रूपिवस्तुमर्यादा तेन दर्शनम् । करणानपेक्षो बोधरूपो वावधिरुच्यते ॥३७॥ दर्शनं तेन सामा-
न्यार्थग्रहोऽवधिदर्शनम् । तस्यावरणमवधिदर्शनावरणं स्मृतम् ॥३८॥ विश्वं केवलसामान्यं लोकालोकस्य दर्शनम् ।

यदावृणोति तत्प्रोक्तं केवलदर्शनावृतम् ॥३९॥ यथा राज्ञःप्रतीहारोऽनभीष्टस्य जनस्य सः । अपि वीक्षितुकामस्य न
दत्ते नृपदर्शनम् ॥ ४० ॥ दर्शनावरणीयेन रुद्धो जीवोऽप्यसौ तथा । न पश्येद्वस्तु तत्तेन प्रतीहारसमं विदुः ॥ ४१ ॥
युग्मम्॥ समवस्थितिरस्यापि दर्शनावृतिकर्मणः । सागरोपमकटीनां स्युस्त्रिंशत्कोटयः क्रमात् ॥ ४२॥ सातासातभिदा
वेद्य द्विधा मुख्य तयोः पुनः । असातं तिर्यग्नरके सातं मर्त्यामरालये ॥४३॥ मधुलिप्तासिधाराया लेहनं सुखदुःख-
कृत् । यथा तथेदमप्यस्ति तत्तेनासिसम जगुः ॥ ४४ ॥ अवस्थितिरमुष्यापि वेदनीयस्य कर्मणः । सागरोपमितीना हि
स्युस्त्रिंशत्कोटिकोटयः ॥ ४५ ॥ मोहनीयं भवेद्द्वेधात्राद्य दर्शनमोहकृत् । चारित्रमोहनीयं तु द्वितीयं परिकीर्तितम्
॥४६॥ प्रथम त्रिविध सम्यग्मिश्रमिथ्यात्वभेदतः । द्वितीयं पञ्चविंशत्या भेदैस्तदिति कीर्त्यते ॥४७॥ क्रोधमानमाया-
लोभाः स्युः कषायाश्चतुर्विधा. । तत्रैकैकश्चतुर्भेदैर्ज्ञेयः संज्वलनादिभिः ॥४८॥ पक्षस्थायी कषायोऽसौ स्मृतः संज्वल-
नादयः । प्रत्याख्यानः पुनर्मासचतुष्टयकृतस्थितिः ॥ ४९ ॥ अप्रत्याख्यानकः प्रोक्तः स्थितः संवत्सरावधिः । यावज्जीवं
कृतस्थानः स्यादनन्तानुबन्धकः ॥ ५० ॥ घ्नन्त्यमी वीतरागत्वं यतित्वं श्राद्धतां क्रमात् । सम्यक्त्वमपि संसेव्यमाना
जन्तोर्भवान्तरे ॥५१॥ अमरस्य मनुष्यत्वं तिर्यक्त्वं नरकं क्रमात् । यच्छन्त्येवंस्वरूपास्ते कषाया इति षोडश ॥ ५२ ॥
तथा हास्यो भयं शोको जुगुप्सा रत्यरत्यपि । पुंनारीक्लीववेदाश्च नोकषाया इमे नव ॥ ५३ ॥ इत्यष्टाविंशतिर्भेदा
मोहनीयस्य कर्मणः । मन्यात्मनामपि प्रायो दुर्जराः स्युश्चिरं स्थिराः ॥५४॥ मद्यपानाद्यथा जन्तुः कृत्याकृत्यानि वेत्ति
न । मोहनीयादपि तथा तत्तन्मद्यसमं विदुः ॥५५॥ तत्तदेतस्य कर्मभ्यः सर्वेभ्योऽप्यधिका स्थितिः । भवेयुः सागराणां

हि सप्ततिः कोटिकोट्यः ॥ ५६ ॥ आयुश्चतुर्धा नरकतिर्यग्नृसुरसंभवैः । दुर्भेदबन्धभावेन तद्वज्ञनिगडोपमम् ॥५७॥ आयुषः कर्मणोऽमुष्य स्थितिरित्थं प्रकर्षतः । सागरोपमितीनां हि त्रयस्त्रिंशद्भवे भवेत् ॥ ५८ ॥ नामोक्तं प्रथम भेदैर्द्विचत्वारिंशता ततः । सप्तषष्ट्या त्रिणवत्या त्र्युत्तरेण शतेन वा ॥५९॥ गतिजातिशरीराङ्गोपाङ्गबन्धननामकम् । सघातनं संहननं संस्थानं वर्णगन्धने ॥६०॥ रसस्पर्शागुरुलघु पराघातोपघातकौ । आनुपूर्वी तथोच्छ्वास आतपोद्योतमित्यपि ॥ ६१ ॥ विहायोगतित्रसाख्यं स्थावरं सूक्ष्मबादरम् । अपर्याप्तं च पर्याप्तं प्रत्येकानन्तकायकम् ॥ ६२ ॥ सुभगं दुर्भगं चैव स्थिरास्थिरशुभाशुभम् । सुस्वरं दुःस्वरादेयमनादेयं ततः परम् ॥६३॥ यशःकीर्त्ययशःकीर्तिनिर्माणं कीर्तितं ततः । नाम तीर्थकरं चैव चत्वारिंशद्द्वयाधिका ॥ ६४ ॥ गतिश्चतुर्धा नरकतिर्यग्नृसुरलक्षणा । एकद्वित्रिचतुःपञ्चाक्षभेदैर्जातिपञ्चकम् ॥६५॥ औदारिकं वैक्रियकमाहारकमतः परम् । तैजसं कार्मणं चेति शरीरं पञ्चधा स्मृतम् ॥६६॥ अङ्गोपाङ्गं त्रिधा शीर्षं पृष्ठं च हृदयोदरौ । ऊरुद्वय करद्वन्द्वमित्यष्टावङ्गमुच्यते ॥६७॥ अङ्गुल्याद्यमुपाङ्गं स्यादङ्गोपाङ्ग च तद्गताः । रेखाः स्युस्त्रयमेतत्तु भवेदाद्ये वपुस्त्रये ॥६८॥ षोढा संहननं वज्रर्षभनाराचमादिमम् । तस्माद्वृषभनाराचं नाराचं तु तृतीयकम् ॥६९॥ चतुर्थमर्धनाराचं कीलिकाख्यं च पञ्चमम् । सेवार्तं भवेत्षष्ठमस्थ्यस्तस्पर्शलक्षणम् ॥ ७० ॥ युग्मम् ॥ आद्यं समचतुरश्रमथ न्यग्रोधमण्डलम् । तदन्यथा पुनः सादि वामनं कुब्जकं तथा ॥ ७१ ॥ हुण्डं चेति शरीरस्य संस्थानानि भवन्ति षट् । एतान्यौदारिकस्यैव नान्याङ्गानामसभवात् ॥७२॥ युग्मम् ॥ आनुपूर्वी चतुर्धेत्थं यज्जन्तोर्गच्छतोऽन्तरा । भवेषु नरकाद्येषु परिपाटिर्भवेद्गतेः ॥७३॥ स्याद्विहायोगतिर्द्वेधा शुभाशुभविभेदतः ।

उपघातपराघातातपागुरुलघु स्मृतम् ॥ ७४ ॥ उच्छ्वासोद्योतौ चत्वारो वर्णाद्याश्चसविंशतिः । निर्माणं तीर्थकृच्चेति
ससषष्टिरुदाहृता ॥७५॥ बन्धनं पञ्चधा पञ्च संघाता वर्णपञ्चकम् । अष्टौ स्पर्शा रसाः पञ्च गन्धद्वं यमुदीरितम् ॥७६॥
कृष्णो वर्णेषु स्पर्शेषु गुरुस्तिक्तो रसेषु च । गन्धयोः सुरभिश्चैते भेदास्त्याज्याः पुरोदिताः ॥७७॥ प्रागुक्तायाः ससप-
ष्टेरस्याः षड्विंशतेरपि । मेलने जायते सेयं नवतिस्त्रिभिरुत्तरा ॥ ७८ ॥ पञ्चदशबन्धनेभ्यः पंच भेदा पुरोदिताः ।
शेषैस्तु दशभिः क्षिप्तैर्जायते त्र्युत्तरं शतम् ॥७९॥ औदारिकौदारिकं तथौदारिकतैजसम् । औदारिककार्मणकं तुर्यमे-
तत्रयोद्भवम् ॥८०॥ वैक्रियवैक्रियाद्येव ज्ञेयं बन्धचतुष्टयम् । इत्थमाहारकाहारकादिदेहचतुष्टयम् ॥ ८१ ॥ तैजसतैजसं
गात्रं तस्मात्तैजसकार्मणम् । कार्मणकार्मणं चेति बन्धाः पञ्चदश स्मृताः ॥८२॥ त्रिभिर्विशेषकम् ॥ रम्यारम्याणि रूपाणि
कुर्याच्चित्रकरो यथा । तथा नामापि जीवानां तच्चित्रकरोपमम् ॥ ८३ ॥ एतस्य स्थितिरुत्कृष्टा भविनां नामकर्मणः ।
विंशतिः कोटिकोटीना सागरोपममानतः ॥८४॥ गोत्रं द्विधा धिया लक्ष्म्या हीनोऽप्यर्हो भवी भवेत् । तदुच्चं सहितो-
ऽप्याभ्यां नार्च्यो नीचं तदुच्यते ॥८५॥ यथा कुलालान्मृत्पिण्डः पूर्णकुम्भः सुराघटी । स्तुत्यो निन्द्यस्तथातः स्या-
दात्मा तस्मान्न तत्समम् ॥८६॥ आत्मनि स्थितिरेतस्य गोत्रसंज्ञस्य कर्मणः । सागरोपमसंख्या स्यात्कोटीकोटिर्विंशतिः
॥८७॥ अन्तरायाभिधं कर्म भेदैः पञ्चभिरष्टमम् । स्याद्दानलाभभोगोपभोगसामर्थ्यलक्षणैः ॥८८॥ दानं विनीताद्रक्षे
राड्भाण्डागारिको यथा । तथास्मादपि जीवोऽतस्तद्भाण्डागारिकोपमम् ॥८९॥ अन्तरायाभिधानस्य स्थितिरेतस्य
कर्मणः । सागरोपमसंख्यायां स्युस्त्रिंशत्कोटिकोटयः ॥९०॥ इत्यल्पं जल्पितोऽनल्पकालः कर्ममहागदः । शुद्धध्याना-

पद्मप्राणैः सद्भिः शाम्योऽप्रमादिभिः ॥ ९१ ॥ शुद्धं ध्यानमपि प्राप्यं कषायविषयोज्झनैः । संतोषरसिकैर्लोकैः स तु बीजं सुखस्य यत् ॥९२॥ न सद्वाक्यात्परं वश्यं न कलायाः परं धनम् । नाहिंसायाः परो धर्मो न संतोषात्परं सुखम् ॥९३॥ सेव्यसारस्य तस्यापि जननी विरतिर्ध्रुवम् । सापि केवलिभिः प्रोक्ता सर्वतो देशतोऽपि वा ॥९४॥ तदस्यां विरतौ सद्भिर्मतिमद्भिः सुखार्थिभिः । स्तुत्यकृत्यमहाविघ्नः प्रमादः कार्य एव न ॥९५॥ आयुषः क्षण एकोऽपि नाप्यते रत्नकोटिभिः । तत्कथं हार्यते हन्त प्रमादरजसा नरैः ॥९६॥

इति धर्मगिरं कर्मगिरिदम्भोलिसंनिभाम् । श्रुत्वा तत्त्वावबोधेन शुभः शस्यजनोऽजनि ॥ ९७ ॥ अन्तःपुर्यः सुबन्धुश्च तदा भेजुर्महाव्रतम् । धनैश्चान्यैर्जनैस्तत्र जगृहे गृहिणां व्रतम् ॥९८॥ इत्थं प्रबोध्य सुहृदो विहृत्य वसुधां क्रमात् । विलत्य धर्मं भगवान् रतिसारः शिवं ययौ ॥९९॥ इत्यद्भुतस्य दानस्य प्रभावाद्भुक्तभूतलः । कुशलो दलयत्याशु संसारं रतिसारवत् ।६००। इति श्रीरतिसारस्य सारपुण्यप्रथां कथाम् । निशम्याभून्मुदां सद्म पद्मोत्तरमहीश्वरः ॥१॥

पात्रेण पार्थिवादिभ्यो दानं नादीयते क्वचित् । नित्यं शीलन्तु शीलं तु सर्वसाधारणं बुधाः ॥२॥ धत्ते यः सततोन्मीलं शीलं लीलारविन्दवत् । स कामं मुक्तिकामिन्या कुतुकेन विलोक्यते ॥ ३ ॥ अतश्चिन्तामणिप्रायसुकृतप्राप्तये जनः । विधत्ते शुद्धधीः शीलसुधाम्भोनिधिमज्जनम् ॥ ४ ॥ अघनाशादभुतच्छाये शीले नीलेतरा गुणाः । समायान्ति समुत्ताला मराला इव पल्वले ॥ ५ ॥ जनानुरक्तिर्भुक्तिश्च मुक्तिश्च नृपु शीलतः । सनत्कुमारशृङ्गारसुन्दर्योरिव जायते ॥६॥

तद्यथा सत्पथाध्वन्यधन्यपौरालिमालिनी । श्रीकान्तेति पुरी जम्बूद्वीपे भारतवर्षभूः ॥७॥ इह सिंह इति स्वाम्य-
ग्लानितगुपतिर्नृपः । बभूव शुभ्रकीर्तिस्रग्राजिराजितदिग्गणः ॥ ८ ॥ नित्यमुद्यद्गुणग्रामः कलाग्रहकृताग्रहः । सन-
त्कुमार इत्यासीत्कुमारस्तस्य कीर्तिभूः ॥९॥ अदृपणकगैर्लक्ष्यमाणस्ताद्दक्षलक्षणैः । सहोत्थैः स गुणै रेजे शरीरा-
गमरैरिव ॥१०॥ उपदेशावधिक्लेशाद्गुरुस्तस्य गृह्णतः । हृदि न स्खलितं चक्रुः खिलाँ अप्यखिलाः कलाः ॥ ११ ॥
रूपं निशम्य निःसीम तस्य सीमन्तिनीजनैः । तदङ्गसंङ्गि खुरलीरजो बहुमतं स्वतः ॥१२॥ उरसि प्रेयसां काम-
चित्राभ्यासापदेशतः । अलिख्यत विदग्धाभिः स रहो विरहोदये ॥ १३ ॥ तस्मिन्शरणसंप्राप्तप्राणभृद्वज्रपञ्जरे ।
दोर्दण्डमण्डलच्छायामीयुश्चापचराः शराः ॥ १४ ॥ सोऽन्यदा क्षणदामध्ये वध्यमानस्य विद्विषा । निद्राणश्चन्द्रशा-
लायां रावं शुश्राव कस्यचित् ॥ १५ ॥ अथैप रभसभ्रश्यन्निद्रोन्मुद्रदृगीदृशम् । खे वचः सचमत्कारः कारुण्यमसृ-
णोऽशृणोत् ॥१६॥ दुःखितः परदुःखेन दीनानाथोऽभ्युतिक्षम । अहो स क्वापि कोऽप्यस्ति यः पापात्पाति मामितः
॥१७॥ त्रिजगद्वीरजननीर्जननी येन सूनुना । हसत्यस्ति स कोऽपीह यः पापात्पाति मामितः ॥१८॥ स्वजन्मतिथिन-
क्षत्रवारान्धैर्येण गर्वयन् । स कोऽप्यस्ति जगत्यस्मिन् यः पापात्पाति मामितः ॥१९॥ प्रेमार्द्रोभ्यः प्रियाभ्योऽपि ये
भिया मन्वते युधम् । तन्मुख्यः कोऽपि किं नास्ति यः पापात्पाति मामितः ॥ २० ॥ हा हा हतो हतोऽहं मां
त्रातुं कोऽपि न धावति । तदाकाशे धृतं कस्य सत्त्वेनेदं जगत्रयम् ॥२१॥ विश्वे न सन्ति किं वा सन्तोऽपि निःकृपाः

१ मनस्यन्ता २ धनुर्विद्याभ्यासपूर्तिः

किं वा व्याधिभाजस्ते क्रन्दार्तं यत्र पान्ति माम् ॥२२॥ निशि निद्रान्ति चेन्मर्त्यास्तदमर्त्यैरभूत्किमु । यद्ये-
ऽपि शक्तिमन्तोऽपि न कृपां मयि कुर्वते ॥ २३ ॥ न मानवो न गन्धर्वो न गीर्वाणो न दानवः । कोऽप्यस्ति
साहसी यो मां त्रायते हा हतोऽस्मि हा ॥२४॥ अथोच्चचद्रोमाञ्चश्चण्डोद्धूपितमूर्धजः । क्ष्मापश्य सूनुरुत्पश्यं-
श्वालयश्चापमुत्थितः ॥२५॥ विलक्षः खेचरं क्षोणिचारी रक्षितुमक्षमः । पक्षिणोऽपि क्षणं धन्यान्सोऽमन्यत खगा-
मिनः ॥२६॥ त्रैलोक्येऽप्यस्ति न त्राता वध्यमानस्य ते मया । मा क्रन्दीर्म्रियमाणस्तदित्यभूत्खे पुनर्ध्वनिः ॥२७॥
हन्तुः स्वरानुसारेण शरासारं ततः कृती । साक्षेप दिवि चिक्षेप स शरण्यशिरोमणिः ॥२८॥ एको रिपुकृपाणेन प्रहतः
प्रापतत्ततः । पुमान्कुमारनाराचताडितस्त्वपरः पुरः ॥२९॥ अथ तौ मूर्छितौ वीक्ष्य विस्मिते भूपतेः सुते । उत्ततार
तडित्तारा कापि ताराध्वतो वधूः ॥३०॥ द्विपद्विम्बपिण्डताङ्गस्य पुरुषस्य पुरः स्थिता । चक्रन्द सा रसाधिक्यविकसत्क-
रुणस्वरा ॥३१॥ किं चरित्रमिदं चित्रमिति पृष्टाथ तेन सा । ऊचेऽधरोष्ठं सिञ्चन्ती शुचाशुष्यन्तमश्रुभिः ॥३२॥
शोणरत्नप्रभापूरसिन्दूरचयचित्रितः । गिरिर्वैताढ्य इत्यस्ति श्रीलीलारौप्यहस्तिवत् ॥ तस्योपरि परिस्पन्दलक्ष्मीमन्द-
मरुत्पुरी । विशालाख्या विशालाक्षीमुखापास्तेन्दुरस्ति पूः ॥३४॥ तत्रैष रत्नचूडाख्यो राजा खेलति खेचरः । अस्य
प्रियास्मि कश्मीरदेवीति प्रीतिभाजनम् ॥३५॥ दुष्टश्चन्द्रपुरीभर्ता चन्द्राख्योऽयं तु खेचरः । मया स्मररहस्यानि याच-
मानोऽवमानितः ॥३६॥ रविणा कौमुदीवेन्दोस्ततः प्रस्तुः समीपतः । तेजःक्रूरेण शूरेण हृताहममुनाधुना ॥३७॥
अवस्थेयं कृता तेन मद्भर्तुरनुधावतः । दुश्चरित्रफलं वीर त्वयास्येदं च दर्शितम् ॥३८॥ इत्युक्त्वेयं कुमाराय प्रियप्राणि-

तकाद्दिक्षणी । आदिक्षदौषधीः सद्यो मूर्छाशतकृतच्छिदः ॥३९॥ अथैनमोषधिस्यन्दैरमन्दीकुरुते स्म सः । कुमारः
कैरवस्तोममिव सोमः करोत्करैः ॥४०॥ ततः कृपावतारेण कुमारेणौषधीरसैः । चंद्रोऽप्यजीवि कारुण्यं महतां प्रह-
तान्तरम् ॥४१॥ ततो वर्णैर्विवेकाब्धिमौक्तिकैर्ग्रथितां गिरम् । कुमारो हृदि चन्द्रस्य हारहृद्यामिति न्यधात् ॥४२॥
न दत्ते निर्वृतिं हन्ति पुण्यं पुष्णाति पातकम् । अहो हतं परस्त्रैणं कुथिताम्रमिवाहृतम् ॥४३॥ परस्त्रीपरिरम्भेण
समारम्भः सुखस्य यः । शीताम्भःस्नपनेनेव ज्वरदाहव्यपोहनम् ॥४४॥ परनार्यो विभावर्य इवाकीर्तितमःप्रदाः ।
अदृष्टसत्पथान्पुंसः क्षिपन्ति नरकावटे ॥४५॥ घाताधःकारबन्धार्तिर्मदान्धैर्बुध्यते न कैः । व्रजद्भिः परनारिषु वारीष्विव
मतङ्गजैः ॥४६॥ ततः स्वदारसंतुष्टिः पुण्यपुष्टिरसायनम् । सेवनीया सदा पुम्भिः गुणकुम्भिमहाटवी ॥४७॥ तचन्द्र
चन्द्रचारूणां यशसां जलदोपमम् । परनारीपरीरम्भारम्भं निर्दम्भधीस्त्यज ॥४८॥ समं च रत्नचूडेन चूडारत्न
स्वचारिणाम् । मा स्म पापघटाजन्मवत्सरं मत्सरं कृथाः ॥४९॥ रत्नचूड त्वयाप्येतच्चेतनीयं यतोऽभवत् । प्रत्यक्षं वा
परवधूचौर्यमात्सर्ययोः फलम् ॥५०॥ इति वाचं प्रतिज्ञाय तौ प्रीतौ खेचरौ मिथः । सनत्कुमारतेजोऽग्निसाक्षिकं सख्यमीय-
तुः ॥५१॥ अदृश्यीकरणीं शिक्षागुरवे गुरुदक्षिणाम् । दत्त्वा भूपभुवे विद्यां तौ गतौ द्यां तया समम् ॥५२॥ कदाप्यथ सदःस-
प्रभूषणं सिंहभूभुजम् । अत्यातुरश्चरः कश्चिदेत्य विज्ञप्तवानदः ॥५३॥ स्वामिञ्जगज्जयारम्भजृम्भमाणप्रयाणकः । भूरि-
भूरमणच्छेदमेदस्विप्रसरन्मदः ॥५४॥ नृपो रिपुद्विपक्रूरकेशरी शूरकेशरी । त्वां प्रत्युपैति काम्पील्यपुरायतनदेवता
॥५५॥ युग्मम् ॥ इति वाक्श्रुतिसक्रोधः स्कन्धावाराय दुर्धरः । रथसिन्धुरगन्धर्वभटाध्यक्षान्नृपोऽदिशत् ॥५६॥ प्रयाण-

कम्बुनादेषु काममम्यरचुम्बिषु । सज्जमानासु सेनासु भटेपूत्कटकेषु च ॥५७॥ तां मत्वा जयिनीं यात्रामेत्य तत्राधि-
कोत्तमः । कुमारो मस्तकन्यस्तहस्तः क्ष्मापं व्यजिज्ञपत् ॥५८॥ युग्मम् ॥ तात मा तव तत्रारिकीटेऽस्तु कटकस्पृहा ।
किं तृणोत्पाटने कुम्भी कुण्डलीकुरुते करम् ॥५९॥ अहमेव करिष्यामि तज्जयं त्वत्प्रसादतः । हन्त्यनूरुस्तमःपूरं किं न
सूरप्रभावतः ॥६०॥ कटकं यदि तत्रापि शत्रावातनुपे स्वयम् । बलौ वा बलशत्रौ वा किं रोषिणि करोषि तत् ॥६१॥
अथाह पृथिवीनाथो नीतिप्रीतिसखीं गिरम् । रोमाञ्चितवपुः सूनोः शौर्येण विनयेन च ॥६२॥ लीलासु लालितं शूरा-
स्तनयं नयशालिनः । पुरः कुर्वन्ति भोगेषु रणाभोगेषु पृष्ठतः ६३॥ हृदयानन्दनं दक्षा नन्दनं कुलदीपकम् । न प्रभञ्ज-
नभूयिष्ठे भासयन्ति रणाङ्गणे ॥६४॥ कुलालंकृतये रत्नं भूरिभाग्यार्जितं सुतम् । कः क्षिपत्यसिकल्लोलैरपारे सम-
रार्णवे ॥६५॥ वत्स मत्सरिणो जेतुं यामि तेनाहमाहवे । जंगरो नगरस्यास्य भवान्भवितुमर्हति ॥६६॥ अथाकिरद्गिरं
गौरीमास्यगौरांशुकौमुदीम् । कुमारः कैरवाकारवीरमानसमोदिनीम् ॥६७॥ त एव तात सत्पुत्राः स्वं मत्वा कवचक्षमम् ।
ये निर्बन्धात्पितुः स्कन्धादुद्धरन्ति धुरं युधः ॥६८॥ शूरास्तानेव मन्यन्ते नन्दनान्कुलदीपकान् । येषां रिपुस्त्रीनिःश्वासै-
स्तेजः प्रत्युत वर्धते ॥६९॥ कुलालङ्काररत्नानि कुमारानुर्वरावराः । उत्तेजयन्ति युद्धोर्व्यामसिपट्टघटाजुषि ॥७०॥
तत्प्रभो मां दिश द्वेषिपेषायेति ब्रुवन्नसौ । अग्रहीदग्रहस्ताभ्यां चरणौ धरणीशितुः ॥७१॥ उत्थाप्य परिरभ्याथ प्रमोदी
मेदिनीपतिः कुमारमसुहृद्वीरवैराय स्वैरमैरयत् ॥७२॥ कृतमाङ्गलिकः सोऽपि रेणुगोपितगोपतिः । चचालोच्चमूपूरः

१ कवचः. २ उज्ज्वलाभ ३ गौरांशुश्चन्द्र. ४ नृपा

शूरकेशरिणं प्रति ॥७३॥ भ्रश्यन्तीं निजभारेण भुवं धर्तुमिवाग्रतः । प्रलम्बमानहस्ताग्रश्चलितं बलिभिर्द्विपैः ॥७४॥ मा भूदस्मत्खुरापातैः खण्डशः क्षोणिमण्डलम् । इत्युड्डीन इवाचालीद्व्योम्ना हयसमुच्चयः ॥७५॥ नर्तयन्रथिनां कीर्तिं मूर्तां केतनकैतवात् । पवनानामनुप्रासः प्रासरद्रथसंचयः ॥७६॥ हृदा कवलयन्तः स्वं ज्वलयन्तो दृशा दिशः । प्रतस्थिरे स्थिरागोल लोलयन्तो गतैर्भटाः ॥७७॥ इत्युपान्तं रिपोरा कुमारः सारसैनिकः । कचिदप्यकृतस्थानैः प्रस्थानैः कश्चिदप्यगम् ॥७८॥ अथान्तरचरद्दूतस्यूतक्रोधविरोधयोः । तयोः सेनाद्वयं जज्ञे संपरायपरायणम् ॥७९॥ आसदत्सादिनं सादी निसादी च निसादिनम् । रथिनं च रथी पत्तिः पत्तिं च प्रोद्धतक्रुधः ॥८०॥ असहिष्णुः परतेजस्तेजस्वी वीरसंचयः । खण्डयामास चण्डांशुभासः काण्डौघमण्डपैः ॥८१॥ जयश्रीपरिरम्भाय स्फायमानमनोरथैः । हृष्यद्भिर्वीक्षितं वीरे रणे रेणुमयं तमः ॥८२॥ सहुंकारैरथोदारैः प्रहारैर्बलशालिनाम् । आलम्भि समरारम्भः स्फूर्जत्तूर्यहतश्रुतिः ॥८३॥ स्फुलिङ्गैः स्फुरितं शत्रुशस्त्रापातेन वर्मसु । राज्ञां निस्तुष्यमाणस्य प्रतापस्य तुषैरिव ॥८४॥ द्रवीभूयेव सूरेण रक्तपूरेण रेणवः । समरे समनीयन्त तमःसमरुचः शमम् ॥८५॥ अश्वः कोऽप्यश्ववारं स्वं पतितं वर्मभारितम् । उपविश्यैनमारोप्य समुत्तस्थौ मृधोद्धतः ॥८६॥ स्फुटितोदरनिर्याताः कश्चिदन्त्रावलीर्बली । धावन्नतुच्छवाजी खुरलग्ना लता इव ॥८७॥ दष्टोष्ठो भृकुटीभीमः क्ष्मापातिन्यपि मुर्धनि । धृत्वा दोर्भ्यां रिपुं कश्चित्पतन्नश्वादपातयत् ॥८८॥ वाहयित्वाग्रतो वाहं कुन्ते वक्षो विशल्यपि । युद्धक्षीणायुधो दन्तैः कोऽपि कण्ठं द्विपोऽपिबत् ॥८९॥ प्रतिद्विपं द्विपः कोऽपि

१ गुप्तनामरम. २ शरमण्डपैः. ३ युद्धोद्धत.

कोपान्मूर्धन्यताडयत्। करेणोन्मूल्य तस्यैव रणरक्षीणरदो रदम् ॥९०॥ पातितस्य द्विपः कोपी कोऽपीभस्य रिपोर्वपुः। रदाग्रेण विदार्योच्चैर्मत्तो रक्तासवं पिबन् ॥९१॥ त्रस्यन्प्रतिद्विपान्मेऽसौ जितारेरपि दुर्यशः। मा दादिति जघानैकः स्वहस्तेन स्वहस्तिनम् ॥९२॥ हतस्य पततो युग्यनागस्योत्प्लुत्य पृष्ठतः। क्षितिमेत्य स्थितोऽजैषीद्द्वेषिणं मार्गणैः परः ॥९३॥ कश्चिद्रथी प्रथीयांसि शरजालानि लालयन्। अस्त्राण्येव क्षिपोऽकृन्तन्नाङ्गानि तु कृपान्वितः ॥९४॥ शरैरेकस्य चक्रस्य च्छिन्नेऽक्षे नमतो रथात्। विलुण्ठन्तं क्षितौ शत्रुं कोऽप्यलोकत कौतुकी ॥९५॥ कर्णान्ताकृष्टकोदण्ड एवैकः खेदमासदत्। यं यं लक्षीचकारैष तूर्णं स स यदत्रसत् ॥९६॥ मार्तण्ड इव कोदण्डपरिवेषधरः परः। दिश०शरमयीं वृष्टिं राजहंसभियेऽभवत् ॥९७॥ धृतासिस्त्रासयन्विश्वं मुक्तकेशः करालवाक्। शौर्यावतारलः कश्चिदभ्रमद्भ्रुकुटीभटः ॥९८॥ दलितस्य रिपोरन्त्रमालाभि कृतमण्डनः। कुर्वन्किलकिलामेकः शेके केनापि नेक्षितुम् ॥९९॥ द्विपान्निर्मदयामास त्रासयामास वाजिनः। भटान्विघटयामास क्ष्वेडयैवोद्धुरः परः ॥७००॥ विक्रम्य पतितस्याजौ कस्यचित्क्षथिन्द्वः। वीरवारेण वीरश्रीमन्दिरेण ववन्दिरे ॥१॥ इत्याजिप्रसरे वाजिदन्तिस्यन्दनपत्तिषु। पतत्सु तुच्छतां गच्छद्बल स्वं सैहिरैक्षत ॥२॥ अथाहितहतत्रस्तसमस्तध्वजिनीजनः। गन्धसिन्धुरमारुह्य प्रसरच्चापचापलः ॥३॥ संरम्भी स्तम्भयन्दूरे शरकेशरिणश्चमूम् सनत्कुमारो नाराचधारानयमवर्षयत् ॥४॥ युग्मम् ॥ तद्बाणपातभीमासु रणसीमासु शात्रवः। न रथी न भटो नेभो न चाश्वः प्राविशद्भृशम् ॥५॥ मुञ्चन्नथ शरासारं भूरिशो रिपुभूपतीन्।

१ परिवेषो मण्डलम्। २ विशालेन।

न्यचारयदसावेको विवेकोऽरीनिवान्तरान् ॥६॥ इत्यस्मिन्नुग्रसंग्रामभरेण क्षीणमार्गणे । धीरा विरोधिनोऽधावन्नंध-नापोद्धतायुधाः ॥७॥ वर्षन्तो मरुधु धारालैः शरजालैः समन्ततः । ववुः कुमारमार्तण्डं तोयदा इव ते तदा ॥८॥ जीवीताशां विमुच्याशु विधूताम्मिर्मृधाय सः । नन्दनो मेदिनीजानेर्याबदुत्तरति द्विपात् ॥९॥ हस्तस्रस्तसमस्तास्त्रं लालामालाछृताननम् । तावन्निद्रामिलच्चक्षुर्विपक्षबलमैक्षत ॥१०॥ युग्मम् ॥ सुप्तानां विद्विषामन्तर्विरराज स राजसूः । आत्मेव ज्ञानिनो मूर्छत्कर्मपद्धतिमध्यगः ॥११॥ तन्निद्राविस्मितं चन्द्ररत्नचूडौ खचारिणौ । नेमतुः संयतानीतशूरकेशरि-णावमुम् ॥१२॥ अथोत्फुल्लदृगुन्मीलत्पुलकः परिरभ्यतौ । मीतः कीमिदमित्येष पप्रच्छ पृथिवीशभूः ॥१३॥ सद्योऽभ्युद-यदानन्दरसोर्मिस्नाननिर्मलाम् । ऊचे वाचं तदा चन्द्रनामा खेचरशेखरः ॥१४॥ कुमार मार्यमाणेषु खेचरेन्द्रेषु जीवनोः । पुनर्जन्मेव जज्ञेऽत्र त्वदाज्ञापालनेन नौ ॥१५॥ तथाहि हृदयग्राहिद्युतिविद्योति विद्यते । रथनूपुरचक्राख्यं वैताढ्यशिखरे पुरम् ॥१६॥ तस्मिन्नस्ति मनस्तिग्मभावेन भुवनं क्षिपन् । भृशं भीमात्मनां सीमा भीमाख्यः खेचराग्रणीः ॥१७॥ तपोभिर्दुस्तपैरेष निःशेषग्वगपेपधीः । क्रूराक्षो राक्षसीं विद्यामसाधुः समसाधयत् ॥१८॥ तत्ततः संकटं शङ्कमानाः कापि न निर्ववुः । नवोत्सरशतद्रुसद्भिः खेचरेश्वराः ॥१९॥ अथ तद्रूपचिन्तार्तिगतनिद्रस्य मे निशि । पुरोऽभूत्कामिनी काचिदियत्ता रूपसंपदाम् ॥२०॥ मकरध्वजराजस्य राजधानीव जङ्गमा । दर्शयन्ती दृशं भावमयीमित्याह मामियम् ॥२१॥ जानीहि मां महेन्द्रस्य महिषीं मोहदश्रुते । मनो पद्मानुरागं तु सुभग त्वद्गुणेषु मे ॥२२॥ तन्मदङ्गमनङ्गार्तं निर्वापय

१ युद्धाय ।

कृपामय । त्यज चिन्तां तवारातिं हुंकारेणैव भस्मये ॥२३॥ क्षोभकैलौंभकैश्चेति चेलोर्द्धिर्वचोभरैः । चिरमभ्यर्थया-
मास सा मां कामान्धिता भृशम् ॥२४॥ परस्त्रीति निषिद्धैव त्वदाज्ञां ध्यायता मया । क्षणदान्ते विलक्षत्वं दधती सा
तिरोदधे ॥२५॥ सुहृद्यथ रथाङ्गानां [1]दृक्पथाङ्गणभूषणे । आक्रन्दः श्रवणास्कन्दः कोऽपि व्याप दिशोऽद्भुतः ॥२६॥ अथैत्य
खेचराधीशपुरेभ्यः खेचरेश्वराः । क्रन्दसंरम्भसंभ्रान्तहृदि भयगद्गदः ॥२७॥ भीमेनाद्य पुरश्रेणिद्वयैश्वर्याय याचिता ।
द्वयानि राक्षसी विद्या स्त्रीरूपाण्यभितः श्रिता ॥२८॥ चटूक्तिभिः पतिकृत्य निखिलान्खेचराधिपान् । छलिनी [2]तलिनी-
भूय चलिनी निजघान सा ॥२९॥ द्वावेव यत जीवन्तौ दैवयोगेन केनचित् । भवांश्च रत्नचूडश्च दिष्ट्याद्य दृष्ट्याद्य
वीक्षतौ ॥३०॥ इति तद्वचनैर्मत्वा जीवन्तं सुहृदं निजम् । प्रीत्याहममृताम्भोधिमध्यमग्न इवाभवम् ॥३१॥ अथ जीया-
त्कुमारस्य शिक्षा नौ जीवनौषधम् । विरुद्धराक्षसीरक्षासिद्धमन्त्रायितं यया ॥३२॥ इति ब्रुवन्कुतोऽप्येत्य तदा हृदि
लुलोठ मे । वयस्य एष पीयूषलुठारलयहारवत् ॥३३॥ युग्मम् ॥ ततः प्रीतीभरस्यास्य भागं ते दातुमुद्यतौ । आवामि-
हागतौ दृष्टस्त्वं च युद्धसमुद्धतः ॥३४॥ स्वापिता रिपवो बध्वाऽऽनीतश्चायं ततोऽधुना । किं कुर्वो जीवदानैककल्पद्रुम
समादिश ॥३५॥ अथास्यकमलोन्मीलन्मधुचयमयं वचः । इदं गदितुमारेभे कुमारेण प्रमोदिना ॥३६॥ युवां दिष्ट्याद्य
निष्क्रान्तौ राक्षसीकवलग्रहात् । अथ दिष्ट्याहमाकृष्टो भवद्भ्यां संकटादितः ॥३७॥ इदानीं तु क्षतैरार्तं क्षतरोहिल-
तारसैः । बलयोरङ्गि संघातं समुल्लाघयतं रयात् ॥३८॥ इदं रचयतं निद्रादरिद्रं च द्विषां बलम् । अमुं च मुञ्चतं बन्धान्मा

१ आकाशाङ्गणभूषणे । २ शय्यारूपा भूत्वा. नलिनीभूयेति पाठे कमलवत्कोमलीभूय ।

विपत्त्रिपोरपि ॥३९॥ इत्यादेशो कुमारेन्दोस्ताभ्यां तूर्णं विनिर्मिते । उत्तस्थौ दलिताशेषविकारं तद्बलद्वयम् ॥४०॥ दूरं प्रणतः शूरकेसरी सिंहसूनुना। बहु संमान्य सत्कृत्य मुक्तः स्वमगमत पुरम्॥४१॥ भीमतो भीमती मा भूद्भूर्वा संभुय भास्वतोः । इत्युक्त्वाऽऽशु कुमारेण महितौ प्रहितौ खगौ ॥४२॥ अवलिष्ट बलिष्ठानां धुर्यः पुर्यं ततः कृती । पदे पदे नृदेवानां वृन्दैर्वन्द्यपदाम्बुजः ॥४३॥

प्रयाणान्ते पद्मावासविश्रान्ते शान्तचेतसः । विज्ञप्तं प्रतिहारेण कुमारस्येदमन्यदा ॥४४॥ केनापि सहितः पुंसा प्रहितः स्वामिना स्वयम् । जीमूतो नाम दूतोऽस्ति कुमार द्वारि वारितः ॥४५॥ विज्ञाय वेत्रभृन्नेत्रसंज्ञां भूपभुवस्ततः। दूतं च तं पुमांसं च दत्तसम्मानमानयत् ॥४६॥ नरं तमग्रे कृत्वाऽथ दूतो नत्वेदमभ्यधात् । कुमार यदयं वक्ति तत्कार्यं राजवागियम् ॥४७॥ उल्लसद्भ्रूलतेनाथ कुमारेण निरीक्षितः । सोऽभ्यधत्त सुधारोचिरौचित्यरुचिरं वच ॥४८॥

अस्ति संसारसारश्रीः स्वश्रीजितमरुत्पुरी । लक्ष्मीविलसनावासो वासन्तीति श्रुता पुरी ॥४९॥ तस्यां नामाङ्कनामास्ति नाकनाथनिभो नृपः । पद्मवासेति यत्पाणिवासेनेवाभ्यधुः श्रियम् ॥५०॥ तस्य प्रिया श्रियामेकसदनं मदनावली । अस्ति राजीवजीवातुवदना मदनायुधम् ॥५१॥ तदङ्गजा गजगतिर्जगति प्राप्तविश्रुतिः आस्ते मुखानिलमिलद्भृङ्गा शृङ्गारसुन्दरी॥५२॥ त्रैलोक्यरमणीभ्योऽपि रमणीयतमामिमाम्। कन्यामनन्यसदृश्या प्रहर्याञ्चक्रिरे गुणाः ॥५३॥ मात्यसौ शशिलीलेन शीलेनैव मयात्र किम् । इतिवास्या महिर्नास्यादेति प्रीत्यामपि स्मितम् ॥५४॥ इयं बालापि

२ भयवती ।

शीलस्य परमां भूमिकां गता । कदापि न ददात्येग खिन्नेव त्वरितं पदम् ॥५५॥ चन्दनाद्यपि सेव्यं सा सिसेवे
स्वच्छया धिया । मनःकामनया हंसगमना न मनागपि ॥५६॥ केलीषु सफलीचक्रे कदापीयं न मामिति । विमुक्ता
कुपितेनेव सांप्रतं शैशवेन सा ॥५७॥ यौवनं नलिनाक्षीषु विकारैककलागुरुम् । निर्विकारविलासेषु सा शिष्ययति सं-
प्रति ॥५८॥ भूपे तदनुरूपाय वराय विहितोद्यमे । सांप्रतं सर्वभूपानां रूपं चित्रेषु पश्यति ॥५९॥ स्वमातृपितृसोदर्यव-
यस्याविरहासहा । विवाहं स्पृहये नाहमिति स्माह सखीषु सा ॥६०॥ युग्मम् ॥ तदाकर्ण्य तदास्येभ्यो निर्मोदा मद-
नावली । आरोप्य तनयामङ्के सशङ्केन हृदाऽवदत् ॥६१॥ विवाहोत्सववै मुख्यं वत्से धत्से कथं वृथा । शोच्या प्रियं विना
रामा त्रियामा शशिनं विना ॥६२॥ रमणी रमणीयापि रमणेन विवर्जिता । ज्ञानश्रीरिव चारित्ररहिता न हि राजते
॥६३॥ आभर्तृका तृणेभ्योऽपि स्त्री पितॄणां गृहे लघुः । आयाति भ्रातृजायानामपि मुण्डोति वाच्यताम् ॥६४॥ कलाहीनः
पुमानग्निरज्वालो निर्जला नदी । विपतिर्युवतिश्चेति काप्यर्घ्यं न चतुष्टयम् ॥६५॥ स्त्रीणां भवत्यनाथानां बन्धुरप्य-
भिभूतये । अब्जिनीनामिवाब्जोऽपि चन्द्रोऽनुद्गतभास्वताम् ॥६६॥ श्रद्धेहि तद्विवाहाय पुत्रि मानिं विधेहि मे ।
गर्भवासेऽपि यद्दत्तः क्लेशलेशोऽपि न त्वया ॥६७॥ इत्युक्तिमवधार्येयमजेयममृतैर्वचः । आददे दीनशृङ्गाररसं शृङ्गार-
सुंदरी ॥६८॥ युक्तमुक्तमिदं मातर्जातनीतिलयं त्वया । दुःखाय तु गुणेनैकेनापि हीनः प्रियः स्त्रियाम् ॥६९॥ कुलं
यदि न तद्रूपं ते चेत्तन्नामलाः कलाः । चेत्ते च ताश्च तन्मातर्न शीलं सुलभं नृषु ॥७०॥ रूपशाली कलामाली कुलीन-
श्चैकरागभाक् । न प्राप्यश्चेत्प्रियो नारी तत्कुमार्येव जीर्यतु ॥७१॥ कर्तुं शक्यं वरे रूपकलाकुलनिरूपणम् । कस्त्विदं

विपरभूद्विपोरपि ॥३९॥ इत्यादेशो कुमारेन्दोलाभ्यां तूर्णं विनिर्मिते । उत्तस्थौ दलिताशेषविकारं तद्बलद्वयम् ॥४०॥ दूरं प्रणतः शूरकेसरी सिंहसूनुना । बद्धु संमान्य सत्कृत्य मुक्तः स्वमगमत पुरम् ॥४१॥ भीमतो भीमती मा भूद्भूर्वा संभूय भास्वतोः । इत्युक्त्वाऽऽशु कुमारेण महितौ महितौ खगौ ॥४२॥ अवलिप्त बलिष्ठानां धुर्यः पुर्यं ततः कुती । पदे पदे नृदेवानां वृन्दैर्वन्द्यपदाम्बुजः ॥४३॥

प्रयाणान्ते पटावासविश्रान्ते शान्तचेतसः । विज्ञप्तं प्रतिहारेण कुमारस्येदमन्यदा ॥४४॥ केनापि सहितः पुंसा महितः स्वामिना स्वयम् । जीमूतो नाम दूतोऽस्ति कुमार द्वारि वारितः ॥४५॥ विज्ञाय वेत्रभृन्नेत्रसंज्ञां भूपभुवस्ततः । दूतं च तं पुमांसं च दत्तसम्मानमानयत् ॥४६॥ नरं तमग्रे कृत्वाऽथ दूतो नत्वेदमभ्यधात् । कुमार यदयं वक्ति तत्कार्यं राजवागियम् ॥४७॥ उल्लसद्भुलतेनाथ कुमारेण निरीक्षितः । सोऽभ्यधत्त सुधारोचिरौचित्यरुचिरं वचः ॥४८॥

अस्ति संसारसारश्रीः स्वश्रीजितमरुत्पुरी । लक्ष्मीविलसनावासो वासन्तीति श्रुता पुरी ॥४९॥ तस्यां नामाङ्कमालि नाकनाथनिभो नृपः । पद्मवासेति यत्पाणिवासेनैवाभ्यधुः श्रियम् ॥५०॥ तस्य प्रिया श्रियामेकसदनं मदनावली । अस्ति राजीवजीवातुवदना मदनायुधम् ॥५१॥ तदङ्गजा गजगतिर्जगति प्राप्तविश्रुतिः । आस्ते मुखानिलमिलद्भृङ्गा शृङ्गारसुन्दरी ॥५२॥ त्रैलोक्यरमणीभ्योऽपि रमणीयतमामिमाम् । कन्यामनन्यस्पृहया प्रहर्याञ्चक्रिरे गुणाः ॥५३॥ मालतीव शशिलीलेन शीलेनैव मयात्र किम् । इतिवास्या वहिर्नास्यादेति मीत्यामपि स्मितम् ॥५४॥ इयं बालापि

२ भयवती ।

वेद यत्तस्य मनः कुत्रापि रंस्यते ॥७२॥ एकस्यां विरतः कन्यामन्यामप्युद्वहेत् पुमान् । नार्याः पतिविरक्ताया मरणं शरणं पुनः ॥७३॥ इत्यादिगुणदोषैकविचारोच्चलचेतना । मातर्नाहं विवाहाय वाच्या किंचित्कदाचन ॥७४॥ एवं निरुत्तरीकृत्य मातरं कातराशया । अकाण्डोत्थाय वैलक्ष्यविलोपाय ननाम सा ॥७५॥ ततो निरादरीभूते भूपे तन्मङ्गलकर्मसु । कलावलिविलासैकसुग्नमग्नैव सा स्थिता ॥७६॥ मुदा स्वप्नेऽन्यदापश्यन्निशान्ते शान्तधीरियम् । आत्मानं कल्पवृक्षस्य वामतः कामतः स्थितम् ॥७७॥ यथेप्सितप्रदो भावी वल्लभस्ते यथेप्सितः । इत्याचचक्षिरे तस्यै स्वप्नव्याख्यां विचक्षणाः ॥७८॥ साम्बलन्नृविमानेन प्रातः प्रीतिमती ततः । नन्तुमुद्यानमध्यानं पद्मानन्दनमुद्यता ॥७९॥ केनचित्पथि विक्रीयमाणं माणिक्यपञ्जरे । कञ्चिद्वचनचातुर्यधीरं कीरं ददर्श सा ॥८०॥ तदिष्टवित्तदानेन तं क्रीत्वाकृष्य पञ्जरात् । कलयन्ती करे कीरं कामापतनमाप सा ॥८१॥ ततो मरकतद्युमश्रुभ्रूकुन्तलकनीनिकः । बालप्रवालनिष्पन्नपदपाणिरदच्छदः ॥८२॥ पद्मरागदलश्रेणिपिनद्धनखपद्धतिः । काँचित्काँचित्क्रियामङ्गैर्जीवद्भिरिव कल्पयन् ॥८३॥ हसन्निवाल्पभिन्नोष्ठदृश्यमौक्तिकदन्तकः । दशा प्रसादस्मितया पश्यन्निव पुरःसरान् ॥८४॥ जातरूपमयं बिभ्रज्जातरूपमयं वपुः । दृष्टश्च कामः कीरेण गतश्चोत्सव्य तत्पुरः ॥८५॥ चतुर्भिः कलापकम् ॥ ततः कौतूहलाद्दृश्यमानः क्ष्मानाथकन्यया । काममूर्तिं प्रति प्रोचे वाग्भिरुत्सुकः शुकः ॥८६॥ कुमारराज गच्छाशु सुप्रियाणि फलानि मे । सुप्रियं ते पठाम्यार्याद्वयमेतन्निशम्यताम् ॥८७॥ "अपि युक्तिशुक्तिमुक्तागुणगणयुक्ताः श्लाघ्यकलाः सकलाः । उपलभरविपुलभारैः किमलंकारैः कृती कुरुते ॥८८॥ फलमविकलदुर्जपजपवृत्तपतपसोर्यदर्जयन्ति जनाः । तत्कुमघे निजयुवतिपुः सुकृतकृतः सन्तु संतुष्टाः"

॥८९॥" तावन्मत्प्रियमेवेदमार्यायुग्मं शुकस्तु कः । इति ध्यानप्लुते सिंहसुते सोऽकथयत्कथाम् ॥९०॥ इति कीरोक्ति-
माकर्ण्य कन्यां कापि सखी जगौ। आस्ते भुवि युवा दुःखलोपी कोऽपीदृशोऽप्यहो ॥९१॥ स्मरं भ्रमात्कुमारेति संबो-
ध्यार्यायुगं पठन् । रूपं कुलं वयः शीलं गुणान्यस्य शुकोऽभ्यधात् ॥९२॥ युग्मम् ॥ अथ कीरकुमारासि त्वं कुमारस्य
कस्य रे । तथ्यं वद यथा दृष्टां हृद्यां तव फलावलीम् ॥९३॥ इति पृष्टः करे कृत्वा कीरः कन्यकया तया । स पपाठ
सुधाक्तानि सक्तान्येव मुहुर्मुहुः ॥९४॥ ततस्तिरश्चां चेदन्यचातुरी केति चेतनी । किंचिदञ्चितपक्ष्मेषुः सा विचिन्ता
गृहं गता ॥९५॥ न तल्पे न सखीजल्पे न वने न निकेतने । न जले न स्थलेऽप्यस्या मनः क्वचन निर्वृतम् ॥९६॥
तुलिताकर्कच्छविरहो विरहोऽस्या हृदि ज्वलन् । ददौ निद्रापनोदाय मदनस्य दिनोदयम् ॥९७॥ स कुमारः क रे कीर
जल्पन्तीति प्रतिक्षणम् । मनो मनोभवभवव्याधिमत्तमधत्त सा ॥९८॥ क्रमान्निह्नुतवह्निश्रीर्विरहस्तां व्यहस्तयत् ।
पुष्पचापधरापस्य प्रताप इव दुःसहः ॥९९॥ तदङ्गेषु हिमं सख्यो यद्यदर्तिभिदे ददुः । तत्तदूष्मणैवाशु पतदेवापदा-
ऽऽपदम् ॥८००॥ अमान्मन्ये मदङ्गेषु व्याप तापोऽखिलं जगत् । उष्णाः किमन्यथा चन्द्रजलजन्मदलस्रजः ॥१॥ निशेश
त्वं निशाहीनो दीनो भवसि तत्कथम् । वियुक्तान्दहसि स्युर्वा नराः सहजनिष्ठुराः ॥२॥ जले कुमुदिनीप्रेम्णा प्रोस-
मादाय पाणिना । दलयध्वं विधुं सख्यः साक्षान्मत्तापकारिणम् ॥३॥ जानन्नापि वियोगार्तिं पद्मिनीशस्य पद्मिनि ।
किं मां दहसि हा कष्टं स्त्रियोऽपि स्त्रीषु निष्कृपाः ॥४॥ सख्यः स्फुटति मे वक्षः साधु स्फुटतु वा जनात् । स कुमारः
स्मराकारः प्रेक्ष्यते यदि हृद्गतः ॥५॥ इत्यादि बहु जल्पन्ती पतन्ती मूर्छया मुहुः । सुदतीरुदतीभिः सा वयस्याभिरलोक्यत

॥६॥ षड्भिः कुलकम् ॥ रे कीर क कुमारो मां मुक्त्वा यात्यनुमीयताम् ॥ इति निद्रालयान्तेषु सा-स्वप्नान्लपन्मुहुः
॥७॥ तीव्रतापभृतस्तस्या वयस्याः परितः स्थिताः । अस्रैरधारयन्धारायन्त्रपुत्रीचयश्रियम् ॥८॥ अथेदं मेदिनीशेन
मत्वा दिष्टैः पुरे चरैः । अवगन्तु कुमारं तं व्यलोकि शुकविक्रयी ॥९॥ चिरं नीरीक्ष्यमाणोऽपि क्वापि प्रापि नरैर्न सः ।
शुद्धधर्मोपदेष्टेव दूरमन्यैः शरीरिभिः ॥१०॥ सन्यः क्वचिदनासाद्य रसाविधुरसाविमम् । समारंभ कुमारस्य लब्धयेऽस्य
स्वयंवरम् ॥११॥ सद्यो विमुच्य कौमार्यं ये राज्यं भेजिरे नृपाः । गुणोदाराः कुमाराश्च ये तान्भूपोऽप्यमाह्वयत् ॥१२॥
तनयो नयसारस्य मन्त्रिणः सागराभिः । त्वामाह्वातुमहं नाथ प्रहितस्त्वत्पितुः पुरम् ॥१३॥ आज्ञातोऽसि कृतिनाज्ञा
त्वज्जयोत्कर्षदर्पिणा । तत्रासन्तीं पुरीमेतुमुरीकुरुतरां त्वराम् ॥१४॥ न तत्रायामि वामाक्ष्या तयान्यस्मिन्वृते यतः ।
ममाभिभव एव स्यादिदं वदति भूपजे ॥१५॥ स जगौ वीरवर्य त्वं वर्य एव तया यतः । त्वयि दृष्टे ममाप्याभू-
द्ध्यानमदनभ्रमः ॥१६॥ युग्मम् ॥ ईदृग्रूपं विहाय त्वां कन्या सान्यं वृणोति चेत् । तत्का तत्र पराभूतिस्तया
क्रिमगुणज्ञया ॥१७॥ इत्याशुक्तिभिरैः स्वस्य दर्शयन्मन्त्रिपुत्रताम् । कुमारं सागरः कीर्तिसागरं नगरेऽनयत् ॥१८॥
वासन्तीवासवेनाथ संमुखं समुपेयुषा । कृतसत्कृतिनास्थायि स धामनि सधामनि ॥१९॥ यैर्यभालि प्रभालिसन-
मालात्र स भूपभूः । पृथान्यवीरागमनं ते नरा मेनिरेतराम् ॥२०॥ तदा शृङ्गारसुन्दर्यै चारवर्यैरुपागतः । कुमारः
सोऽयमागत्ये व्याख्ये च गुणे गुणे ॥२१॥ अथ पृथ्वीशपुत्री सा प्रेषयत्कम्पिकां सखीम् । ज्ञातुं वृत्तानि वीराणां
सर्वेषां शर्वरीमुखे ॥२२॥ सा गत्वा यामिनीयामयमले समुपेयुषी । सुसाविलसल्लोकां प्राह भूपसुतां प्रति ॥२३॥

भूपप्रहितसत्कारधारिनारीशतान्विता । न्यभालयं भुजभृतः समस्तानपि तानहम् ॥२४॥ कन्दर्पहस्तशास्त्रीषु स्त्रीषु तासु गतास्वमी । विविधां विदधुर्वीरा विकृतिं कृतिताकृते ॥२५॥ कलाकलापरुचिरः सुरोचिर्लोचनप्रियः । कश्चिदात्मनि भूपेन्दुः पिङ्गतामकलङ्कयत् ॥२६॥ कलानां पटलं रूपं गुणानां च गणं परः । मदेनादूषयन्मषीबिन्दुनेव पयोघटीम् ॥२७॥ कीर्तिं कलाधुनीधौतां गुणस्यूतां पटीमिव । व्यधान्मित्रकुधा कश्चिद्धूम्ययेव मलीमसाम् ॥२८॥ किमप्यजल्पन्हृद्याङ्गः कोऽपि स्तब्धत्वनिश्चलः । अविज्ञ एव विज्ञातो मया ग्रावपुमानिव ॥२९॥ इति ताभिः समं राजलोकमालोकमानया । प्रथयन्त्या यथावस्थं मिथस्तत्कीर्तिकीर्तनम् ॥३०॥ श्रूयते यद्यशः शीलकुलरूपकलामयम् । सौधं सनत्कुमारस्य तस्य सोत्कण्ठमागतम् ॥३१॥ युग्मम् ॥ मध्येधाम वयं यामस्तन्मुखालोकनोन्मुखाः । यावत्तावन्महेन्द्रेणाप्यनुच्छिष्टं वहन्महः ॥३२॥ स कुमारः कलावद्भिर्भूरिभिर्भूषितान्तिकः । न्यभाल्यत सभावर्ती चक्रवर्ती शुभात्मनाम् ॥३३॥ युग्मम् ॥ लोलमौलितया चञ्चच्चूडामणिमरीचिभिः । आरात्रिकमिवातन्वन्कवीनां काव्यसंपदः ॥३४॥ चालयन्नङ्गुलीं रङ्गन्नखांशुविततांशुकाम् । वाग्गेयकारिणां गीतेः पताकामिव कल्पयन् ॥३५॥ चमत्कारकरानेवं स गृह्णन्गुणिनां गुणान् । चमत्कारकरं दानं ददानोऽनृणतां ययौ ॥३६॥ त्रिभिर्विशेषकम् ॥ सुधाकृतसुधावृष्ट्या दृष्ट्या प्रीतिप्रसन्नया । तदा सेवकतातापं सेवकानां लुलोप सः ॥३७॥ तदा कुमारः कुतुकी यत्र यत्र दृशं ददौ । विज्ञानं दर्शयामास स्वं स्वं वैज्ञानिकः स सः ॥३८॥ नृपपुत्रि क्षणे तत्र चित्रविद्याविशारदः । कोऽपि चित्रपटं पाणौ कुमारस्य समार्पयत् ॥३९॥ तं वीक्ष्य विस्मितोऽपृच्छन्नृपभूर्लिपिकारिणम् । चित्रसंवादिनी तस्या रूपश्रीरसस्ति वा न वा ॥४०॥

स जगाद क संवादस्तस्याश्चित्रेण वर्तताम्। शक्या रचयितुं केन चित्रे चन्द्रस्य चन्द्रिका ॥४१॥ दग्लीलागुम्फितं कास्तु
चित्रकर्म तया समम्। यस्या दृश्यार्थदेहत्वात्प्रतिबिम्बेऽपि नोपमा ॥४२॥ नेदृशी कापि कान्तास्ति कुमार त्रिजगत्यपि।
विश्वरूपाणि नः पाणिवर्तीनि लिपिशास्त्रतः ॥४३॥ इत्याकर्ण्य चिरं चित्रे पश्यन् काममपि तानयम्। कुमारः काम-
बाणार्त इव मौलिमकम्पयत् ॥४४॥ क्षणं क्षुभितमात्मानमथ संयम्य धीरधीः। चित्रं संगृह्य चित्रज्ञं कुमारः सच्चकार
तम् ॥४५॥ अम्बास्तु प्रतिहारोक्तिविदितासु ततः कृती। स नमस्कृत्य सितं हर्षस्मितसंहर्षिलोचनम् ॥४६॥ सोऽस्मा-
भिर्माल्यकर्पूरचन्दनाद्युपढौकितम्। जग्राह बहुमानेन गौरं स्वगुणवृन्दवत् ॥४७॥ दापितेषु निविष्टाभिर्विष्टरेपूचितं
ततः। चकार चिरमालापं सहास्माभिर्महाशयः ॥४८॥ अस्ति शृङ्गारसुन्दर्याः क्रीडाकीरो विशारदः। त्वत्सभोचित
एवेति विज्ञप्तोऽसौ मया तदा ॥४९॥ पश्चान्मुक्तो मयाप्यस्ति दत्तहृत्कौतुकः शुकः। इत्युक्तेऽथ कुमारेण कश्चित्तस्य
चरो जगौ ॥५०॥ कीरश्चौरैः स माणिक्यपंजरेण समं हृतः। इति श्रुत्वा ताम्रचूडः किंचिच्चिन्तार्त इव स स्थितः ॥५१॥
कलशीभवति व्योममण्डपस्येन्दुमण्डले। अस्मान्सत्कृत्य कर्तव्यप्रवीणः प्राहिणोत्ततः ॥५२॥ ईदृक्सनत्कुमारः श्रीके-
लिशैलो जगत्ययम्। जगत्त्रयचमत्कारिहारिचारित्रभाजनम् ॥५३॥ क्वास्ते सनत्कुमारः किं मामद्यापि न भाषते। न
पाठयसि सूक्तानि न फलानि प्रयच्छति ॥५४॥ तां श्रुत्वा चम्पिकावाचं तदित्थं भाषके शुके। आचचक्षे विलक्षेव
वचः शृङ्गारसुन्दरी ॥५५॥ सन्निपत्यानुरक्तं मे मनस्तावत्स एव सः। इत्यधीरस्य कीरस्य वाचा निश्चीयते मया
॥५६॥ किं तु कान्तामसौ कांचिच्चित्रे परीक्ष्य चुक्षुभे। मनः सपत्नीभीतं मे तेन सम्प्रति कम्पते ॥५७॥ असाव-

गीदृशश्चेत्तकमन्यं मन्यसे वरम् । स्वयंवरोत्सवादर्वाग्मृत्युरित्युचितो मम ॥५८॥ इत्युक्त्वा सनिःश्वासं ज्ञातबीजे । तदा
कुर्वीत मा । चम्पिकापि चिरं श्रान्तिश्रान्ताशेन समीयत ॥५९॥ निद्रातोर्दुःखौघसंघट्टाकुलमानसा । तदा
यत्फलं मृत्युं जानती जीवितव्यतः ॥६०॥ निद्रापरं परीवारं मत्वा सत्त्वावलम्बिनी । शनैः शनैः समुत्थाय काय-
त्यागमनोरथा ॥६१॥ तत्रैव केलिदोलायाः कटके नृपबालिका । पाशवत्कण्ठबन्धाय स्वं बबन्धोत्तरीयकम् ॥६२॥
त्रिभिर्विशेषकम् ॥ नैवेहाभूद्भवे चेन्मे कान्तो जन्मान्तरेऽपि तत् । मदेकासक्तचित्तोऽस्तु तदेकासक्तचेतसः ॥६३॥
इदं निगद्य सद्योऽथ कण्ठं पाशेऽक्षिपच्च सा । बाले मा मेति चासीद्गीश्छिन्नः पाशः पपात च ॥६४॥ युग्मम् ॥ चम्पि-
का तु तदा मुक्तनिद्रा तद्रसादभूत्तम् । कर्षन्तीं पाशतः कण्ठमालोकत कुमारिकाम् ॥६५॥ ततः किमिदमित्यस्यै
पृच्छन्त्यै संभ्रमस्पृशे । आचक्षत चमत्कारि कुमारी चरितं निजम् ॥६६॥ किमेतत्पतितं क्ष्मायामित्युत्थायाथ चम्पिका ।
करेणादाय पश्यन्ती हृष्यन्तीदमुवाच सा ॥६७॥ देवि देवि स एवायं वामाचित्रपटः स्फुटः । दिष्ट्या च वर्धसे
देवि यत्त्वमेवा चित्रगा ॥६८॥ सनत्कुमारं त्वय्येवासक्तं कथयितुं पुनः । चित्रस्थिता त्वमेवात्र कथमार्तासि कथ्यताम्
॥६९॥ इति वागमृतं तस्याः स्फीतं पीत्वा पतिंवरा । तमादाय करे चित्रपटमित्याददे वचः ॥७०॥ श्लाघ्यासि लब्ध-
तत्सङ्गा चित्रशृङ्गारसुन्दरि । शोचनीयास्मि च रुचं धत्से तद्विरहेऽपि यत् ॥७१॥ धन्यास्मि तत्करस्पर्शं प्राप चित्रगतापि
यत् । इतीयमुपपुलकं मुमुदे कुमुदेक्षणा ॥७२॥ प्रियं परिरभे किं न पटान्तररितमप्यहम् । सेत्यदात्तं परीरम्भमित्रं
चित्रपटं हृदि ॥७३॥ करगोचरमप्येनामनयश्चित्रसुन्दरीम् । कुमारवर नायासि किं चक्षुर्गोचरेऽपि मे ॥७४॥ एवं

तयोक्ते शून्येऽपि सत्यः प्रत्यक्षतामगात् । सनत्कुमारो धामौघधौतधामान्तरः पुरः ॥७५॥ गृहीत करकं दत्ताचमनं मुक्तासनम् । कुमारः सोऽयमायालीत्यूचे कीरो निरूप्य ताम् ॥७६॥ अथाभ्युत्थाय हर्षोर्मिप्रगुणैवाशु चम्पिका । ददावासनमासीने कुमारे चेदमब्रवीत् ॥७७॥ अद्य नः सफलं जन्म सुमुहूर्ताद्य यामिनी । यदस्मद्वाम्नि देवेन स्वयं पादोऽवधारितः ॥७८॥ अयं ते देवि स प्राणदयितो यस्त्वदिच्छया । तूर्णमाज्ञाविधायीव जज्ञे लोचनगोचरः ॥७९॥ एतदालोकपीयूषपानविघ्नां त्यज त्रपाम् । अस्याननेन्दौ हृद्याक्षि कुरङ्गीकुरु लोचनम् ॥८०॥ इत्युक्त्वासकृदुल्लास्य दृशं भूपालबालया । दृष्टास्यं हृष्टमनसं कुमारं स्माह चम्पिका ॥८१॥ हर्षाश्रुवारिहारिण्या स्फारतारांशुदृश्यया । इयं ते वीर दत्तेऽर्घं दृशा प्रसृतिदीर्घया ॥८२॥ अस्ति त्वदुचितं नान्यदातिथ्यं त्रिजगत्यपि । त्रिजगन्महनीयेयमेवातिथ्यं तवास्तु तत् ॥८३॥ स्वागतं वीरकोटीर तवास्मिन्नस्मदोकसि । विशालः स्खलितं नासीत्कथमुद्दामगामिके ॥८४॥ अथोदितस्मितव्याजराजत्सुतिततीरिति । कुमारस्तोषदुग्धाब्धिमुक्तालीकल्पगार गाः ॥८५॥ सखीं शृङ्गारसुन्दर्यास्त्वां मत्वा कीरकीर्तनात् । सदैवाहमिहागच्छमदृशीभूय विद्यया ॥८६॥ कण्ठपाशं कुरङ्गाक्ष्याः कृन्ततोऽत्र करान्मम । त्रिपथगो हीणा इवास्तां स्वपथस्पृशि ॥८७॥ त्वं च धन्यममन्येऽहमिह स्नेहवशंवदाम् । इमामालोकयँल्लोकत्रयलोचनचन्द्रिकाम् ॥८८॥ इति वर्षति कर्णेषु कुमारे सूनृतामृतम् । नृपतिप्रतिहारेण गर्जिवद्गदितं बहिः ॥८९॥ रे किंकरा धराजानिर्घुष्मानाज्ञापयत्यदः । द्रुतः संपाद्यतामद्य स्वयंवरणमण्डपः ॥९०॥ अपि दिक्करिकाः कार्यं कुमार्याः स्नपनादिकम् । स्वयंवरमुहूर्तो हि श्वोऽस्मि स्वस्तिप्रदः प्रगे ॥९१॥ स्वरम्भं मन्दध्वानमधुना विधुनाशकः । आरोहति

क्षपाक्षेपी पश्यतामेव वो रविः ॥९२॥ इत्युक्त्वा विरते तत्र धरित्रीकमितुः सुतः । ऊचे प्रेमसुधावीचिं वाचं नृपसुतां
प्रति ॥९३॥ त्वद्गुणासक्तचित्तोऽहमन्वहं नृपनन्दति । मा स्म मामन्यथा स्वप्नसंकथास्वपि शङ्कथाः ॥९४॥ यामि संप्रति
वामाक्षि स्थातुमत्रोचितं न मे । मयात्मनो मनो मुक्तमस्ति सेवामयं त्वयि ॥९५॥ इत्युक्त्वा स तिरोभूत्र तामीयुश्च
समुत्सुकाः । प्रतिकर्मविनिर्माणचारिकाः प्रतिचारिकाः ॥९६॥ किंकराश्च त्वराचण्डगतयो मण्डपे ययुः । तं च मण्डन-
मण्डल्या मण्डयामासुराशु ते ॥९७॥ स्वयंवरोत्सवे तस्मिन्पताकापाणिभिश्चलैः । शुशुभे ककुभामीशानाह्वयन्निव
मण्डपः ॥९८॥ तस्मिन्विश्वमनोमोहदिवसोदयभास्कराः । निशातकान्तयः शातकुम्भकुम्भा विरेजिरे ॥९९॥ तत्रोच्-
तोरणस्तम्भभाजो वन्दनमालिकाः । लक्ष्म्याः स्वभावलोलायाः केलिदोलाकला ललुः ॥१००॥ मुक्ताप्रालम्बनक्षत्रहृद्या
विद्योतितद्युतः । स्मरप्रसरनिस्तन्द्रास्तत्र चन्द्रोदया बभुः ॥१॥ चञ्चदुच्चप्रपञ्चेषु तत्र मञ्चेषु दिद्युते । स्फारैः पुष्पगृहैः
पुष्पायुधयन्त्रायुधैरिव ॥२॥ मुक्तास्वस्तिकरोचिष्णुकस्तूरीमण्डलच्छलात् । ईयुस्तत्र सनक्षत्राः स्मरमित्राणि रात्रयः
॥३॥माङ्गल्यकलशास्तत्र विश्वानन्दाभिनन्दिनः । अभजञ्शशभृल्लीलां नीलाम्भोजभृतः सिताः ॥४॥ श्यामशोणसितैः
सैष रत्नस्तम्भांशुभिर्बभौ । स्फुरत्तमोरजःसत्त्वैश्चित्तैरिव हृतनृणाम् ॥५॥ समाकृष्ट इवोत्कृष्टः पुण्यैः पुंसां स्थिरायुषाम् ।
स पुरीमण्डनो जज्ञे स्वःखण्ड इव मण्डपः ॥६॥ ध्वनिस्तूर्यस्य पुस्फूर्ज दूरमूर्जस्वरोदयः । मण्डपान्तःसमुद्भ्रान्तस्मरा-
र्णवरवच्छविः ॥७॥ तं मण्डपमखण्डश्रीमालमालोकितुं तदा । पूर्वशैलशिरोभूषा पूषाभूत्कुतुकादिव ॥८॥ दूतालिभिः
समाहृताः पुम्हूतास्ततः क्षितेः । सशृङ्गाराः कुमाराश्च मञ्चसंचयमाश्रयन् ॥९॥ निशाचरितरोचिष्णुप्रगुणत्रिगुणश्रुतिः ।

मञ्चसिंहासन सिंहमूपभूरप्यभूषयत् ॥१०॥ पतिंवरानिराशैस्तैम्लनिं वागैरिहागते । विमुक्तश्रीरपूदृरञ्जैरिव कैरवबान्धवे ॥११॥ पृष्ठतो ललितं गीतं गायन्तीभिस्तदालिभिः । अग्रतो वन्दिनीवृन्दैर्वद्भिर्विशदाः स्तुतिः ॥१२॥ वंशवीणादि तद्विधे(द्वि)र्वाद्यद्भिरितरतनः । आनन्द्यमानहृदया हृदयङ्गुभिरन्मदैः ॥१३॥ यूनामयोगदग्धानि श्यामरूपाणि पाणिना । धुन्वाना धावमानानि, मनांसि स्रगलिच्छलात् ॥१४॥ अमान्तमन्तरुद्भ्रान्तं कश्मीरजरजश्छलात् । सनत्कुमाररूपश्री-रागमङ्गेषु बिभ्रती ॥१५॥ विभूषणझणत्कारैर्नर्तयन्तीव मन्मथम् । स्मितया हासयन्तीव रतिं लोचनलोलया ॥१६॥ पीयमानमुखेन्दुश्रीर्लोकचञ्चुचकोरकैः । जीवादिशेति जल्पद्भिः सेव्यमाना सखीजनैः ॥१७॥ चम्पिकाहस्तविन्यस्तस्वयं-वरणमालिका । विवेश नृविमानस्था मण्डपं नृपनन्दिनी ॥१८॥ सप्तभिः कुलकम् ॥ अभूवन्मुद्रवद्भावविसंस्थुलहृदां तदा । तद्विलोकादधीराणां वीराणां विविधाः क्रियाः ॥१९॥ तथाहि ।

प्रमत्रीकर्तुमिव तां कश्चित्तत्पादसोदरम् । आरोपयन्नृपो मूर्ध्नि लीलातामरसं रसी ॥२०॥ अस्य धाम्नि निधास्ये स्वामिन्यस्यै कथयन्निव । कश्चित्करेण निःसीमं सीमन्तमणिमस्पृशत् ॥२१॥ कङ्कणे पाणिपुष्पाणि कोऽपि न्यधीत लीलया । प्रसवादपि तां लब्धु तज्जुषः पूजयन्निव ॥२२॥ रेजे सख्युः पुरस्थस्य वेणिं पाणौ धरन्परः । स्वं तस्यै वशगं वक्तुं कुर्वन्निव्यमिवोरणम् ॥२३॥ कश्चिद्रागाद् पदान्नतो नीचैर्मुखः सखीन् । नमन्मौलितया तस्याः सामनि प्रविशन्निव ॥२४॥ अपरः कम्पयामास मौलिमालोकयन्निमाम् । पुष्पबाणेन बाणेन सद्यः हत इवोरसि ॥२५॥ हृदि स्रगजस्ना कीर्णे विशेषाभ्यो मुखानिलम् । तामनात्मोचिना मत्वा न्यग्मुखो निःश्वसन्निव ॥२६॥ तवेन्दुसुन्दरं वक्त्रमिति तां

ज्ञापयन्निव । मुष्ट्या न्यमीलयल्लीलापद्मपत्रावलीं परः ॥२७॥ सुवर्णकेतकीपर्णमपरः करजाङ्कुरैः । विलिखेत्व तदङ्गेषु दत्तदक्पुलकाङ्कितः ॥२८॥ कश्चित्सदर्शनोद्भिन्नस्वेदबिन्दुचयाश्रितः । अहोसंघट्टधर्मोऽयनित्यूचेऽन्तःस्मितान्मुखीन ॥२९॥ तां नीरीक्ष्य कुरङ्गाक्षीं दृशा कोऽपि हृदि न्यधात् । तत्कालमिह कामेन क्षिप्तं काण्डमिवोक्षितुम् ॥३०॥ एवं विकुर्वता-मुर्वीपतीनामग्रवर्त्मनि । आनिनाय जया नाम प्रतिहारी पतिंवराम् ॥३१॥ अथो निवार्य तूर्यादि दर्शयन्ती धरापतीन् । इयमूचे विलोलभ्रूशृङ्गा शृङ्गारसुन्दरीम् ॥३२॥ अमी समीयुस्त्वद्दृश्या विश्वे विश्वम्भराधराः । चन्द्रीकुरु क्रमात्त्वेषु चक्षुः-कुमुदकौमुदि ॥३३॥ अयं स हंससंज्ञः श्रीनाभिसूनुकुलाङ्कुरः । राधीकृतयशा देवि काशीपुरपुरन्दरः ॥३४॥ दिवा विश्वासमक्षाणि निशि स्वप्नमयानि च । न विश्राम्यति देवार्चादानानि जनयन्नयम् ॥३५॥ एष धर्मैकनिर्माणव्यसनी शक्तिमानपि । अन्यैरपि नृपैर्भुज्यमानामुर्वीमुपेक्षते ॥३६॥ अमुं गमनलालित्यवरले तरछे वृणु । रङ्गत्तरङ्गेषु हंसैक-सहचारिणी ॥३७॥ याति पूज्यस्य कुल्योऽपि पूज्यतुल्यो नमस्यताम् । कुमार्यां मन्दमित्युक्तेऽभिसल्लाग्रे जगौ जया ॥३८॥ अयं जयन्त इत्युर्वीजानिर्विजयते युवा । जेता द्विषामयोध्यानामयोध्यानायको बली ॥३९॥ कान्दिशीकाऽरि-दुःकीर्तिकस्तूरीपूरितश्रियाम् । अयं यात्राविहारी स्वं हारीचक्रे दिशां यशः ॥४०॥ अमुं वृणु विलासेषु देवि सेविष्यसे यदि । सरयूतीरवानीरसमीरसरसा निशाः ॥४१॥ स्मरश्रीभासुरेऽप्युद्यदर्पतिमङ्गस्यपि । कन्यास्मिन्नाभजद्भावं वसन्ते मालतीव मा ॥४२॥ दत्वाक्षित्रिपदावादीत्तामुद्दिश्य जया ततः । प्रथितोऽयं पृथुर्नाम पृथुश्रीर्मथुरापतिः ॥४३॥

शक्यते लेखितुं नैष चित्रे चित्रकरैरपि । स्रष्टुं चित्तेऽपि चित्रपैरेतद्रूपं न पार्यते ॥४४॥ अयं स्वतेजःसप्ताश्वसंतता-
न्वयं महीम् । अमन्दैश्चन्दनस्यन्दैरिव सिञ्चति कीर्तिभिः ॥४५॥ अमुं वृणीष्व रन्तुं चेत्तु चित्ता रुचिता तव । उच्छलत्क-
लिन्दजाबिन्दुवृन्दा वृन्दावनावनिः ॥४६॥ राज्ञोऽस्य मुखमश्रीकमालोक्य शिबिकावहाः ॥ इहाबद्धस्पृहां कन्यां मन्वाना
जग्मुरग्रतः ॥४७॥ जगादाथ जया देवि जयनामा जयत्ययम् । उज्जयिन्या विभुर्विश्वजयिन्याः संपदां पदम् ॥४८॥
अयं दिग्विजयोदारयलप्राग्भारभारिणीम् । मृणालनालकीलेऽपि महीं बाहौ वहत्यहो ॥४९॥ अमुं तृणीकृताराति
वृणीष्व वरवर्णिनि । सपत्नी रत्नगर्भा ते भातु रत्नाकराम्बरा ॥५०॥ रत्नदण्डप्रतिमितां भूपेऽस्मिन्नसितेक्षणाम् ।
तां वीक्ष्य कन्यकां निन्युर्विमानं तेऽग्रतो नराः ॥५१॥ अथावदज्जया देवि पश्यामुं दर्पकाभिधम् । पाण्ड्यं कोदण्डगा-
ण्डिवखण्डमाखण्डलं भुवः ॥५२॥ द्विषः स्वप्नेषु वीक्ष्यामुमुदश्रं जातजागराः । नमन्त्यस्य भ्रमाच्चित्रमन्मथं चित्रवेश्मसु
॥५३॥ एलावनमहेलासु वेलासु पयसां निधेः । ताम्रपर्णीसरिन्मुक्ताभिकलासु रतिर्यदि ॥५४॥ तदेनं वृणु वामाक्षि
मद्यन्तु मनस्तव । कर्पूरचन्दनामोदकलया मालयानिलाः ॥५५॥ इतोऽस्याः सरलं वीक्ष्य तरलाक्ष्या निरीक्षणम् ।
चलिता किंचिदित्यूचे स्मरः सुस्मितया जया ॥५६॥ देवि चित्राङ्गदो नाम विचित्रगुणगौरवः । असौ ददाति नानन्दं
कस्मै कश्मीरभूपतिः ॥५७॥ शुद्धान्तमस्य किं श्लाघे श्लाघ्यास्ता अपि योषितः । स्वप्ने प्रतिमितौ चित्रेऽप्येनं कान्तं
स्पृशन्ति याः ॥५८॥ अमुं कलय लोलाक्षि त्वत्कपोले बिम्बितं स्वयम् । पत्र शुद्धान्तकान्तासु विभ्रमभ्यस्तमन्वहम्

१ प्रतिबिम्बे

॥५९॥ रागोचिताः स्तुतीरस्य शारदार्चनसत्कवेः । नित्यं निधेहि काश्मीरकलिका इव कर्णयोः ॥६०॥ स मे परः पुमानेव यः पुरासपरिग्रहः । इत्यथाह प्रतीहारीं कुमारीयं मृदुस्वरा ॥६१॥ नुत्वा नुत्वा ततो भूपमन्यमन्यं ययौ जया । आलोक्यालोक्य कुसुमं वनभृङ्गीव सुस्वरा ॥६२॥ सनत्कुमाररक्ता सा तेषु तस्थौ न कन्यका । जलाशयेषु हंसीव सिद्धसिन्धुनदोन्मुखी ॥६३॥ सा ययौ यस्य यस्याग्रं स स भूपोऽभजत्प्रभाम् । यं यं लक्ष्मीरिवामुञ्चज्जज्ञे स स मलीमसः॥ ॥६४॥ वृतं मागेव दृष्टैव बालया वरमालया । सनत्कुमारमासाद्य निजगाद जया ततः ॥६५॥ जम्बूद्वीपश्रियो भाल इव खण्डेऽत्र भारते । पुरी किरीटसादृश्यं श्रीकान्ता परिगच्छति ॥६६॥ सिंहनामा गतत्रासः कलाभिर्मुकुरीकृतः । तत्र नायकमाणिक्यनिभतां लभते नृपः ॥६७॥ अयं तस्याङ्गभूरंशुप्रकाश इव काशते । सनत्कुमारस्तारुण्यरूपयोरुचितस्तव ॥६८॥ अमान्तः काममस्यान्तः सुवृत्ता विशदा गुणाः । एतच्चित्त इव व्यूढे व्योम्नि तस्थुरुडुच्छलात् ॥६९॥ अनन्यशोभम्भोजमिवास्योद्भासुरं करम् । समेति पद्मवासेति युधि लक्ष्मीर्विपक्षतः ॥७०॥ कलानां ग्रहणे रक्तः सक्तश्चायं गुणार्जने । तद्भङ्गपातभीत्येव न पुराभूत्परिग्रही ॥७१॥ वरमाला वरेण्याङ्गि तत्कण्ठेऽस्य निवेश्यताम् ॥ अनुरूपस्य वरणात्त्वां नुवन्तु दिवौकसः ॥७२॥ अथोद्यत्पुलकं स्वेदलवार्द्रं दधती वपुः । माल्ये न्यस्य कराम्भोजं कम्पि चम्पिकयार्पिते ॥७३॥ बद्धबाष्पां दृशं कन्या वरे च शनकैर्ददौ । सनत्कुमारयुग्मं च मञ्चस्थमियमैक्षत ॥७४॥ युग्मम् ॥ अथ सद्यस्तदाश्चर्यव्याकुले क्षितिभृत्कुले । कन्यायां कं वृणोमीति ध्यायन्त्यां वीक्ष्य तौ मुहुः ॥७५॥ मत्पार्श्ववर्ती धूर्तोऽयं कोऽपि कन्ये वृणीष्व माम् । इति तुल्यं तयोरास्यादुल्ललास तदा वचः ॥७६॥ युग्मम् ॥ ततः सनत्कुमारो यः स

मदीयहृदि स्थितः । स्वकण्ठन्यस्तयैवाहं मालया तद् वृणोमि तम् ॥७७॥ एवं वचो दृशरावं श्रावयन्ती सभासदः । स्वक-
ण्ठकन्दले बाला वरमालामलालयत् ॥७८॥ इति तन्मतिलीलाभिर्वैलक्ष्याद्विलयं गते । मायासनत्कुमारेऽभूद्द्वितीयः स
भूपभूः ॥७९॥ गुणिनो वरणादस्यां गुणज्ञाग्र्यामत्सरैः । चक्रे नृपकुलैर्मायाजयाज्जयजयारवः ॥८०॥ तादृक्षदक्षताहृष्टैः
स्वयंवरणदर्शिभिः । तस्या मूर्ध्नि मरुद्भिश्चक्रिरे पुष्पवृष्टयः ॥८१॥ अथानन्दपथामन्दपान्थो नाभाकभूविभुः । सम्मानाद्
वर्जितैः सर्वैर्जगतीजानिभिर्युतः ॥८२॥ तयोः स्मेरस्मरोत्साहं तं विवाहोत्सवं व्यधात् । यत्त्रिलोकादिवेन्द्रोऽपि सहस्रन-
यनोऽजनि ॥८३॥ युग्मम् ॥ बभौ शृङ्गारसुन्दर्याः करस्थितकरपल्लवः । कुमारः कल्पवल्ल्येव पारिजातमहीरुहः ॥८४॥
वासन्तीवासवेनाथ सत्कृताः कृतिना नृपाः । तदुत्सवोच्छ्वसच्चित्ताः पुरं जग्मुर्निजं निजम् ॥८५॥ दिनानि कानिचित्प्री-
यमाणो नवनवोत्सवैः । तस्थौ कुमारः शृङ्गारसागरे श्वशुरौकसि ॥८६॥ कथं ज्ञेयः स मायाकृदिति चिन्तैकलाञ्छनः ।
तस्येन्दुवद्विहानन्दः प्रावर्धत दिने दिने ॥८७॥ अथो कथंचिदापृच्छ्य वासन्तीशं प्रियान्वितः । तत्कृतोदारसत्कारः सै-
न्यैः स्वस्य पुरेऽचलत् ॥८८॥ मार्गं क्रमादतिक्रामन्कतिभिश्चित्प्रयाणकैः । स्वर्गाभिरामे ग्रामेऽगात्स नन्दिग्रामनामनि
॥८९॥ इहाभिग्राममुद्दामस्वादाम्बुतटिनीतटे । भूवल्लभभुवोऽभूवन्नावासाः सान्द्रशाद्वले ॥९०॥ तत्र कल्लोलिनीलोलकल्लो-
लकुसुमज्जनः । समं शृङ्गारसुन्दर्या सुन्दराम्भोजभूषणः ॥९१॥ यावद्गोकुमुपाविक्षत्कुमारः सपरिच्छदः । कुतोऽपि ताव-
द्विरसं वाचं शुश्राव दुःश्रवम् ॥९२॥ युग्मम् ॥ किमेतदिति दुःखार्तैस्त्यक्तभोजनभाजनैः । परिवारजनैरुर्वीकृते जवनि-
काबले ॥९३॥ हा स्वगोत्रगृहस्तम्भ नेत्रनन्दन नन्दन । क गतोऽसीति तातेन शोच्यमानं मुहुर्मुहुः ॥९४॥ हा भ्रातः

स्वगुणख्यात यन्धुव्रातममुं किमु । त्यक्त्वा यासीति साक्रन्दैर्भ्रातृवृन्दैः कृताश्रुतिम् ॥९५॥ रे दैव किमकाण्डेऽपि सम- सन्मनोरथैः । अमुं संहरसीत्युच्चैःपूत्कारैः स्वजनैर्धृतम् ॥९६॥ करिष्ये कस्य मङ्गल्यं हा हतास्मि हतास्मि हा । एवं- विलापान्कुर्वन्त्या स्वस्रा साश्रुदृशान्वितम् ॥९७॥ रे कठोर न किं यासि हृदय त्वं सहस्रधा । इत्युरस्ताडयन्तीभिर्बन्धु- स्त्रीभिर्गुरुकृतम् ॥९८॥ हा वत्स देहि मे वाचं मुञ्च हा वत्स दर्शय । एवं लपन्त्या मूर्छन्त्या मुहुर्मात्रानुधावितम् ॥९९॥ रूपं त्रपा सुवाक् शील सत्त्वं दानमिमानि षट् । अस्मिन्गते गतान्यस्माद्ग्रामादिति जनैः स्तुतम् ॥१०००॥ कृत- शृङ्गारया दानं तन्वत्या तुरगस्थया । कान्तयानुगतं गन्तुं सार्धं वैधव्यभीतया ॥१॥ उत्पादितं स्वजातीयैश्छन्नं कौसुम्भ- वाससा । कुमारः सप्रियोऽपश्यत्पुमांसं मृतमर्चितम् ।२। दशभिः कुलकम् । तस्मिन्किंचिदतिक्रान्ते शोकानुत्पत्तिसत्तमम् । मृत्युयोगोऽस्य नास्त्येवेति ब्रुवन्तं सहानुगैः ॥३॥ शान्ताकृतिगतिस्वान्तं प्रत्यासत्तिचरं नरम् । स्वयमेव कृताह्वानं पप्रच्छेति नृपाङ्गभूः ॥४॥ युग्मम् ॥ ग्रामवास्यपि किं पश्चात्त्वभागाः किं शुचोज्झितः । मृत्युयोगोऽस्य नास्तीति कि- मेभिर्भाष्यतेऽनुगैः ॥५॥ अथ ध्रुवं धराधीशसुतः कोऽपि गुणैः स्तुतः । अर्होऽयमीदृक्तानां वार्तानामिति सोऽवदत् ॥६॥ भवतः कुलमाकारादेव देव विभाव्यते ॥ दक्षत्वं लक्ष्यते साक्षात्प्रवृत्तिप्रश्नतः पुनः ॥७॥ तद्वार्ताकथनस्थानमस- मानमसि प्रभो । सकर्णाकर्णय त्वं मे विचारकवचं वचः ॥८॥ धर्मेऽहं विहितानन्द आनन्द इति नामतः । नन्दिग्रा- मेऽत्र वास्तव्यो वस्तुव्यवहृतिस्थितिः ॥९॥ गृहिव्रतानि सम्यक्त्वमूलानि प्रतिपालयन् । वहिष्ये प्रतिमास्तास्तु भवन्त्ये- कादशेत्यमः ॥१०॥ सम्यक्त्वे निरतीचारस्त्रिकालं पूजयेज्जिनम् । मासं यावद्गृही सा स्याद्दर्शनप्रतिमादिमा ॥११॥

स्याद्व्रतप्रतिमा शुद्धाणुव्रतानि वितन्वतः । मासद्वयेन प्राच्योक्तक्रियायुक्तस्य गेहिनः ॥ १२ ॥ सामायिकप्रतिमा सा यत्र सामायिकं गृही । त्रिसंध्यं सेवते मासत्रयं पूर्वक्रियान्वितः ॥ १३ ॥ पौषधप्रतिमा यत्र श्राद्धो मासचतुष्टयम् । सत्क्रियः पौषधं धत्ते चतुष्पर्व्यां चतुर्विधम् ॥१४॥ श्राद्धः शुद्धाशयस्त्यक्तस्नानः प्राशुकभोजनः । ब्रह्मचार्यह्नि रात्रौ च कृतमानः स्वयोषिति ॥१५॥ पौषधस्थश्चतुष्पर्व्यां प्रतिमामेकरात्रिकीम् । सपञ्चः पञ्चभिर्मासैः प्रतिमा पञ्चमी भवेत् ॥१६॥ युग्मम् ॥ पूर्वोदितविधेः षष्ठी षण्मासैर्ब्रह्मचारिणः । सप्तमी सप्तभिर्मासैः सचित्तं त्यजतोऽखिलम् ॥ ॥१७॥ त्यक्ते स्वयंसमारम्भे मासैरष्टभिरष्टमी । नवमी नवभिर्मासैरनारम्भे परैरपि ॥१८॥ यत्रोद्दिष्टकृताहारत्यागी मुक्तधनः शिखी । मुण्डीव जायते श्राद्धो दश मासान्दशम्यसौ ॥१९॥ यत्रैकादश मासांस्तु लुञ्चितो मुण्डितोऽथवा । रजोहरणसंयुक्तः पतद्ग्रहपरिग्रहः ॥२०॥ किं चैकादशप्रतिमाभृते भिक्षां हि देहि मे । इत्युक्त्वा विचरत्यात्मजातौ सैकादशी भवेत् ॥२१॥ युग्मम् ॥ तदेतासु ममस्म्यत्त्वाणुव्रतानि प्रपालयन् । अधुना वहमानोऽस्मि दर्शनप्रतिमामहम् ।२२। तत्र प्रभातमध्याह्ने सायं कालत्रये जिनः । पूज्यते त्रिजगत्पूज्यो यावन्मासं यथाविधि ॥२३॥ ततोऽहमद्य मध्याह्ने पूजां कृत्वा जिनेशितुः । आगां ग्रामजनाचारे पश्चाद्गतिरतोऽभवम् ॥ २४ ॥ कोऽपि कुत्रापि केनापि संबन्धेन स्वकर्मतः । भवद्भवानन्तान्मे भ्रमतः श्र ( श ) मतस्करान् ॥ २५ ॥ अतः कस्य विपन्नस्य शोकं कुर्वे कृतेऽत्र वा । किं भवेत्तन्न शोकोऽयमस्तोकोऽपि शुनोति माम् ॥ २६ ॥ युग्मम् ॥ मृत्युयोगोऽस्य नास्तीति यदुक्तं प्रस्तुतं मया । तत्र धात्रीपतेः पुत्र ममाकर्णय कारणम् ॥ २७ ॥

नन्दिग्रामेऽस्ति सारङ्गनामा ग्रामाग्रणीरिह । कौटुम्बिकोऽम्बिकासंज्ञभार्याचर्यगृहस्थितिः ॥२८॥ तज्जन्मा नागनामासीत्सध्यायां ह्यस्तने दिने । अयं पुष्पोच्चयं तन्वन्दष्टो दुष्टाहिना वने॥२९॥ ततो विषभिषग्वृन्दैरमन्दैर्मन्त्रसंमदैः । पाल्यमानोऽप्ययं प्राप दीर्घस्वापवशां दशाम् ॥३०॥ मया पुनरमायेभ्यस्तत्त्वज्ञेभ्यः कथान्तरे । गुरुभ्य इति सर्वज्ञशासने विश्रुतं (ते) श्रुतम् ॥३१॥ तिथयः पंचमी षष्ठयष्टमी नवमिका तथा । चतुर्दश्यप्यमावास्यादिना दष्टस्य मृत्युदा ॥३२॥ दष्टस्य मृतये वारा भानुभौमशनैश्वराः । प्रातःसंध्यास्तसंध्या च संक्रान्तिसमयस्तथा ॥३३॥ भरणी कृत्तिकाश्लेषा विशाखा मूलमश्विनी । रोहिण्यार्द्रा मघा पूर्वात्रयं दष्टस्य मृत्यवे ॥३४॥ वारि स्रवन्तश्चत्वारो दशा यदि सशोणिताः । वीक्ष्यन्ते यस्य दष्टस्य स प्रयाति भवान्तरम् ॥३५॥ रक्तवान्दंश एको वा छिद्री काकपदाकृतिः । शुष्कः श्यामस्त्रिरेखो वा दष्टे स्पष्टयति व्ययम् ॥३६॥ सावर्तः सर्वतः शोफावृतः संकुचिताननः । दशः शंसति दष्टस्य विनष्टमिह जीवितम् ॥३७॥ केशान्ते मस्तके भाले भ्रूमध्ये नयने श्रुतौ । नासाग्र ओष्ठे चिबुके कण्ठे स्कन्धे हृदि स्तने ॥३८॥ कक्षायां नाभिपद्मे च लिङ्गे संधौ गुदे तथा । पाणिपादतले दष्टः स्पृष्टोऽसौ यमजिह्वया ॥३९॥ युग्मम् ॥ एषां मध्याद्विरुद्धं न जातमस्यास्ति किंचन । येनासौ नाशमभ्येति नागः पुंनाग नागतः ॥४०॥ ग्रामेऽत्र मान्त्रिकः कोऽपि नास्ति लोकोत्तरः परम् । किं कर्पूरश्रियः पूरं पूरयेल्लवणाकरः ॥ ४१ ॥ वदन्तमिति दिग्दन्तिदन्तद्युतिमतिः स तम् । उवाच रचितानन्दमान्दं नृपनन्दनः ॥ ४२ ॥ त्वया लोकोत्तरः कोऽयं कलाकुशल कीर्त्यते । मान्त्रिकोऽत्रेति धात्रीशपुत्रप्रश्नेऽभ्यधादसौ ॥ ४३ ॥

मान्त्रिको लोकसामान्यः सतां मान्यः स मन्यते । विषाणामौषधैर्मन्त्रैर्यश्चिकित्सां चिकीर्षति ॥४४॥ यस्य शुद्धतपोध्यानैः सिद्धलब्धेः प्रभावतः । विषदोषा वीलीयन्ते सैष लोकोत्तरः परम् ॥४५॥ किमीदृशोऽपि दृश्योऽस्ति स्वस्तिदः क्वापि कोऽप्यहो । इति जल्पति भूपालभवे साश्चर्यचेतसि ॥४६॥ हर्षकोलाहलः कोऽपि शोककोकनिशाकरः तूर्यवर्यरवोद्दामो दूरादाविरभून्महान् ॥४७॥ युग्मम् ॥ किमेतदिति भूभर्तृसुवा पृष्टः पुरः पथि । त्वरां त्वरत्वा जगौ कश्चित्पुरुषोऽपरुषाक्षरैः ॥४८॥ ग्रामेऽत्र नागनामा मे बन्धुर्विषधरान्मृतः विशञ्श्मशानमुत्तस्थौ तरसा शिबिकान्तरात् ॥४९॥ तदैव दैवतो मर्त्यलोकासंभवसौरभः । उल्ललास कृतोच्छ्वासनासास्वाद्यः सदागतिः ॥५०॥ किमेष निर्विषः को स्फुतो वायुरसाविति । संलापः ममभुत्त्राशोके लोके तदा मुदा ॥५१॥ यावद्विक्षिप्यते दक्षैर्दिक्षु च्छुरितस्तनः । तावद्भावभरोल्लासिसमागर्भविभूषणः ॥५२॥ देवनिर्मितनिष्काञ्जरत्नसिंहासनासनः । दृष्टो धर्म दिशन्दूरादवनीपावनो मुनिः ॥५३॥ युग्मम् ॥ अहो महामुनिस्पर्शमाहात्म्यामोदमेदुरः । नागस्यास्य बभूवैष विषदोषहरो मरुत् ॥५४॥ इत्याकाशगिरं वारंवारं श्रुत्वा जनो मुदा । अगान्नागं पुरस्कृत्य कृत्यविद्वन्दितुं मुनिम् ॥५५॥ युग्मम् ॥ सुरासुरनरस्तूयमानातिशयवैभवम् । मुनिं नत्वाशधर्मो मे भ्राताभ्येति महोत्सवैः ॥५६॥ स्यान्मया नगाधीश गत्वौकः प्रति संप्रति । वस्तु विस्तार्यमेवास्ति तोरणस्वस्तिकादिकम् ॥५७॥ एवमुक्त्वा गते तस्मिन्नानन्दं सुन्दराननः । नृपभूर्भूतमङ्गावः प्रागल्भीगर्भमभ्यधात् ॥५८॥ ईदृग्लोकोत्तरः पूर्वं न मया मान्त्रिकः श्रुतः । आगमार्थ इवोत्कटस्तन्नामग्रितचेतसा ॥५९॥ धन्यस्त्वं सिद्धवाक्योऽसि विवेकिन्येन वर्णितः । अलब्धोऽर्थः

क्षणात्साक्षाद्देवं मे दर्शयिष्यते ॥६०॥ तदेहि देहि पावित्र्यमस्माकं मुनिदर्शनात्। इत्युक्त्वा मार्गगं नागं सत्कृत्या-नन्ददर्शितम् ॥६१॥ समं शृङ्गारसुन्दर्या शुद्धश्रद्धानुबन्धया । आनन्देन द्विधा सार्धं मुनिं नन्तुमगादसौ ॥६२॥ युग्मम् ॥ मुनिनाथं नमस्कृत्य लब्धाशीर्वचनस्ततः । शक्रोचिरलंचक्रे संसदः सपरिच्छदः ॥६३॥ अन्तःप्रसरत्पी-यूष वर्षन्पर्षदि वीक्षणैः तत्त्वार्थं मुख्यमाचख्यौ तदा यतिपतिरित्यति ॥६४॥ अर्थेषु श्लाघ्यते धर्मो गुणेषु विनयो यथा । पुरुषार्थं विना व्यर्थः कायो जीवं विना यथा ॥६५॥ न वर्ण्यः सर्वरूपोऽपि विना धर्मं नृणां भवः । हृद्योऽप्यदेवः प्रासादः कोविदैर्न नमस्यते ॥६६॥ सुखं चिन्तितमल्पं यो ददेऽनल्पमचिन्तितम् । धर्मश्चिन्तामणिर्धत्ते सोऽस्मचित्ते चमत्कृतिम् ॥६७॥ संसारग्रीष्मदुःखोर्मिधर्मसंतापिता यदि । ततो धर्मामृते सन्तु सज्जनाः सज्जमज्जनाः ॥६८॥ क्षणेऽस्मिन्विस्मयस्मेरनयनो मुनिदर्शनात् । सनत्कुमारः सद्भक्तिरुवाच रचिताञ्जलिः ॥६९॥ एवं यः स्तू-यते धर्मः प्रभो युष्माभिरद्भुतः । देहिभिर्गेहिभिः सोऽयं क्रियमाणो भवेन्न वा ॥७०॥ भवेद्भव्यात्मनां धर्मः सर्वेषां विधिना कृतः । श्रुत्वेति श्रुतिपीयूषं मुनिवाचमुवाच सः ॥७१॥ यद्येवं तत्कथंकारमिदं सारतरं वयः । हृद्य रूपमिदं मान्यैरवमन्य व्रतं वृतम् ॥७२॥ अथ प्रथितपाथोधिधीरध्वानकिरं गिरम्। जगाद जगदानन्ददायकः साधुनायकः ॥७३॥ दुःकर्मबन्धवंशोत्थः संमोहोद्धुरधूमभृत् । दक्षपक्षिगणद्वेष्यः समीपस्थात्मतापकः ॥७४॥ दुर्गरोग-स्फुलिङ्गोग्रः कलहत्राटकृतारवः । मिथ्याज्ञानमरुत्प्रेर्यः सर्वेषां शोषपोषकः ॥७५॥ अशक्यस्त्यक्तुमत्यन्तं मिथ्या-दृष्टिजडालसैः । स्मृतिज्वालाभिरुत्फुल्लान्मनोरथतरून्दहन् ॥७६॥ निरातङ्कं सदानन्दं पदं गन्तुं शुभेऽध्वनि । व्रते

भवद्वस्तावदेको हेतुर्ममाभवत् ॥७७॥ चतुर्भिः कलापकम् ॥ द्वितीयः कः प्रभो हेतुर्भवता भवतान्तिभित् । इति पृष्टे सतामिष्टे कुमारेण मुनिर्जगौ ॥७८॥

अस्तीह स्तुतविस्तारा ताराख्या रुचिरा पुरी । यार्कतापेन न क्लिष्टा कीर्णा कोटिध्वजाञ्चलैः ॥७९॥ तत्र शास्त्रपविग्रार्थकृतार्थीकृतचेतनः । तारापीड इति क्ष्मापः स्थापको नयधर्मयोः ॥८०॥ तन्मित्रं संपदां पात्रं पुत्रः श्रीपतिमन्त्रिणः । श्रीषेणसंज्ञः स्वप्रज्ञाज्ञातज्ञानव्यवैभवः ॥८१॥ अन्यदा प्रमदालोकलोललोचनलोकिनः । वसन्ते रन्तुमुद्यानं स ययौ नवयौवनः ॥८२॥ ललन्ती ललना तत्र नेत्रपत्रसुधाञ्जनम् । ददृशे पुण्यलावण्यपण्यापणमिवामुना ॥८३॥ एषा श्रीषेणमेणाक्षी वीक्ष्य साक्षान्मनोभवम् । दक्षं कटाक्षविक्षेपलक्षैरुत्क्षिप्य ह्यधात् ॥८४॥ अन्योन्यं दर्शनात्तावन्योन्यमनुरागिणौ । स्वस्वावसथमस्वस्थौ जग्मतुस्तौ दिनात्यये ॥८५॥ ग्रस्तस्तत्र मृगीनेत्रावियोगेन स मन्त्रिभूः । निशि निद्रादरिद्रोऽयमिलमुद्रमचिन्तयत् ॥८६॥ अहो रूपमहो कान्तिरहो नयनविभ्रमः । अहो स्नेहानुबन्धश्च तस्याः शस्यावधेर्मयि ॥८७॥ कुलस्यालंकृतिः कस्य किं नाम स्तावयलसौ । क मया द्रक्ष्यते केनोपायेन श्वस्तने दिने ॥८८॥ पार्थिवेन वृथा मैत्री व्यर्था मे मन्त्रिपुत्रता । निरर्थकं च जन्मेदं यदि तस्या न संगमः ॥८९॥ इत्याद्यनल्पसंकल्पसंतापितमनाः स ना । प्रतियामं युगोन्मानादक्षिपद्दुःक्षिपां क्षपाम् ॥९०॥ चतुर्भिः कलापकम् ॥ द्वितीयेऽह्नि स मध्याह्ने रहस्युपवने गतः । कात्यायन्या कयाप्यूचे चिन्ताचुम्बितचेतनः ॥९१॥ इहास्ति गुरुवास्तव्यः स्तोतव्यगुणभूषणः । तारापीडनरपीडोपाध्यायस्तारकाभिधः ॥९२॥ पूर्वपत्न्यां प्रमीतायां कुलश्री-

शीलशालिना । एतेनोद्वाहिता रूपमहिता रोहिताह्वया ।९३॥ जराजर्जरगात्रोऽहमियं तु नवयौवना । चलान्द्रक्षाणि चेत्येष दत्ते नास्या बहिर्गतिम् ॥९४॥ गतः शाखापुरे राज्ञादिष्टोऽसौ ह्यस्तने दिने । मया धात्र्या समं चैत्यमुद्यानं कथमप्यगात् ॥९५॥ सुभग त्वं तया तत्र दृष्टो दृष्टिप्रियस्तथा । स्मरज्वरभरार्ता सा रोहिता मोहिता यथा ॥९६॥ तदर्नि हर्तुमद्यास्मद्दुहितुर्देहि दर्शनम् । विधेहि वाचिकं चेदं हारयष्ट्या सहागतम् ॥९७॥ स्फुरत्कान्तरुचिं कान्तां कृतस्वातिरसप्रियाम् । धेहि मां हारयष्टिं च हृदये हृदयेश्वर ॥९८॥ ततो हारलतां कण्ठे न्यस्य सा मे प्रियेत्यहो । विशेषादेव शिश्लेष कामिनः क्व विवेकिना ॥९९॥ क्षणं श्रान्तिः क्षणं भ्रान्तिः क्षणं चिन्ता क्षणं धृतिः । क्षणं त्रासः क्षणं हासस्तमव्रीडं व्यडम्बयत् ॥११००॥ इत्यस्मिन्स्मरदोषेण श्रीषेणे विषमीकृते । दुष्टचेष्टाघटापोषः प्रदोषः समभूत्ततः ॥१॥ एहि तद्भवनं तस्या यौवनं कुरु पावनम् । एवमुक्तस्तया नार्या सोऽनार्यांशो मुदाचलत् ॥२॥ असन्मार्गोज्ज्वलत्कामस्तमश्छन्नोऽपरिच्छदः । स तया दुर्धिया सार्धं तां प्रापात्मेव दुर्गतिम् ॥३॥ दुर्दैवद्रोहितां यावद्रोहितां वार्तयत्यसौ । तावद्भावत्परीवारस्तारको द्वारमागमत् ॥४॥ कालागन्या स भीत्यार्तः प्रक्षिप्तः क्षालकूपके । अस्थात्मस्थानके गन्तुमिवायं निरयं हहा ॥ ५ ॥ दुर्गन्धबहुले कीटसंकुले पङ्किले जले । गलंदघ्ने घनं मग्नः स तटीघर्षणव्रणः ॥६॥ तत्र शूकाकृतोत्कारवान्ताहारस्याहृतैः । उत्थितैः कुथितैः क्षालजलैर्विशद्भिराननै ॥७॥ लोलाभिर्वान्तलालाभिः पिच्छलाभिर्वृतोऽभितः । सशृङ्गारोऽपि बीभत्सरसोऽङ्गीव बभूव

कण्ठप्रमाणे

सः ॥८॥ युग्मम् ॥ वदने मशकैर्दंशैः कृमिभिस्तिमिभिस्तनौ । तलेऽसौ कर्परैः कीलैस्तदात्वर्थं कदर्थितः ॥९॥ विशाखम्भुनि नासागमनाशोऽस्य स्वजीविते । कूपकण्ठे क्षिपन्हस्तौ तीक्ष्णाक्षेनाक्षिना हतः ॥१०॥ इत्थं निशीथकालेऽसौ नरको नरकाधिकम् । सहमानो महादुःखमश्रौषीत्तुमुल गृहे ॥११॥ तदार्धवृद्धा दक्षासौ क्षालितः सज्जरज्जुना । समाकर्ष दुःकर्मश्रुटिर्जीवमिवाशिवात् ॥१२॥ आगत्योपवने तत्र ज्ञापयिष्यामि भाविनम् । वृत्तान्तं तु नितान्तं त्वां व्रज द्वारेऽस्ति कोऽपि न ॥१३॥ एवमुक्तस्तया क्षालजलाविलतनुस्ततः । प्रणनाश स कीनाशपाशच्युत इव द्रुतम् ॥१४॥ नरैरारक्षकैः कोलाहलं श्रुत्वा त्वरागतैः । नश्यन्दृष्टः स कोदण्डदण्डैर्हत्वा न्यबध्यत ॥१५॥ गर्तोशूकरवत्कोऽयं दिग्धो दुर्गन्धकर्दमैः । इति दीपकरैरेभिरीक्षितः सोपलक्षितः ॥१६॥ युक्तो मोक्तुममोक्तुं वा मित्रं क्षितिपतेरसौ । इत्यालोचपराः सर्वे नरा मुदत्वमागमन् ॥१७॥ तदावदातधीर्वीरचर्यया संचरन्नृपः । आययौ तुमुलाकृष्टो दृष्टवानपि तं तथा ॥१८॥ ज्ञात्वा तं कृतिनां सीमा श्रीमान्भूमानचिन्तयत् । मन्येऽसौ मद्गुपाध्यायालये तुमुलकारणम् ॥१९॥ संसारे स्खलितं कस्य न स्यान्मतिमतोऽपि वा । किं तु मे मित्रमा बाल्यात्तत्र युक्तमुपेक्षितुम् ॥२०॥ दृष्ट्वा मां त्वस्य लज्जा स्याद्बाधाकृद्बन्धनादपि । इति निश्चित्य कृत्यार्थं प्रकृत्या निभृतापकृत् ॥२१॥ आरक्षकाणामात्मानं ज्ञापयित्वैष सत्वरम् श्रीषेणं मोचयांचक्रे तारापीडः स्वपीडया ॥२२॥ चतुर्भिः कलापकम् ॥ वपुःप्रमाणात्प्रच्छन्नोपकृतिप्रकृतिस्थितः । स्वस्य प्राग्बन्धमोक्षाच्च नृपस्तेनोपलक्षितः ॥२३॥ ततो दर्शयितुं स्वास्यमशक्तः सैष लज्जया । राज्ञादिष्टैर्भटैर्दूरादाप्तः स्वगृहेऽगमत् ॥२४॥ मौलाङ्कः स गतो तत्रोपवनेऽस्याङ्गनागृहे ।

आरामपालकेभ्यश्च वाचं शुश्राव दुःश्रवाम् ॥२५॥ अथ रोहितया रात्रौ पत्युर्निद्राजुषः भ्रमात् । गलं छेत्तुं समु-
क्षिप्तः क्षुरिकादुर्धरः करः ॥२६॥ तदाभूत्क्षुरिकास्तम्भस्तारकः सहसोत्थितः । रोहिता हृद्रवे (रैः) बद्धा बन्धनै
रज्जुवर्जितैः ॥२७॥ अदृष्टैः सा हता घातैरारराट तथा कटु । यथास्य पत्तयोऽन्ये च दधावुस्तुमुलाकुलाः ॥२८॥
कुतोऽप्यगाद्धराधीशः स्वोपाध्यायममत्वतः । स क्षणाद्धूपमुत्क्षिप्य नम्रस्तामित्यभाषत ॥२९॥ मत्प्रभावे कासि
त्वं तत्त्वं देवि ममादिश । स्त्रीमात्रेऽत्र कृपापात्रे किममर्षः प्रकर्षितः ॥३०॥ एताभिर्भक्तिभाषाभिस्त्वत्त्वास्तोकतरां
रुषम् । नभःप्रभवया वाण्या बभाषे देवता नृपम् ॥३१॥ सम्यग्दृष्टिरहं देवी भक्ता सर्वज्ञशासने । धर्मकर्मप्रवृत्तानां
सतां विघ्ननिवारये ॥३२॥ तत्त्वज्ञं दृढसम्यक्त्वं परदारपराङ्मुखम् । स्वपतिं निघ्नती क्रूरा मया बद्धेयमस्ति तत्
॥३३॥ युग्मम् ॥ किमसौ स्वपतिं हन्तीत्युक्ता राज्ञाह देवता । तमेव रमणं कर्तुं यो बद्धो मोचितस्त्वया ॥३४॥ सर्वज्ञा-
ज्ञास्ति तेऽमुष्य भाषसे यदि दूषणम् । प्रकाशयसि नामापि राज्ञा देवीति वारिता ॥३५॥ किं तूक्ता तारकेणासौ
सकृपेण नृपेण च । देव्युद्धनाति नाद्यापि रोहितां रमणाहिताम् ॥३६॥ एवमाकर्ण्य कर्णेषु तप्तत्रपुसमं वचः । श्रीषे-
णश्चिन्तयांचक्रे बलाद्वैराग्यसंगमः ॥३७॥ मन्येऽस्मिन्नेव संजाते तुमुले मलसंकुलः । क्षालतः क्षणतः क्षिप्तस्तया
बहिरहं तदा ॥३८॥ दुराचारद्रुमारामवनीरेता नितम्बिनीः । दुर्मेधाः किं व्यधाद्धेधाश्चिन्तां वासौ वृथा मम ॥३९॥
नार्यः कुकार्यकर्तृत्वान्निन्द्याश्चेत्तत्पुमानपि । महानिन्द्योऽस्मि दुःकर्ममूलदुःशीलभाग् यतः ॥४०॥ मम धिग्मानुषं जन्म
कुलं येन कलङ्कितम् । सावद्या सापि विद्याभूत्पापे मय्यपि या स्थिता ॥४१॥ क्षितौ जितेन्द्रियत्वं हि मूलं गुणलता-

ततेः । कुशीलत्वकुशीघतैर्मयाक्षिप्तं तदद्य हा ॥४२॥ मामकृत्यमतिं मत्वा त्रस्ता सापि त्रपा तदा । तिष्ठेदविरलं
किं वा वारला पङ्किले जले ॥४३॥ स्तुत्यः स सत्यमितत्वपात्रं क्षत्रशिरोमणिः । तारापीडाऽखिलां पीडां जह्रे यो
ह्रीकरीं मम ॥४४॥ अश्रोतव्यचरित्रोऽहमपावित्र्यधनोऽधुना । स्वमुखं दर्शयिष्यामि कथं तस्योपकारिणः ॥४५॥
धन्यास्ते ये सिताम्लानमानमाल्यधरा नराः । स्वकीर्तिमुक्ताभरणैर्विभूष्य भुवनान्ययुः ॥४६॥ इत्थं चिन्तयतोऽत्यर्थं
तस्य संविग्नचेतमः । तारकौकःप्रदेशेऽभूज्जयकोलाहलोऽम्बरे ॥४७॥ तमाकर्ण्य स ऊर्ध्वास्यो यावत्तिष्ठति विस्मितः ।
तावदाभाष्यतागत्य कात्यायन्या विरक्तया ॥४८॥ मया वत्स स्ववत्साया वात्सल्यान्मूढचेतसा । ह्यस्तनेऽहनि सद्-
बुद्धिभिरकृतं दुःकृतं कृतम् ॥४९॥ तत्त्वदीयमहाकष्टैः स्वपुत्र्या दुष्टचेष्टितैः । अनुभूतमिदं दुःखं सद्योऽवद्यफलं
मया ॥५०॥ त्वत्कृते यत्तया पत्युरहितं विहितं निशि । तल्लोकज्ञातमप्यत्र मम वक्तुं न युज्यते ॥५१॥ तन्निःशेषं
श्रुतं मातः प्रातश्चानपालतः । कस्त्वयं तदगृहोद्देशगगने मङ्गलध्वनिः ॥५२॥ इति श्रीषेणपृष्टेयमाचष्टे स्म सचि-
ममा । इदं वत्स स्वधर्मस्य स्वल्पस्यापि फलं शृणु ॥५३॥ युग्मम् ॥ सकृपेण नृपेणापि प्रोक्ता शासनदेवता ।
यत्कोपा विद्यते न मत्पुत्र्या बन्धमोक्षणम् ॥५४॥ पृथ्वीनाथोऽप्यथ व्यर्थाभ्यर्थनः सव्यथो हृदि । ययावस्तोक-
लोकेन स्वमोकः शोकसंकुलः ॥५५॥ संप्रत्यकस्मादस्माकं सुकृतैः प्रेरितं गृहे । साध्वीयुगलमभ्वेक्षादक्षं भिक्षाकृ-
तेऽविशत् ॥५६॥ दृष्ट्वा तदुच्चरोमाञ्चकञ्चुका साश्रुलोचना । बन्धनाभावतोऽकुण्ठा भूमिपीठे लुठन्त्यसौ ॥५७॥ शरणं
ह्यां.

मे त्वदीयो स्तश्चरणाविति वादिनी । अनमच्च सुता साध्वीमभवच्चाम्बरे वचः ॥५८॥ युग्मम् ॥ शुद्धा श्रद्धा त्वया दध्रे साध्वीं नन्तुं मुदा यदा । तदैव देवता वन्धाः संहृता रोहिते मया ॥५९॥ यत्त्वया सुव्रताऽध्येयमजिह्मब्रह्मचारिणी । साध्वी नता पवित्रासि तत्त्वं माधर्मिका मम ॥६०॥ इत्युदीर्य चिरं वर्यतूर्यध्वानेन मिश्रितम् । जयकोलाहलं कृत्वा तिरोधत्ते स देवता ॥६१॥ त्रिभिर्विशेषकम् ॥ अथात्मचरितोद्विग्नं व्रते तस्थौ मनो मम । वह्निना व्यथितः पाथस्यमृतः पारदो यथा ॥६२॥ पापतापच्छिदे देहि देहिनो मे व्रतामृतम् । इत्थमभ्यर्थिताऽर्थं सुव्रता मामवीवदत् ॥६३॥ भाग्यवत्यसि भद्रे त्वं तत्त्वज्ञश्चेतनस्तव । कर्मद्रुमभिदे वज्रं ययाचे यत्त्वया व्रतम् ॥६४॥ किं तु मे गुरवः सन्ति श्रीशीलप्रभसूरयः । लीलोद्यानतटेऽभ्येत्य तदभ्यर्णे व्रतं भज ॥६५॥ इत्युक्ताहं तया हन्त तवान्तिकमिहागमम् । ममापराधः सोढव्योऽनुमन्यस्व व्रताय माम् ॥६६॥ एवं निशम्य रम्यार्थं वचः सचिवसंभवः । दध्यावुत्तुङ्गवैराग्यतरङ्गच्छन्नमानसः ॥६७॥ अहह प्रहतज्ञानह्रीयशोभययामिकैः । विषयैर्मुषितं मेऽद्य तस्करैः सुकृतं धनम् ॥६८॥ तानेव पुरुषान्मन्ये न येषां विषमेषुणा । स्त्रीविभ्रमेषुभिर्भित्त्वा चित्तं धृतिरगृह्यत ॥६९॥ सुव्रताया व्रतस्याहो माहात्म्यमभवत्कियत् । यदेवं मुदिता देवी वितनोति प्रभावनाम् ॥७०॥ ततः स्वस्य व्रतिन्याश्चाब्रह्मणो ब्रह्मणोऽन्तरम् । विज्ञाय स्यान्ममादातुं साम्प्रतं साम्प्रतं व्रतम् ॥७१॥ किं चैनत्कुर्वतः स्यान्मे मुखच्छविरिहोज्ज्वला । अमुत्र च भवे भद्रं भूरिभाग्यभवं भवेत् ॥७२॥ एवं चित्ते स निश्चित्य कृत्यं कात्यायनीं जगौ । स्वाभिप्रायं वदन्त्याम्ब त्वयाहं साधु बोधितः ॥७३॥ ममाकृत्यकृतः कर्मोन्मूलने मूढचेतसः । उपायं ज्ञापयांचक्रे भवती भवतीरदम् ॥७४॥

आत्मा प्रमादपर्यङ्के शयानो मोहनिद्रया । कथं जागर्ति चेन्न स्यात्तुपदेशस्वरः पुरः ॥७५॥ ततः श्राद्धे त्वया सार्धं श्रद्धया गुरुसंनिधौ । ध्वंसाय स्वापराधस्य ग्रहीष्ये व्रतमार्हतम् ॥७६॥ इति प्रतिज्ञां कृत्वा सोऽप्रतस्तस्याः व्रतस्पृहः । आपृच्छ्यातुच्छविच्छेदकातरौ पितरौ बलात् ॥७७॥ वन्द्यमानस्य तत्त्वज्ञं क्षत्रं मित्रमकृत्रिमम् । संबोध्य बान्धवान्कृत्वा कृतार्थानर्थिनो जनान् ॥७८॥ परिवारपरित्यागं कृत्वा कात्यायनीयुतः । श्रीशीलप्रभसूरीणां संनिधौ व्रतमाददे ॥७९॥ त्रिभिर्विशेषकम् ॥ विहरन्गुरुभिः सार्धं श्रीषेणः कर्मशोषणः । तपांसि तन्वन्सिद्धान्तं शुद्धान्तःकरणोऽपठत् ॥८०॥ काले कियत्यपि क्रान्ते गुर्वादेशमवाप्य सः । इहैव स्थण्डिले तस्थौ शुद्धध्यानरतिर्यतिः ॥८१॥ दृष्ट्वप्रभानुभावापि रोहिता तुच्छमोहिता । श्रीषेणे नात्यजत्कामं स्नेहबन्धो हि दुस्त्यजः ॥८२॥ पत्युरावर्जनायासौ तन्वती गृहिणां व्रतम् । अक्षीणरागा क्षीणाङ्गी मृत्वाभूद्व्यन्तरी वरा ॥८३॥ अवधिज्ञानतो ज्ञात्वा त मुनिं स्थानकेऽत्र मा । आगमत्प्राग्भवप्रेमपूरपूरितमानसा ॥८४॥ हावैः प्रीतिगिरां भावैर्व्यन्तर्योपद्रुतोऽपि सः । नाचलद्ध्यानतो दन्तिदन्तघातैरिवाचलः ॥८५॥ किं त्वस्य क्षपकश्रेण्यामारूढस्य मुनीशितुः । केवलज्ञानमुत्पेदे विच्छेदे घातिकर्मणाम् ॥८६॥ तन्मत्वा व्यन्तरी मुक्तमोहा भक्तिमिमां व्यधात् । सुगन्धानिलहेमाब्जरत्नसिंहासनादिकाम् ॥८७॥ जाते च निर्विवे नागे न्योन्नि वाग्निर्ममेऽनया । भवेत्प्रभावनायां हि सम्यग्दृष्टेरभीष्टता ॥८८॥ सोऽहं श्रीषेणनामास्मि यतिर्नृपतिनन्दन । विनीता व्यन्तरी चेयं तत्र दक्षिणतः स्थिता ॥८९॥ यत्प्रच्छे यत्त्वया सौम्य द्वितीयं व्रतकारणम् । तदेतदिति वैराग्यं ज्ञेयं विषयदोषजम् ॥९०॥ इत्थं कथायास्तत्त्वार्थमवबुध्य धियां निधिः । सनत्कुमारः संसारकान्तारानिक-

मोक्षमः ॥९१॥ उन्मीलितमुखाम्भोजः केवलज्ञानभास्करम् । गुरुं विज्ञपयामास नत्वा मत्त्वाधिकाधिपः ॥९२॥ युग्मम्॥
सधारित्र चरित्रं ते पवित्रं यन्मया श्रुतम् । तस्योचितं ततः स्याचेद्व्रतमासेव्यते परम् ॥९३॥ तत्कर्तुं नास्म्यलं वोढु-
मिव वत्सतरो रथम् । किं तु स्वदारसंतोषं कुर्वेऽनर्थनिवारणम् ॥९४॥ ततो दन्तांशुसंमृच्यमानादेशविधूदयः ।
अवोचदौचितीकल्पलतारोहावनिर्मुनिः ॥९५॥ स्वबुद्ध्याभिग्रहश्चक्रे यस्त्वया ज्ञाततत्त्वया । शममेष्यति तेनैव कृतिन्भ-
वभ्रमस्तव ॥९६॥ परदारपरीहारस्तन्यते येन गेहिना । तेन सिद्ध्यङ्गनालीलं शीलं शीलितमुज्ज्वलम् ॥९७॥ यस्तु
स्वदारसंतोषी विषयेषु विरागवान् । गृहस्थोपि स्वशीलेन यतिकल्पः स कल्पते ॥९८॥ विश्वप्रीतिप्रदास्त्वेकं शीलं
भूपास्तु शस्यते । जायते येन जीवोऽयं भूषितो निर्वृतेः प्रियः ॥९९॥ सत्कुमार त्वया सारतरं व्रतमगृह्यत । विशेषा-
दप्रमत्तेन भव्य भाव्यमिहान्वहम् ॥१२००॥ इत्युक्तो गुरुणावादीददीनमिति भूपभूः । नियमस्त्वत्प्रमादान्मे प्रभो
प्रामाण्यमेष्यति ॥१॥ अत्रान्तरे पवित्रान्तःकरणा करुणार्णवम् । गुरुं प्रणम्य शृङ्गारसुन्दरीति व्यजिज्ञपत् ॥२॥ मनो-
वचनकायेन शुद्धं श्रद्धानबन्धुरा । परपुंसः परित्यागं विधास्ये जीविताववधि ॥३॥ गुरुरित्याह वत्से त्वं सत्यं शृङ्गार-
सुन्दरी । शीलं स्त्रीणां हि शृङ्गारः क्षान्तिर्दर्शनिनामिव ॥४॥ इत्थं कृत्वा स्थिरीकारमग्राहयदभिग्रहम् । सनत्कुमार-
शृङ्गारसुन्दर्योर्विधिना मुनिः ॥५॥ भवतां दर्शनं भूयात्पुनर्मे सुलभं प्रभो । इति नत्वा गुरुं स्तूयमानः सभ्यैर्नृपाङ्गभूः
॥६॥ सभार्योऽथ समागर्भादात्तपुण्योऽगमन्मुदा । स्वस्थानं व्यवसायीवार्जितवित्तोऽन्यदेशतः ॥७॥ युग्मम् ॥ तत्र
निर्मितनिःशेषकृत्यः सत्कृत्य धार्मिकान् । आनन्दप्रमुखांश्चक्रे स प्रस्तावे प्रयाणकम् ॥८॥ मङ्गल्यान्यतुल्यानि प्रती-

च्छन्मतिपत्तनम् । अखण्डगमनैश्चण्डदोर्दण्डः स्वपुरीमगात् ॥ ९ ॥ तत्र चित्राट्टशोभायां क्षोभाकुलितयोषिति । श्रीकान्तायां सकान्तोऽसौ प्रविवेश महोत्सवैः ॥१०॥ शृङ्गारसुन्दरीं नार्यो नराधिपसुतं नराः । तौ धन्यौ मेनिरे पाणिपीडनक्रीडया मिथः ॥११॥ चन्द्रिकामिव चन्द्रस्य पश्यन्पुत्रस्य तां प्रियाम् । समुद्र इव भूमीन्द्रः परमुल्लासमासदत् ॥१२॥ अनङ्गमङ्गलोत्फुल्लमालया सह बालया । केन केन विलासेन विललास रसी न सः ॥१३॥ स्मरस्य मरतेः सख्युर्भ्रमेणेव प्रियान्वितम् । तदा कुमारमाराध्धुमुत्तीर्णः क्ष्मां मधुर्मुदा ॥ १४ ॥ पीतपुष्पमधुर्गायन्भृङ्गारावैरितस्ततः । चचार शनकैर्मत्तकलया मलयानिलः ॥१५॥ गृहीतवसुसर्वस्वः शिशिरेण विरोधिना । श्रीदस्य दिशमासाद्य सश्रीकस्तपनोऽजनि ॥१६॥ ग्रहीतुमिव पुष्पाणि द्रुमेषु किसलच्छलात् । काममंगुलयः कामप्रवीरेण प्रपञ्चिनाः ॥१७॥ वनीरङ्गावनीरङ्गा कुहकण्ठीकुहूरवाः । कन्दर्पकेलिनाट्यस्य नान्दीनादा इवाभवन् ॥१८॥ गायति स्मृतिभूकीर्ति भृङ्गशृङ्गारिणीगणे । रतिर्ननर्त सिञ्जानमञ्जीरहंसकूजितैः ॥१९॥ दहन्विरहिणीर्विश्वव्यापी पुष्पकलापतः । परागः पुष्पचापस्य प्रताप इव निर्ययौ ॥२०॥ जगज्जययशांसीव कुसुमानि मनोभुवः । जितानां मुग्धोजालैरिवालिख्यन्त षट्पदैः ॥२१॥ पुष्पजातैर्जगत्प्राणान्सुरभिः सुरभीन्सृजन् । कस्यैकस्यैष नानन्दसंदर्भाय व्यजायत ॥२२॥ तदा द्रष्टुं वसन्तेन वासन्तींशसुतायुतः । स विनोदवनीमापदवनीपतिनन्दनः ॥२३॥ सुजलस्थलदेवीमिर्मुहुः सस्पृहमीक्षितः । अयं सफलयामास विलासान्प्रियया सह ॥२४॥ असावितस्ततः खेलन्वसन्तेन

1. कामदेवकीर्तिम्

विलोकितः । कलिताङ्ग इवानङ्गः सुहृत्कुसुमहासिना ॥२५॥ लीलाद्रिरत्नशृङ्गेषु लीलावापिजलेषु च । कष्टं कुमारः सस्मार तां मायामात्मविम्बनात् ॥२६॥ विलासस्य परां भूमिमथ गन्तुमिवोत्सुकः । कुमारोऽयं समारोहद्दोलां कामविमानवत् ॥२७॥ शृंगारसुन्दरीहस्तलोलया दोलया तया । सुकृती यां मुदं प्राप नेति तन्मन एव ताम् ॥२८॥ हारस्रजः कुमारस्य दोलाकेलिधुताश्च्युताः । तत्पादप्रहतस्योडुनिवहा नु विहायसः ॥२९॥ अहो प्रेम्णैकचित्तत्वं बाला दोलामियेष च । अमुं रमयितुं तत्र कुमारः प्रोत्ततार च ॥३०॥ इमां दोर्भ्यामुदस्यैष पुलकी पुलकाञ्चिताम् । स्वमिवानन्दचूलायां दोलायामध्यरोपयत् ॥३१॥ कुमारो दोलया बालां दिवि दूरं व्यलासयत् । यन्त्रेणेव स्मरः शक्तिमन्तःक्षोमां[1] मरुज्जये ॥३२॥ दोलागतागतैस्तस्याः कान्तिरेखाकारं वपुः हेमेव कषपाषाणनिभे नभसि दिद्युते ॥३३॥ यां मुहुर्दोलया गत्वा हृत्वा गर्वं शुचोपिताम् । उत्तरन्ती कुमारेण कुतुकेन व्यलोकि सा ॥३४॥ दोलाहेलाभरत्रुट्यत्तन्मुक्तावलिविस्तृतौ । दृष्टं सनत्कुमारेण दिवा तारकितं नभः ॥३५॥ तादृग्विलाससंरम्भजृम्भमाणस्मरोदयः । आलिंगितुं प्रियांगानि रंगाद्गाढमनोरथः ॥३६॥ दिवो दोलावतारस्य निमेषार्धमपि क्षणम् । उत्सुको गणयन्नब्दशतादप्यधिकं तदा ॥ ३७ ॥ दोलामस्थिरयन्यावत्तावन्नास्त्येव तत्र सा । वदन् हा हेति हृत्वा हृत्कुमारेन्दुर्मुमूर्छ सः ॥३८॥ त्रिभिर्विशेषकम् ॥ किं किमेतदिति व्यग्रगिरा परिजनेन सः । प्रसूनरससेकेन मूर्छन्मूर्छः कृतस्ततः ॥३९॥ हा प्रिये क गतासीति गद्गदां गिरमुद्गिरन् । आस्फाल्य भुवि मूर्धानमगच्छन्मूर्छनं पुनः ॥४०॥

[1] मध्ये कृशाम्.

समाश्वसिहि वीरेन्द्र समाश्वसिहि धीनिधे। इत्युक्त्वयोऽस्य सचिवाः शीतकर्म व्यधुः पुनः ॥४१॥ मूर्छामयं तमो हित्वा श्रितः शोकमयं तमः। कुमारो विललापाथ तरूनपि विलापयन् ॥४२॥ अथागत्य पुरो लीनान्दीनान्साश्रुदृशो भृशम्। लीलाखगमृगानूचे गिरा रोदनदीर्घया ॥४३॥ रे हंस कंसजित्कान्ताकमलेऽपि कथं तव। तत्कराग्रवियुक्तस्य वराक भविता रतिः ॥ ४४ ॥ सार्तव्येष्वधुना स्नाततत्केशस्यन्दबिन्दुषु कथं दिनोऽम्बुदादम्बु रे बप्पीह समीहसे ॥४५॥ क नृत्ये तादृशीः केकिन् शृणोषि करतालिकाः। यत्केकिंस्थमातापि जाता शूलभूताधिता ॥४६॥ भजन्वायुतुरंगत्वं सारंग त्वं हि सर्वगः। लालयिष्यति सा धन्यं त्वां कुत्रापि वयं हताः ॥४७॥ [रे कोकिल कलध्वानं किं तनोषि न गर्वितः। दूरीभूतोऽद्य यत्तस्याः सर्वगर्वहरः स्वरः ॥] इत्यार्तं विलपन्तं तं धीराणां योगिनामपि। पश्यतां धैर्यमुत्सार्य पूत्कारा निर्ययुर्मुखात् ॥४८॥ अथ प्रियावियोगार्तिं स दहां सोढुमक्षमः। प्रेङ्खन्त्या मेङ्घयात्मानं क्षिप्त्वा खे मृत्युमैहत ॥४९॥ इहान्तरे परिज्ञाततत्प्रवृत्तिः परस्वरः। कुमारमाश्वासयितुं वनमाप क्ष्मापतिः ॥५०॥ पितुः प्रणामव्याजेन लज्जया नमयञ्शिरः। कुमारः संववार स्वमथ गूढहृद्व्यथः ॥५१॥ क्रोडे कुमारमारोप्य परिष्वज्यन्मुहुर्मुहुः। ययौ नरविमानेन नरेन्दुर्मन्दिरं ततः ॥५२॥ भिभिम्मे शूरतामस्य प्रिया यन्मेऽपतो हता। यत्नं ह्रियेव निस्तेजा ययौ द्वीपान्तरं रविः ॥५३॥ ततः संध्यारुणं रेजे लोहगोलनिभं नभः कुमारविरह-ज्वालामालाभिरिव तापितम् ॥५४॥ उद्भ्रान्त इव शोकाब्धिः कुमारस्य हृदस्तदा। तमःस्तोमनिभाद्यो-

१ कठिरणस्य कार्तिकस्य माता पार्वती.

मकुक्षिम्भरिरलक्ष्यत ॥५५॥ कुमारस्फारनिःश्वासज्वालावलिवशादभूत् । ताराकुलच्छलाद्व्योम्नः स्फुटं पिटकपेटकम्
॥ ५६ ॥ मनस्तस्य रतेर्गेहं दहतो विरहानलात् । स्फुलिङ्गा इव निष्पेतुः प्रदीपाः प्रतिमन्दिरम् ॥५७॥ दूरात्ता-
रापथे तारापतिः पतितवानथ । क्षिप्तः कुमारे मारेण यन्त्रोपल इवोज्ज्वलः ॥ ५८ ॥ यथा यथा रुचिश्चान्द्री
सान्द्रीभूता भुवस्तले । तथा तथाभवत्तस्य म्लानमाननपङ्कजम् ॥५९॥ सुधारश्मेः सुधाधाराकारा अपि करोत्कराः ।
कुमारस्यादहन्देहं प्रियास्नेहगृहं मुहुः ॥ ६० ॥ अथारतिकरं दूरे परित्यज्य परिच्छदम् । भीनः शीतरुचेः काम
चित्रधाम जगाम सः ॥६१॥ स दुःखी यावदेकान्ते कान्ताचिन्तामयोऽभवत् । तावत्पुरः सुरस्त्रीव काप्यभूद्रूपथे
सुदृक् ॥६२॥ साक्षात्कटाक्षविक्षेपदक्षां प्रेक्षाम्बुधिः स ताम् । आह तत्साहसाक्षिप्तमना मानपराङ्मुखीम् ॥६३॥
कासि कल्याणि केन त्वं कार्येणेहागता कुतः । इति पृष्टामुना हृष्टा स्पष्टमाचष्ट सा रसात् ॥६४॥ शृणु सौभाग्य-
भाग्यैकसिन्धो नेत्रविधूदय । रथनूपुरचक्राख्यं वैताढ्येऽस्तिगिरौ पुरम् ॥६५॥ तत्रास्ति धैर्यनिःसीमो भीमो भीमो-
हिताहितः । विश्वविद्यानिधिर्विद्याधरचक्री बलोध्धुरः ॥६६॥ तत्पट्टमहिषी भानुमतीसंज्ञा कृतीश्वर । त्वद्गुणा-
यत्तचित्ताहमिहायाता विहायसा ॥ ६७ ॥ एकदा विशदानन्दः स विमानी सम मया । खेलन्खे तत्र वासन्ती-
पुर्यां धुर्यो नृणां ययौ ॥६८॥ अन्तरिक्षे स्थितोऽद्राक्षीदेष शृङ्गारसुन्दरीम् । अलंकर्तुमभवत्कण्ठं सोत्कण्ठां वरमालया
॥६९॥ चिद्रूपः स भवद्रूपमार्या निर्माय कौतुकात् । त्वद्धयासनमासीनस्तस्थावास्थानमोहकृत् ॥७०॥ स्वकण्ठन्य-
स्तमालायां बालायां स विलक्षधीः । अलब्धपिण्डः काकोल इवोत्पत्य वियत्यगात् ॥७१॥ मया सह महर्षोऽप-

मग्र खेलन्निहागतः । ददर्श दर्शनीयाङ्गीं दोलालोलां तव प्रियाम् ॥७२॥ किमेतदिति संमोहप्ररोहद्रोहितस्वरा । हता धृतानुरागेण ततस्तेनाङ्गना तव ॥७३॥ तत्र तद्व्यसनव्यग्रे तव रागग्रहादहम् । त्वत्सेवावसरं यावदद्दश्यैव दिवि स्थिता ॥७४॥ स्वानुरागः स्वतन्त्रेण सुदूरं तेन पूरितः । पुनर्मे परतन्त्रायास्त्वमीशो रागजागरे ॥७५॥ तन्नाथ मान्मथैर्बाणैर्मथ्यमानहृदो मम । कारुण्यहरिणारण्य शरण्य शरणीभव ॥७६॥ त्वदसंगानलज्वालावलीढाया इदं मम । चित्तेश चारुतारुण्य शरण्य शरणीभव ॥७७॥ अतुच्छवाञ्छापाथोधिमध्यमग्नस्य मे हृदः । कन्दर्पकेलिनैपुण्य शरण्य शरणीभव ॥७८॥ ममान्यासक्तचित्तेन पत्या संतप्तचेतसः । अगण्यपुण्यलावण्य शरण्य शरणीभव ॥७९॥ इत्याकर्ण्य सुवर्णश्रीः सकर्णामृतवर्णिकाम् । तत्त्वज्ञः सत्त्ववानूचे वाचं वाचंयमोचिताम् ॥८०॥ मुग्धे धर्मस्य सर्वस्वं न वेत्सीति वदस्यदः । तत्त्वज्ञैरिन्दुलीलस्य रक्षा शीलस्य शस्यते ॥८१॥ परस्त्रीसंगनामानमुल्लसत्पङ्कसंकुलम् । तत्कथं सुपथा पान्थैस्त्यक्तं पन्थानमाश्रये ॥८२॥ वाञ्छन्ति परम्भोरूपरिरम्भेण ये मुदम् । उदारैः खदिराङ्गारैः शृङ्गारं स्पृहयन्ति ते ॥८३॥ यदि सत्येन चित्तेऽहं तव प्रिय इति स्थितः । तत्किमर्थयसे दुःखसंमुखाय सुखाय माम् ॥८४॥ अहो परनासक्तिर्व्यक्तं गुप्ता तत्रापि न । कुलीनापि विलीनासि किमस्मिन्कश्मले मले ॥८५॥ तदिदं धर्महृत्कर्म विद्याधरि परित्यज । भज शीलं यतः कीर्तिरत्रामुत्र च निर्वृतिः ॥८६॥ सद्धर्ममूलं या शीलं सेवते देवतेव सा । महनीया महेच्छानामप्यत्रापि भवे भवेत् ॥८७॥ मोक्षणं भर्तृभयाद्यत्र नामुत्र वृजिनव्रजात् । तत्वं वद इदस्तत्त्वं किं वरं परपूरुषे ॥८८॥ एवं वचःसुधासारैः

कुमारेन्दोरुदित्वरैः । तस्यां मनसि विध्यातो वह्निर्मारविकारजः ॥८९॥ चिन्तयामास साप्येवमहो मे भाग्यसंचयः ।
पापारम्भोऽप्ययं पुण्यव्रजाय यदजायत ॥९०॥ अयं धर्मगुरुर्मेऽभूत्तदस्मै गुरुदक्षिणाम् । दास्ये विद्यावलीं विद्याधरै-
श्वर्यपदप्रदाम् ॥९१॥ स्वभावबलिना विद्याबलोग्रेणाधुनामुना । प्रियाहृतिविरोधेन सक्रोधेन धुतो युधि ॥ ९२ ॥
सर्वथा वितथारम्भो मत्पतिर्निरहंकृतिः । यदि श्रयति सन्मार्गमहो सोऽपि महो मम ॥ ९३ ॥ युग्मम् ॥ इति
निश्चित्य चित्ते साभ्यर्थ्य सप्रश्रयोक्तिभिः । कुमारायानवद्याय ददौ विद्यां यथाविधि ॥९४॥ मा तस्माद्धर्ममासाद्य
सद्योविद्यास्ततश्च सः । अहम्पूर्विकयान्योन्यं गुरुत्वान्नेमतुर्मुदा ॥९५॥ अथापृच्छ्य कुमारं सा रंहसा स्वपुरीमगात् ।
दधौ च तद्वचः स्मृत्वा वपुः सपुलकं मुहुः ॥ ९६ ॥ सिद्धां विद्येश्वरीं प्राज्ञः प्रज्ञप्तिं स्मरणागताम् । स पप्रच्छ
प्रियालापैः प्रियावृत्तान्तमुन्मनाः ॥९७॥ कुमारकर्णपीयूषसारणीसारया गिरा । अवोचदुचितं वाच्यमथ विद्याधि-
देवता ॥९८॥ नीत्वा निजपुरारामे भीमेन भवतः प्रिया । इत्यूचे खेचरेन्द्रेण पटुभिश्चटुभाषितैः ॥९९॥ मुग्धे मुदा
सुधारश्मिसमानं कथमाननम् । कलङ्कयित्वा कुरुषे दृग्जलैः सज्जकज्जलैः ॥१३००॥ मयि दासेऽप्यविश्वासान्निश्वा-
सानलकेलिभिः । किं बाले ज्वालयस्यङ्गं शिरीषसुमकोमलम् ॥ १ ॥ किमादेशकरं देवि मामिन्दीवरलोचने ।
नालोकयस्यमूल्लोकान्कुर्वतीन्दीवराकरान् ॥ २ ॥ नाविष्करोषि किं तोषाद्वदने सुदति स्मितम् । मदङ्गेऽनङ्गदाहात
सुधासेचनसन्निभम् ॥३॥ धात्रीशमात्रपुत्रस्य विरहेऽप्यातुरासि किम् । इदं विद्याधरैश्वर्यं भुजिष्येण मया भज
॥४॥ इत्यालापी तया पापी मौनेनैव न्यषेधि सः । वार्योऽवगुण्ठनेनैव सरजस्को हि मारुतः ॥ ५ ॥ विद्याछेद-

भयात्तस्याः सत्याः शापभयाच्च सः । शीललीलाविलोपाय बलात्कारं चकार न ॥ ६ ॥ श्रुत्वेति भीमरोषेण
प्रियाशीलमदेन च । द्वौ संकीर्णौ रसौ भेजे स प्रगल्भो यथा नटः ॥ ७ ॥ अथायं विद्यया सद्यो विद्या-
धरगिरिं गतः । रथनूपुरचक्राख्यपुरोद्यानं समासदत् ॥ ८ ॥ तत्र चित्रगिरः श्रुत्वा निष्ठुराः करुणाश्च सः । पश्य-
न्नद्वयीभूयाग्रे भीमं भार्यां च दृष्टवान् ॥ ९ ॥ कालेऽस्मिन्करवालेन भीमो भीमोऽभ्यधादिमाम् । न मन्यसे
मां हन्यामि तदिष्टां देवतां स्मर ॥ १० ॥ अथाभाषत नाभाकतनया नयनाम्बिका । शरणं सिंहसूनुर्मे स्त्रियो
हि पतिदेवताः ॥ ११ ॥ सोऽहिनामग्रहादेव विशेषकुपितस्ततः । निस्त्रिंशः कृष्टनिस्त्रिंशस्तद्वधायोद्यतोऽस्फुरत् ॥१२॥
आः पाप कुत्र्ये किं रे म्रियसे म्रियसेऽधुना । इत्युच्चैरुच्चरन् राजसूनुराविरभूत्तदा ॥१३॥ आकस्मिकभयाक्रष्टः
खड्गो भीमस्य हस्ततः । परदाररिरंसूनामूना हि बलसंपदः ॥१४॥ कृपाणं पाणिना वीर गृहाण विगृहाण
माम् । एवमग्रस्मेव क्षत्रपुत्रो रिपुं जगौ ॥१५॥ ततः प्रतप्तलज्जेन रणासज्जेन चेतसा । अचिन्तयदयं विद्याधरना-
थसुतः स्थितः ॥१६॥ खुरलीमध्यमध्यास्य सकलोऽस्त्रकलोत्करः । आजन्म यो मयाभ्यस्तः प्रस्तावे अस्त एव सः
॥१७॥ अकृत्यं तावदेकं मे परस्त्री यदियं हृता । द्वितीयं तु तथाकारि भ्रष्टं युधि यदायुधम् ॥१८॥ तदहं निरहंकार
कथमाननमात्मनः । दर्शयिष्यामि वश्यासु निजं स्वान्तःपुरीष्वपि ॥१९॥ तदीदृशीं दशां नीतो येरहं हन्त कर्मभिः
तान्येव रिपुरूपाणि जेतुमुद्यममाश्रये ॥२०॥ इति ध्यात्वा कुमारं तं स्तम्भयित्वा प्रियायुतम् । पुण्ये विद्याधरारण्ये
व्रतं तापसमाप सः ॥२१॥ निशम्य भीमवृत्तान्त क्षणादारामरक्षकात् । भ्रान्त्वा भानुमती यावद्युद्यानं समासदत् ॥२२॥

पुरतः पुरतस्तावद्धावमानजनोत्थितः । तुमुलः समभूद्भीष्मो भीष्मेऽम्भोधिरिवाधिकः ॥ २३ ॥ युग्मम् ॥ इतः सनत्कुमारोऽपि प्रियालापशतैः प्रियाम् । शुद्धशीलां समाश्वास्य स्वपुराभिमुखोऽभवत् ॥२४॥ तं तथा प्रस्थितं प्रेक्ष्य भीता भीमप्रियाऽवदत् । विपक्षेभ्यः कृपादक्ष रक्ष रक्ष पुरीमिति ॥२५॥ इमं मद्भर्तृवृत्तान्तं जानन्तः खेचरेश्वराः । भीमारयो रयोत्तुङ्गाः पुरभङ्गार्थमागमन् ॥२६॥ इत्युक्तः स तया सद्यो दयाह्वयो दयाशयः । पुरीरक्षामुरीकृत्य चचले प्रबलायुधः ॥२७॥ म्रियध्वं मा म्रियध्वं मा रे रे पत्तनभञ्जकाः । तमित्युग्रगिरं चन्द्ररत्नचूडौ प्रणेमतुः ॥ २८ ॥ एतयोः पृच्छतोः प्रीत्या शेखरीकृतहस्तयोः । स्ववृत्तान्तं निवृत्तान्तस्तापः क्ष्मापजनिर्जगौ ॥२९॥ कुमारमथ तौ हर्षपथतूर्यत्विषा गिरा । तमूचतुश्चतुर्वर्गसंवर्गणगुणोदयम् ॥ ३० ॥ अन्वहं नन्वहंकारभृता खेचरचक्रिणा । वैरिणा कारणाभावादावामेतेन ताडितौ ॥ ३१ ॥ तदीदृशदशास्यास्य द्रङ्गभङ्गार्थमागतौ । ऋगस्येव न वैरस्य यतो जायेत जीर्णता ॥ ३२ ॥ त्वं चेत्पुनः पुरस्यास्य त्रायकः क्षत्रनायकः । तत्राता भव दासेरभावयोरावयोरपि ॥ ३३ ॥ इत्युक्त्वा तौ मुदाभोगभासुरौ भूतजन्मनः । तस्य खेचरचक्रित्वाभिषेकं तत्र चक्रतुः ॥ ३४ ॥ सनत्कुमारसाम्राज्यप्रेक्षाप्राज्यप्रमोदभाक् । पथिका पथि कान्तस्य जाता भानुमती ततः ॥ ३५ ॥ स्वल्पैरपि दिनैस्तस्य चक्रिणः खेचरेश्वराः । निग्रहानुग्रहारम्भैरवश्यं वश्यतां गता ॥ ३६ ॥ पितृपादवियोगार्तिः खेचरालीवृतोऽथ सः । समं शृङ्गारसुन्दर्या प्रतस्थे स्वपुरं प्रति ॥ ३७ ॥ पुर्याः पर्यन्तमायाति स यावत्तावदैक्षत । धूमस्तोमं ससंरम्भो नभस्यम्भोदविभ्रमम् ॥ ३८ ॥ किमेतदिति चिन्तार्तः सोऽवनौ नयनं नयन् । पुरीसरित्तटेऽपश्यदसंख्यं दुःखिनं जनम् ॥३९॥

तन्मध्ये ज्वालनज्वालामालाभिर्निचितां चिताम् । लोकत्रयाकुलस्वान्तो विमानादुत्ततार सः ॥४०॥ सोत्कर्षतुमुलैः मेव प्रेक्ष्यमाणः प्रजाकुलैः । चितोपान्तजुषो मातुः पादयोरातुरोऽनमत् ॥ ४१ ॥ इयन्तं समयं वत्स क्व स्थितोऽसीति वत्सला । सूनोः कण्ठे लगित्वासौ रुदत्परिजनारुदत् ॥ ४२ ॥ मातः श्रोतानपादेभ्यः क्षेम इत्यस्य पृच्छतः । ज्ञातपुत्रागतिस्तत्राययौ भूपः पुरः पुरात् ॥ ४३ ॥ पतन्तमेव पादाग्रे तमुत्सुकतमो नृपः । आलिलिङ्ग मुहुर्दोर्भ्यां मुहुर्मूर्ध्नि चुचुम्ब च ॥ ४४ ॥ कथं चितेति पुत्रस्य शङ्कातङ्कस्य पृच्छतः । जगाद जगतीजानिर्वत्स किं वेत्सि नागः ॥ ४५ ॥ तदा त्वयोज्झिता पुत्र चित्रशाला शुचेऽभवत् । विमुक्ता जीविनाथेन स्वजनस्य तनूरिव ॥४६॥ पुरं पुरन्दरावासमदृशं सुदृशां पदम् । यमवेश्मेव भूतानामास्पदं तदभूत्तदा ॥ ४७ ॥ अमन्दाक्रन्दसंदर्भे दूरं पौरजने तदा । शुचेव प्रतिशब्देन चक्रन्दे मन्दिरैरपि ॥४८॥ कृत्याकृत्यान्यजानन्तो वत्स त्वत्संगमं विना । हा जीवन्तोऽप्यजीवन्त इव जाता वयं तदा ॥ ४९ ॥ रम्यरामारमारामधामकामकलादयः । अकृतार्थाः पदार्थास्ते तदासन्विषसोदराः ॥५०॥ त्वद्वियोगाग्निकीलार्ता धर्तुं जीवितमक्षमा । अजनिष्ट परित्यक्तभोजना जननी तव ॥५१॥ कुलालंकारभूतस्य तवादर्शनदुःखिना । कुलाधिदेवताग्रेण सेव्यमानाग्रतः स्थिता ॥ ५२ ॥ तस्याः साष्टमस्यान्ते नितान्तं भक्तिनिर्भरा । आदिश्यत स्वयं स्वप्ने कुलदेवतया तया ॥ ५३ ॥ लब्धविद्यावरैश्वर्यः शीलवर्यः प्रियायुतः । स ते मति सुतः मरयं मासस्यान्ते मिलिष्यति ॥ ५४ ॥ तस्मादृशसुतासङ्गसमुत्सुकतमानिमान् । प्राणान्धारयितुं वत्से विपत्से किं न भोजनम् ॥५५॥ इयं स्वममिति प्रातर्निवेदितवती मया । कथंचिदुपरोधेन प्रतिबोधेन भोजिता ॥५६॥

मासस्यान्तदिनं प्रातर्या प्राप्य महाग्रहा । मयात्यर्थं निषिद्धापि मर्तुमेषा चितां व्यधात् ॥ ५७ ॥ गाः सत्यापयितुं देव्याः स्वर्गा पूरयितुं मम । अस्याश्च रक्षितुं प्राणाञ्चातस्तात तवागमः ॥ ५८ ॥ अधुना विधुना तुल्यं वदनं सदनं श्रियः । पौरचक्षुश्चकोराणां स्वं दर्शय महाशय ॥ ५९ ॥ अथ पुलाकृतोत्सङ्गः पद्ममातङ्गसंगतः । पट्टदेव्या समुपया वशावाहनयान्वितः ॥ ६० ॥ चारुपार्श्वद्वयश्चन्द्ररत्नचूडादिखेचरैः । अमन्दैर्वन्दिनां वृन्दैर्वर्ण्यपुण्यमहोदयः ॥ ६१ ॥ प्राविशत्परमानन्दसुधापूरपरिप्लुतम् । भूजानिः स्वजनैः साकमुत्पताकमसौ पुरम् ॥ ६२ ॥ त्रिभिर्विशेषकम् ॥ अस्मिन्नेव क्षणे क्ष्मापः क्षणादायिनि दक्षिणः । अभिषिच्याङ्गजं राज्ये सभार्योऽगात्तपोवनम् ॥ ६३ ॥ अवाप्य पैत्रिकं राज्यं मुदितो मित्रगौरवम् । विद्याधरपुरश्रेणिद्वयं खेचरयोर्ददौ ॥ ६४ ॥ ततो विद्यावशेनाय वशीकृतमहीतलः । यशोभिः शोभयामास भासुरैर्भुवनत्रयम् ॥ ६५ ॥ सलीलशीलमाधुर्ये धर्मधुर्येऽत्र भूभुजि । जज्ञे धर्ममयं शश्वद्विश्व निश्वम्भरातलम् ॥ ६६ ॥ शृङ्गारसुन्दरीजानिं शीलाद्उन्मीलितोदयम् । भूचरैः खेचरैः सेव्यं पश्यन्कोऽभून्न शीलभाक् ॥ ६७ ॥ इत्थं पृथ्वीश्रियं भुक्त्वा जन्मान्तेऽनशनोत्तमः । सभार्यः स ययौ राजा विमानेऽनुत्तरेऽजिते ॥ ६८ ॥ शीलमूले गुणस्तम्बे राज्यपत्रे यशःसुमे । धर्मकल्पद्रुमे सैष लब्धा शिवफलं क्रमात् ॥ ६९ ॥ सनत्कुमारशृङ्गारसुन्दरीचरितश्रुतेः । नव्याद्भुतश्रिये भव्याः सेव्यतां शीलमुज्ज्वलम् ॥ ७० ॥

॥ इति शीलधर्मे सनत्कुमारशृङ्गारसुन्दरीकथा ॥

सत्कर्माभ्युदये हेतुं शीलं सेव्यमिदं सताम् । दुःकर्मदारि सत्कर्मकारि सेव्यतमं तपः ॥ ७१ ॥ अनादिसिद्धदुः-
कर्मद्रुपिमंघातघातकम् । इदमाद्रियते धीरैः खड्गधारोपमं तपः ॥ ७२ ॥ ज्ञानचक्षुपि नैर्मल्यं तत्त्वातत्त्वावलोकनम् ।
तपस्तपनचद्दत्ते तमःशमनतः सताम् ॥ ७३ ॥ कर्मधांसि दहन्नुष्टस्तपोवह्निरयं नवः । हरते देहिनां दाहं यः संसारस-
मुद्भवम् ॥ ७४ ॥ तत्तपः सेव्यतां दक्षा दुःकर्मक्षालनोदकम् । यत्सेवया स्यादेव सेव्योऽनुदभुवि संवरः ॥ ७५ ॥
तथाहि हृदयग्राहिगुणमागरनागरा । जम्बूद्वीपेऽस्त्ययोध्या पूर्भरतक्षेत्रभूषणम् ॥ ७६ ॥ इहाजनि महीजानिर्म-
हासेन इति श्रुतः । चिन्तामणिषु यद्दानश्रियो बिम्बमिवैक्ष्यत ॥ ७७ ॥ अभूद्भूपस्य मान्योऽस्य सार्थेशो धनदाभिधः ।
मूर्ता नृपा इव नृपा रेजुर्यस्य धनार्जने ॥ ७८ ॥ धनश्रीरिति तस्यासीत्प्रेयसी श्रेयसी गुणैः । यभौ प्रवचनस्येव या
तीर्थं रूपशीलयोः ॥ ७९ ॥ दुर्गतेर्निर्गतः कोऽपि जीवः पीवरदुःकृतः । कैश्चिद्भाग्यैरभाग्यानां तस्या गर्भमवातरत्
॥८०॥ शये पांशुजुपि क्ष्मायां मुण्डिता खण्डितांशुका । इत्यस्या गर्भनिर्भाग्यैर्दुःखदो दोहदोऽजनि ॥ ८१ ॥ नाविष्क-
रिष्ये निःशेषदोहदं दोहदं क्वचित् । अपत्यमेनमुत्पन्नमेव त्यक्ष्यामि च क्षणात् ॥८२॥ इति ध्यानवती यावद्दिनानि
गमयत्यसौ । तावद्विधिनियोगेन धनदो निधनं ययौ ॥ ८३ ॥ युग्मम् ॥ धनं यदस्य हस्तेऽभूत्तेन जगृहेऽखिलम् ।
दोहदोऽस्याः स्वभावेन पूर्णस्तूर्णतरस्ततः ॥ ८४ ॥ पूर्णैर्दिवसैस्तस्या जातः पातकवान् सुतः । पिङ्गाक्षिकेशः कृष्णाङ्गः
कुब्जो न्युब्जः खरस्वरः ॥८५॥ सदुःखा सूतिरोगार्ता मुक्ता परिजनेन सा । ईदृग्गात्रे सुते जातमात्रे तत्र मृता ततः
॥ ८६ ॥ तस्या दत्तः शिम्बी तुल्यजातिभिः प्रातिवेश्मकैः । पयांसि कृपया सोऽपि पायितः प्राणितश्च तैः ॥ ८७ ॥

उत्पन्नेनामुना सर्वं श्रीकुटुम्बादि संवृतम् । ततः संवर इत्यस्य जनैर्नाम विनिर्ममे ॥ ८८ ॥ अज्ञानजनदुर्वाक्यताडनै-र्वैधुर्येऽधिकम् । ग्रीष्मवातरजःपातैर्यवासक इवासको ॥ ८९ ॥ वैरूप्यमेव तस्याभूत्पत्तने वर्तनं शिशोः । विरानां विट-विवैव जीवनं जायते यतः ॥ ९० ॥ तारुण्येनापि वैरूप्यं हर्तं नास्य मनागपि । छेत्तुं वैकटिको यस्माकुर्नोजयितुमक्षमः ॥ ९१ ॥ उलूक इव काकोलैर्लोलैः कोलाहलोल्बणैः । पुरि भ्राम्यन्नसौ डिम्भैः संभूय स्माभिभूयते ॥ ९२ ॥ दुर्बलानां बलं राजकुलमित्येष चिन्तयन् । तत्र चेयापि तद्राजपुत्रकैः पीड्यतेऽभितः ॥ ९३ ॥ खेदात्यक्तपुरोऽनाडि पथिकैः पथिकैर्न सः । ग्राम्यैर्ग्रामे विशँल्लेष्टुयष्टिमुष्टिभिरप्यथ ॥ ९४ ॥ इत्यसौ सर्वतः सर्वैरप्यत्यर्थं कदर्थितः । निश्चितं चिन्तयामास निश्वासोच्छ्वसिताननः ॥९५॥ धन्या वन्या मृगास्तेऽपि पक्षिणस्तेऽपि दक्षिणाः । विशन्त्यपि न ये कर्म-दानवे मानवे जने ॥९६॥ अहमप्यहते स्थाने मानवैर्यामि सर्वथा । इति ध्यायन्नयं क्वापि कान्तारे सत्वरं ययौ ॥९७॥ स्वरूजातिविरोधेन जातबोधेन साश्रुणा । मृगवर्गेण संवर्ग्यमाणपर्यन्तभूतलः ॥ ९८ ॥ अमुना शमिनां मध्ये सिद्ध-सेनो मुनीश्वरः । स्वाध्यायध्वनिमाधुर्यवश्यविश्वो व्यलोक्यत ॥ ९९ ॥ युग्मम् ॥ आगच्छागच्छ वत्सत्वमिति तं यतिनां पतिः । वर्णैः कर्णकपीयूषगण्डूषैः स्वयमाह्वयत् ॥ १४०० ॥ अहो उक्तिरपूर्वास्य ध्यात्वेति पदयोर्यतेः । स निपत्य पराभूतः सुतः पितुरिवारुदत् ॥ १ ॥ संभाष्य मुनिना पृष्टः संनिकृष्टफलोदयः । अथाचष्ट निजं कष्टचरितं परितोऽपि सः ॥ २ ॥ अथादिशदसौ साधुस्तमुद्दिश्य दयाशयः प्रीणयन्सर्वसत्त्वानि तथ्यैककवचं वचः ॥ ३ ॥ कियन्मात्रमिदं दुःखमत्र तेऽस्ति नृजन्मनि । सहन्तेऽमि यथात्मानोऽनन्तं दुःखं तथा शृणु ॥ ४ ॥ कषायविषयासक्तः

सक्तः प्रा विषादिषु । तदर्जयति दुःकर्म येन जन्तुर्भवान्तरे ॥ ५ ॥ भेदनच्छेदनोत्तप्तत्रपुपानासिपत्रजैः । क्षेत्रजैश्च महादुःखैः पीड्यते नरकेष्वसौ ॥ ६ ॥ युग्मम् ॥ लब्धतिर्यग्भवोऽप्येष जलस्थलनभोगतिः । व्यथ्यतेऽत्यर्थमात्मायमाणशीतानिलानलैः ॥ ७ ॥ मर्त्यत्वेऽपि महारोगनैःस्व्यदास्यवियोगजैः । दुःखैर्दन्द्यते जन्तुर्नारकप्रतिहस्तकैः ॥८॥ किल्बिषकिंकराल्पर्धिभावात्कुद्वेन्द्रयन्त्रतः । युध्येर्ष्याच्यवनाज्जीवो देवत्वेऽपि न सौख्यभाक् ॥ ९ ॥ एवं कर्मविपाकोऽस्मिन्भवे जीवान्कदर्थयेत् । लक्ष्यन्तेऽस्य फलान्येव न स्वरूपं जनैर्घनः ॥ १० ॥ माहात्म्यं ध्यानयोगानां सामर्थ्यं परमात्मनाम् । विपाकं कर्मणां वेत्ति न सर्वज्ञं विनापरः ॥ ११ ॥ अमुं कर्मविपाकं तु शुभीकर्तुमिहोद्यतः । एक एवास्ति सद्धर्मः शिवशर्मनिबन्धनम् ॥ १२ ॥ विनामुना तु धर्मेण जन्तुः कर्मारिवैरिभिः । पात्यते तेषु दुःखेषु येषां स्वदुःखमञ्चलः ॥ १३ ॥ परं नैवाचरन्त्येते मूढास्तत्किंचन क्वचित् । येन क्षिपन्ति दुःकर्मबीजं तद्दुःखभूरुहाम् ॥ १४ ॥ अथ प्रभूतदुःकर्माभिभूतः संवरो गुरून् । करौ किरीटगौ नीत्वा पप्रच्छातुच्छवाञ्छनः ॥ १५ ॥ प्रभो प्रभवति प्रायः कोऽप्युपायः स किं क्वचित् । येन स्याद्दीपतामन्तो हन्त दुःकर्मणामपि ॥ १६ ॥

अथाम्यधात्सुधापूरसोदरीं स गुरुर्गिरम् । तप एवास्ति दुःकर्मनिर्मथनिष्ठुरम् ॥ १७ ॥ धत्ते तदपि तीव्रत्वमत्र निःसङ्गताभृताम् । निःसङ्गता तु दीक्षाया दाक्षिण्येन यदि स्थिरा ॥ १८ ॥ चेतसो निश्चलत्वेन प्राप्यते सा महाशयैः । कर्मदावानलज्वालाविध्यापनघनाघनः ॥ १९ ॥ इति श्रुत्वाथ तत्त्वार्थं सत्वभाक्संनिधौ गुरोः । सोऽग्रहीद्दीक्षां संवरो शान्तितत्परः ॥२०॥ सिद्धान्ताध्ययनोद्रेकाद्विवेकाश्रितचेतनः । तपः कपटनिर्मुक्तमारेभे

संवरो मुनिः ॥ २१ ॥ असौ सद्धर्मचातुर्यस्तुर्यषष्ठाष्टमैर्व्यधात् । तपोभारैः शरासारैर्जर्जरं कर्मपञ्जरम् ॥ २२ ॥
पुरिमार्धमेकभक्तं नैर्विकृत्यं च कृत्यवित् । आचाम्लमुपवासं च सेवमानः प्रतीन्द्रियम् ॥ २३ ॥ दिवसैः पञ्चविंशत्या
जितेन्द्रियशिरोमणिः । स इन्द्रियजयं नाम तपश्चक्रे यथाविधि ॥ २४ ॥ युग्मम् ॥ एकभक्तं नैर्विकृत्यमाचाम्लं भक्त-
वर्जनम् । एवं षोडशभिर्घस्रैः स कषायजयं व्यधात् ॥ २५ ॥ निर्विकृतिकमाचाम्लमभक्तं विदधन्मुनिः । योगानां
शुद्धये योगशुद्धिं नवदिनैर्व्यधात् ॥ २६ ॥ अभक्तमेकाशनकमेकसिक्थकमप्यथ । एकस्थानमेकदत्ति विकृत्या रहितं
ततः ॥ २७ ॥ आचाम्लमष्टकवलमित्येकैकस्य कर्मणः । कृते तपो व्यधादष्टकर्मसूदनमेव च ॥ २८ ॥ युग्मम् ॥
ज्ञानस्य दर्शनस्यापि चारित्रस्य च सेवनम् । चक्रे निरन्तरं साधुरुपवासैस्त्रिभिस्त्रिभिः ॥ २९ ॥ शुक्लास्वेकादशी-
ष्वेकादशसंख्यासु सोऽकरोत् । मौनोपवासकरणैः श्रुतदेवीतपः शुभम् ॥३०॥ शुक्लपक्षेऽष्टभिरुपवासैराचाम्लपारणैः ।
दिनैः षोडशभिः सोऽधात्तपः सर्वाङ्गसुन्दरम् ॥ ३१ ॥ इत्येवं कृष्णपक्षे तु ग्लानपालनलालसः । सोऽकार्षीद्विषयद्वेषी
नीरुक्शिखाभिधं तपः ॥ ३२ ॥ मुनिर्द्वात्रिंशदाचाम्लैरेकान्तरितपारणैः । विदधे शुद्धबोधोऽयं तपः परमभूषणम्
॥ ३३ ॥ अङ्गान्येकादशाप्येष पूर्वाणि च चतुर्दश । द्विधा चान्द्रायणं न्यूनोदरतादितपो व्यधात् ॥ ३४ ॥ अथैका
प्रतिपद्द्वे च द्वितीये तिथयोऽखिलाः । यावत्पञ्चदश ज्ञेयाः पूर्णमास्यो निरन्तरम् ॥ ३५ ॥ उपवासैर्विशुद्धाः स्युर्यत्र
तपः उज्ज्वलम् । व्यातेने मुनिना सर्वं सौख्यसंपत्तिनामतः ॥ ३६ ॥ युग्मम् ॥ जिनानां नव पद्मानि प्रतिपद्यं निर-
न्तरैः । उपवासैस्तु सोऽष्टाभिश्चक्रे पद्मोत्तरं तपः ॥ ३७ ॥ पञ्चसप्तत्युपवासैः पञ्चत्रिंशतिपारणैः । भद्रनाम तपश्चक्रे

मयमेतरचेतसा ॥ ३८ ॥ पण्णवत्या शतेनोपवासैः सद्धर्मवासनः । स महाभद्रमेकोनपञ्चाशत्पारणैर्व्यधात् ॥ ३९ ॥
उपवासैरसौ पञ्चसप्तत्या च शतेन च । पारणैः पञ्चविंशत्याभजद्भद्रोत्तरं तपः ॥ ४० ॥ द्विनवत्यधिकेनोपवासानां
त्रिशतेन सः । सर्वतोभद्रमेकोनपञ्चाशत्पारणैर्व्यधात् ॥ ४१ ॥ षष्ठेनादौ ततः षष्ठ्या लुपवासैरनारतम् । एकान्तरे-
मुनिर्धर्मचक्रवालं तपोऽतनोत् ॥ ४२ ॥ आचाम्लैरुपवासान्तैरेकाद्येकैकवर्धितैः । शतसंख्यैः स आचाम्लवर्धमानं
व्यधात्तपः ॥ ४३ ॥ तच्चतुर्दश वर्षाणि त्रिमासीं दिनविंशतिम् । तपः तन्वन्नसौ चक्रे कृशमङ्गं च कर्म च ॥ ४४ ॥
एकदासौ नमस्कृत्य शुभकृत्प्रकाशकम् । द्वादशभिक्षुप्रतिमावहने पृष्टवान्गुरुम् ॥ ४५ ॥ दशपूर्वधरो धीरः सारसं-
हननः शमी । तदसौ योग्य एवास्य दुःकरस्यापि कर्मणः ॥ ४६ ॥ इति ध्यात्वा चिरं सिद्धसेनाचार्यस्तमादिशत् ।
वत्सागममुनिनोऽर्थस्ते तद्विधेहि समीहितम् ॥ ४७ ॥ तदा मुदा गुरून्नत्वानुज्ञाप्य च गणं क्षणात् । गच्छान्निष्क्रम्य
तेनाथ प्रारेभे प्रतिमादिमा ॥ ४८ ॥ एकैकां भोजने पाने दत्तिं गृह्णात्यसौ मुनिः । यावन्मासं ततः पूर्णे मासे गच्छे-
ऽविशत्पुनः ॥४९॥ एवं सदेकमासस्य वृद्धिमेकैकशोऽकरोत् । तावद्यावदियं सप्तमासैरजनि सप्तमी ॥५०॥ एकान्तरोप-
वासैश्च विहिताचाम्लपारणैः । पानाहारोज्झितैर्ग्रामाद्बहिरुत्तानशायिना ॥५१॥ निःप्रकम्पेन सर्वोपसर्गवर्गसहिष्णुना ।
अष्टमी प्रतिमा सप्ताहोरात्रैर्विदधेऽमुना ॥ ५२ ॥ युग्मम् ॥ इत्थं निष्ठागरिष्ठेन प्रतिमा सप्तभिर्दिनैः । उत्कटिका-
सनस्थेन तेन तेने नवम्यपि ॥ ५३ ॥ एवं सप्तदिनैरेव दशमी प्रतिमामुना । चक्रे वीरासनस्थेन सद्ध्यानस्थिरचेतसा
॥ ५४ ॥ कृत्वा षष्ठमहोरात्रं स्थित्वा वीरासने भुवे । प्रतिमैकादशी चक्रे तेन लम्बितपाणिना ॥ ५५ ॥ कृताष्टमः

स संकोच्य पादौ लम्बकरः स्थिरः । चक्रे मुक्तिशिलादृष्टिर्दशीमेकरात्रिकीम् ॥ ५६ ॥ इत्थं यथोक्तविधिना नन्य-
मानोऽद्भुतं तपः । विजहार महीपीठे सोऽनल्पैः कल्पकल्पनैः ॥ ५७ ॥
अथैकदा पदाम्भोजद्वय सूरेरयं मुनिः । प्रणम्य शिरसि न्यस्य पाणी वाणीमिमां जगौ ॥ ५८ ॥ अनन्तदेयम-
द्भुर्मबोधदायक नायक ।-जिन कल्पकृतेऽनुज्ञां यच्छ योग्योऽस्मि यद्यहम् ॥ ५९ ॥ श्रुतज्ञानाम्बुधिर्जानन्नाराधकममुं
गुरुः । आदिशज्जिनकल्पाय मुक्तिश्रीकल्पभूरुहे ॥ ६० ॥ अथैष नवतत्त्वज्ञः सत्त्वभाजां शिरोमणि. । लब्धत्रिज-
गतीराज्यमिवात्मानममन्यत ॥ ६१ ॥ अथ निर्मलचारित्रो वस्त्रपात्रादिकं मुदा । गुरोः पुरोऽखिलं मुक्त्वा परिपृच्छ्य
परिच्छदम् ॥६२॥ निःममारःमहासारः सैष सूरेः समीपतः । हन्तुं कर्मततीः कुम्भिपङ्क्तीरिव हरिर्गिरेः ॥६३॥युग्मम्॥
चरन्मार्गेऽपवर्गस्य वलाद्विपथतस्करे । तपोधनोऽयमस्तेऽर्के न पदात्पदमप्यदात् ॥ ६४ ॥ कृताद्रवैरः क्रूरेण सह
मोहमहीभुजा । तस्थौ नैकत्र कुत्रापि सोऽयमुग्रच्छवौ रवौ ॥ ६५ ॥ स जाग्रत्कर्मसंग्रामव्यग्रीभूतमना इव । उदध्रे
पदयोर्भग्नान्नोत्कटानपि कण्टकान् ॥ ६६ ॥ उदासीन इवास्थानकृतरागापराधयोः । चकर्ष चक्षुषोरेष न तृणं न
रजःकणम् ॥ ६७ ॥ आसन्नविलसन्मुक्तिवधूलीनमना इव । चरन्मार्गं न तत्याज तीव्रकर्करमप्यसौ ॥ ६८ ॥ स्वदेहेऽपि
निरीहोऽयमिति शुद्धमतिर्यतिः । पुरः स्फुरति सिंहेऽपि सहजां नात्यजद्गतिम् ॥ ६९ ॥ कदाचित्क्वचिदौचित्यचतु-
रैर्दौकितं नरैः । स धीरस्तुपसोवीरलकाख्यं त्वाज्यमग्रहीत् ॥ ७० ॥ एवमप्रतिबद्धेन स्वविहारक्रमेण सः । प्रतिकर्मवि-
मुक्ताङ्गो निन्ये धात्रीं पवित्रताम् ॥ ७१ ॥ एवं विहरतस्तस्य गते काले कियत्यपि । अभूल्लाभान्तरायस्योदयः कश्चन

कर्मगः ॥ ७२ ॥ क्वचिन्न लभते भिक्षामकल्प्यां क्वापि नेच्छति । कल्प्यमानामपि क्वापि नादत्तेऽन्यैरपेक्षिताम् ॥ ७३ ॥ इत्थं यथा यथा क्लिष्टो हृष्टः सोऽभूत्तथा तथा । क्षयो हि कर्मणां मङ्क्षु मुनीनामुत्सवो महान् ॥ ७४ ॥ असोढगतविहारस्य निराहारस्य सर्वथा । सत्तामात्रशरीरस्य षण्मासा व्यतिचक्रमुः ॥ ७५ ॥

कदापि क्वापि कान्तारे दिनान्ते शान्तचेतनः । तस्थौ धर्मद्विपालानस्तम्भायिततनुर्मुनिः ॥ ७६ ॥ संसारतापनिर्वापमन्त्रपीयूषमज्जनम् । अथ प्रापदयं कायोत्सर्गध्यानलयं मुनिः ॥ ७७ ॥ ततो नर्वपचीभूतभूतलक्षोदमण्डलः । तं कोऽप्यनापयशापो निशीथसमये महान् ॥ ७८ ॥ किमेतदित्ययं यावद्विभावयति फुल्लदृक् । ललाटंतपतेजस्कं तपनं तावदैक्षत ॥ ७९ ॥ पुरस्तुङ्गतरुस्तोमच्छायालीनामलोकत । भुञ्जानजनसंतानामसौ शाकटमण्डलीम् ॥ ८० ॥ विज्ञातुमुत्कृत दग्धमग्नं तन्मध्यगो नरः । तद्दैवात्युत्सुको निर्यन्नरेणान्येन भाषितः ॥ ८१ ॥ अस्मिन्महामुनौ मुक्तविकल्पे जिनकल्पिनि । कल्प्यमन्नमिदं देहि भिक्षाकालो हि संप्रति ॥ ८२ ॥ दुग्धेनान्नेन दत्तेन क्रीणासि सुकृतं न किम् । कृष्णाङ्गारेण किं लभ्यमानो नादीयते मणिः ॥ ८३ ॥ इत्यस्य वाक्यमाकर्ण्य प्रहृष्यन्पुलकाञ्चितः । इदं प्रभो गृहाणेति सोऽन्नहस्तोऽभ्यगान्मुनिम् ॥ ८४ ॥ अथ साधुः सुधीर्दध्यौ किमियं मे प्रमत्तता । न ज्ञाता यामिनी यान्ती न व्योमान्तर्व्रजन्रविः ॥ ८५ ॥ स्वप्नोऽयमिन्द्रजालं वा किं वा कोऽपि मतिभ्रमः । चक्रे देवेन केनापि माया मायाविनाथवा ॥ ८६ ॥ किमनल्पैर्विकल्पैर्वा ममैभिर्निर्ममात्मनः संदेहे सति देहार्थं न गृह्णेऽन्नमिदं ध्रुवम् ॥ ८७ ॥ इति निश्चित्य शुद्धात्मा स पटुः प्राह तौ प्रति । शमामृतसमुद्रोर्मिच्छटाभिर्वर्णराजिभिः ॥ ८८ ॥ मया ध्यानं निशान्ते

समारंभेऽधुनैव च। अधुनैव च तिग्मांशुश्चरत्यम्बरशेखरः ॥ ८९ ॥ तत्सत्योऽयमसत्यो वाऽभ्युदयः कर्मसाक्षिणः। इति संदेहदोलार्तमना नैवान्नमाददे ॥ ९० ॥ युग्मम् ॥ गिरेरधिकमाहारं पयोधेरधिकं पयः। जीवोऽग्रहीदहोरात्र-मज्ञातेषु भवेष्वपि ॥ ९१ ॥ तत्तैर्यदि न तृप्तोऽस्मि तदन्नेनामुनाद्य किम्। यास्यामि तृप्तिमात्तेन दिवसस्यापि संशये ॥ ९२ ॥ इत्युदीर्य तपोवीर्यवर्यो धैर्यधुरन्धरः। स यावल्लीयते ध्याने शुद्धश्रद्धानमानसः ॥ ९३ ॥ न तावदनसां राजी न च राजीवबान्धवः। किंतु व्यलोकि मुनिना यथावस्था निशीथिनी ॥ ९४ ॥ युग्मम् ॥ तदैव दैवते मार्गे दूरं दुन्दुभयोऽनदन्। शुद्धगन्धोदकैर्मिश्राः प्रसस्रुः पुष्पवृष्टयः ॥ ९५ ॥ लीलाचलज्झलत्कारतारमाणि-क्यकुण्डलः। आस्येन्दुस्यन्दिपीयूषबिन्दुसुन्दरहारभृत् ॥ ९६ ॥ मौलिन्यस्तकरद्वन्द्वद्विगुणीकृतशेखरः। एनमेन-श्छिदं कश्चिदमरो मुनिमानमत् ॥ ९७ ॥ युग्मम् ॥ प्रभो जय जय प्रौढज्ञानशुद्धतपोनिधे। यस्त्वं मयापि दुष्टेन सत्वं न त्याजितः क्वचित् ॥ ९८ ॥ सुधर्मायां सुधर्मात्मा निविष्टो हृष्टमानसः। कदाप्यकस्मात्पुलकी न्यधान्मूर्ध्नि हरिः करौ ॥९९॥ तव कौतस्कुतः स्वामिन्नत्र हर्षोऽयमीदृशः। इति पृष्टोऽम्बराख्येन सुरेण सुपर्निजगौ ॥१५००॥ किं कोऽप्यस्ति तपःपात्रं धरित्रीपीठपावनः। इत्यत्र भरतक्षेत्रे हृन्नेत्रेण गतं मया ॥ १ ॥ मुनीन्दुः संवरो नाम तत्र भूखण्डभूषणम्। अदर्शि तपसां राशिस्तिग्मांशुरिव तेजसाम् ॥ २ ॥ तस्य विश्वैकवन्द्यस्य दार्ढ्यं तपसि दुष्करे। पश्यतो मे मुदावेशः सर्वक्लेशहरोऽभवत् ॥ ३ ॥ केनापि चाल्यते नायं सत्त्वात्तत्त्वविदां वरः। इत्युत्क-र्षेण हर्षस्य मयास्य प्रणतिः कृता ॥ ४ ॥ सोऽथ क्रुधाभ्यधादिन्द्रमिन्द्रसामानिकः सुरः। मर्त्यो न चाल्यते सत्त्वा-

देवा भावा मृषा तव ॥ ५ ॥ स्वेच्छया स्वाम्यतः स्वामी वदन्केनेह वार्यते । तं षण्मासान्तरे सत्त्वभ्रष्टं स्पष्टं करो-
ष्यहम् ॥ ६ ॥ अमावितिति प्रतिज्ञाय सत्त्वभङ्गाय तेऽचलत् । मुहुर्मुहुर्महेन्द्रेण वार्यमाणोऽपि मूढधीः ॥ ७ ॥
स्वगुण्यनिवहस्यैव स भिक्षाग्रहणेषु ते । प्रत्यूहम्यूहमत्युग्रं धिक् षण्मासावधि न्यधात् ॥ ८ ॥ निशि पापेन तेनेह
तेने मामागमयो रविः । समोऽन्यजनसंघट्टा शकटानां यथा पुनः ॥ ९ ॥ महाकपटनाट्येन नानेनाप्यसि चालितः ।
यथा संसारनाट्येनाचालितः केन चाल्यते ॥ १० ॥ तन्मुने पापिना येन विरुद्धमिति ते कृतम् । स एवास्मि प्रभो
विश्वमपराधं क्षमस्व मे ॥ ११ ॥ इत्युक्त्वा दुःखहर्षाश्रुमिश्रदृष्टिरयं सुरः । बहुस्तुतिमहानादः पादयोरपत-
न्मुनेः ॥ १२ ॥ अथात्तधर्मलाभोक्तिर्यतिर्नतिपरं सुरम् । तमुवाच विचाराब्धिचञ्चच्चन्द्रिकया गिरा ॥ १३ ॥ नापराद्धं
त्वया किं तु कृतिन्नुपकृतिः कृता । तव साहाय्यमाहात्म्याद्दुःकर्म क्षितं मया ॥ १४ ॥ अपराधस्त्वया हन्त क्षन्तव्यः
किं तु मामकः । यत्तवैवं बभूवाहं दुःकर्मार्जनकारणम् ॥ १५ ॥ एवं निश्छिद्रमनोर्धर्मसंलापं तन्वतोस्तयोः । उदयाच-
लचूलायां चण्डरोचिररोचत ॥ १६ ॥ एवं मुनिं विनम्याथ विबुधोऽयं तिरोदधे । ईर्यासमितिसंचारचारुर्मुनिरथा-
चलत् ॥ १७ ॥ स्वापराधानुतापेन तं मुनीन्द्रमनिद्रधीः । असेवत धृतान्तर्धिः स्वधामा शुद्धभावनः ॥ १८ ॥ स
मुनिर्भुवि शुद्धायां यत्र यत्र ददौ पदम् । तां तां स चक्रे प्रागेव देवोऽकण्टककर्कराम् ॥ १९ ॥ अमायिनः समायान्तं
मुनिमुख्यस्य संमुखम् । हिंस्रं प्राणभृतां वारं स दूरेण न्यवारयत् ॥२०॥ घर्मे समीरणीभूय छत्रीभूयोष्णदीधितौ ।
शिशिरीभूय तसोर्व्यां सांनिध्यं स व्यधान्मुनेः ॥२१॥ एवं स विरहन्प्राप ग्रामं रामपुराभिधम् । यावत्तावद्दलंचके

नभोगर्भं नभोमणिः ॥ २२ ॥ कुटुम्बिनो धनाढ्यस्य धन्या नाम कुटुम्बिनी । त्वाज्येनान्नेन दुग्धेन तं मुनिं प्रत्यला-
भयत् ॥२३॥ अहो दानमहो दानमिति जल्पन्नसौ तदा । चकार सुमनोवृष्टीरम्बरादम्बरः सुरः ॥ २४ ॥ एवं पदे पदे
तन्यमानधर्मप्रभावनः । तपोऽत्रधारया कर्म प्रहरन्व्यहरन्मुनिः ॥ २५ ॥ अथायमायुषः शेषे विहितानशनः कृती ।
मधुना तेन देवेन सेव्यमानपदाम्बुजः ॥ २६ ॥ स्मृत्वा पञ्चनमस्कारान्पादपोपगमस्थितिः । शुद्धध्यानरसोल्लासमल-
यसंलीनमानसः ॥ २७ ॥ आसन्नमुक्तिसौख्यौघनिष्यन्दैरिव पूरितम् । सर्वार्थसिद्धनामानं विमानं मुनिराससद ॥२८॥
धिभिर्विशेषकम् ॥ तथ्यां तदित्थमाकर्ण्य संवरस्य मुनेः कथाम् । कर्ममर्मभिदेऽमुष्मै यतध्वं तपसे जनाः ॥२९॥

॥ तपश्चरणे संवरमुनीश्वरकथा ॥

प्रभावनाद्यलंकाराकृष्टविश्वचेतसः । दानशीलतपोऽङ्गस्य जीयो धर्मस्य भावना ॥३०॥ अज्ञानध्वान्तसंधाने ध्याने
सिद्धिपुराध्वनि । अन्वगम्यात्मनो भाति भावना रत्नदीपिका ॥३१॥ सदानशीलतपसां भवयुद्धाय धावताम् । अग्रेसरी
भवत्येका भावनैव महाभटी ॥ ३२ ॥ सतां दमक्षमामुख्यधर्ममुक्तावली हृदि । अन्तर्भावनया धत्ते कान्तिं नायकका-
न्तया ॥ ३३ ॥ दानशीलतपोभाजामप्याश्चर्यकरं फलम् । दत्ते चन्द्रोदरस्येव विधर्मस्यापि भावना ॥ ३४ ॥

तथाहि संपदूद्राद्रकरैः स्फीता धरैर्नरैः । चतुर्धर्मचतुर्वेदिरस्ति हस्तिपुरी पुरी ॥ ३५ ॥ तत्रामित्रकलत्राश्रुधारानन-
यशोलतः । श्रीरामो नाम सद्धर्मकृतार्थः पार्थिवोऽभवत् ॥ ३६॥ सतीशतशिरोरत्नं स्त्रीरत्नं तस्य वल्लभा । भाम्ना
कलितनाकश्रीर्जयाजनि जयावली ॥ ३७ ॥ जितस्वर्णा तनूवर्णा निन्दितेन्द्रपदं पदम् । मकन्दं मकरं मेने तयैव प्रियया ।

नृपः ॥ ३८ ॥ प्रियेण प्रीतिभिर्लाल्यमाना लोकेषु विश्रुतम् । देहार्धदाननिर्भोगं शिवयोः प्रेम साहसत् ॥ ३९ ॥ अद्वितीयेन तौ प्रेमगुणेन विनियन्त्रितौ । मिथो विघटितुं दूरे नैव शेकतुरेकनः ॥ ४० ॥ सा भुभुजि सभाभाजि भ्राजितानल्पपरिच्छदा । कदाचिन्नन्तुमुद्यानमदनं मदनं ययौ ॥ ४१ ॥ पूजया श्रीतनूजस्य धन्यंमन्या व्यलोकत । सा रामरमणी काममारामरमणीयताम् ॥ ४२ ॥ दर्शयन्ती वयस्याभ्यो वयस्याभिश्च दर्शितम् । सा हृद्यं हृद्यमासाद्य मुमुदे कुमुदेक्षणा ॥ ४३ ॥ पश्यन्ती प्रीतिमोहेन मुहुर्वलितया दृशा । हेलया खेलयन्ती स्वान्पृष्ठतः पार्श्वयोः शिशून् ॥ ४४ ॥ घरणीं चरणाग्रेण विलिख्योल्लासितैर्मुहुः । आनन्दकुङ्कुनादेन भोजयन्ती च तान्कणैः ॥ ४५ ॥ संचरन्ती वनेऽदर्शि कापि भूकान्तकान्तया । पुत्रिणीत्वात्तचूडेव ताम्रचूडस्य वर्णिनी ॥ ४६ ॥ त्रिभिर्विशेषकम् ॥ तां विलोक्य वने लीलाशालिनीं सुतमालिनीम् । अदृष्टनन्दनास्येन्दुर्दध्यौ सेन्दुमुखी शुचा ॥ ४७ ॥ धिग्जन्म जीवितं भोगान्सुप्रियप्रापणं च मे । न यच्चयनसत्पात्रैः फलमालोकये सुतम् ॥ ४८ ॥ किं धनैः सैव धन्या स्त्री डिम्भस्यात्मभुवो मुखम् । या चुम्बति चिरं धूलिधूम्रमङ्गणरङ्गणैः ॥ ४९ ॥ अपि रङ्कप्रियामङ्कशयानतनयां स्तुवे । हारभारभृदुत्सङ्गां न पुनर्भूभृदङ्गनाम् ॥ ५० ॥ उत्पतन्निपतन्निह्नुन्हसँल्लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः क्रोडमायाति नन्दनः ॥ ५१ ॥ स्फारभूषणभारापि न भाति स्त्री सुतं विना । उदारतरतारापि निशेव शशिवर्जिता ॥ ५२ ॥ तद्भ्रातस्तात किं भूरिभूषापाषाणवाहिकाम् । मां व्यधाः सुतरत्नेन नैकेनापि व्यभूषयः ॥ ५३ ॥ निर्यग्नार्योऽपि पर्यन्तलीलालोलसुता वरम् ।

१ चन्द्रस्य रात्रिपुत्रत्वकथनं चिन्त्यम्.

उत्सङ्गसंगतसुता वरं ग्रावस्त्रियोऽपि ताः ॥ ५४ ॥ धिगमोत्सङ्गमक्षीणि पाणी कण्ठं च यैर्मुदा । नाध्यासितो न दृष्टो नाश्लिष्टो नालम्बितः सुतः ॥ ५५ ॥ किं करोमि क गच्छामि निर्भाग्याहं हहा मम । सर्वेषामपि सौख्यानां स्थाने नैकोऽप्यभूत्सुतः ॥ ५६ ॥ इति दुःखौघसंघट्टस्फुटद्वक्षःस्थलेव सा । तले रसालसालस्य भुवि न्यविशतालसा ॥ ५७ ॥ शोपयन्तीव निःश्वासैर्वामो बाष्पपरिप्लुतम् । स्थगयन्तीव निःश्वासोद्धूतं बाष्पैर्महीरजः ॥ ५८ ॥ करयुग्मेन जानुस्थकूर्परेण धृतं शिरः । हृत्पद्मदुःखशल्येव घूर्णन्तीव व्यकम्पयत् ॥ ५९ ॥ युग्मम् ॥ दुःखं प्रष्टुमशक्ताभिर्वृद्धपालिभिरालिभिः । साश्रुदृग्भिः सनिःश्वासमुखीभिर्वीक्षितैव सा ॥ ६० ॥ तदा विसृज्य भूजानिर्विरहव्यथितः सभाम् । ययावन्तःपुरं कान्तापरिरम्भोत्सवोत्सुकः ॥ ६१ ॥ जयावलीमनालोक्य तत्र तस्थौ न पार्थिवः । निशावियुक्तो राकेन्दुः कियच्चिरयति दीव्यति ॥ ६२ ॥ एत्य लीलावनोत्सङ्गमुत्सुको निःपरिच्छदः । पुरः स्थितोऽपि भूपालो नालोकि कान्तया तया ॥ ६३ ॥ तादृग्रूपां निरूप्यालं भूपालोऽप्यश्लथव्यथः । उपसृत्य शनैरेनामूचे दुःखार्द्रया गिरा ॥ ६४ ॥ किं देवि हृदि ते दुःखमिति वाक्श्रवणादियम् । सुप्तोत्थितेव वीक्ष्याग्रे भूपं संभ्रममागभूत् ॥ ६५ ॥ आगते जीवितेशेऽपि नोचितं रचितं मया । इति दुःखेऽतिदुःख सा दग्धे पिटकवद्दधौ ॥ ६६ ॥ अथ चाटुचमत्कारचारूक्तिः पृथिवीपतिः । ऊचे तां जनचेतांसि कर्णातिथ्ये नयन्नरम् ॥ ६७ ॥ मदागमनसंरम्भमम्भोरुहमुखि त्यज । भज वाचं दिवाचन्द्रसख्यं त्वन्मुखमाप किम् ॥ ६८ ॥ नापराद्धं मया किंचित्कोऽन्यस्त्वय्यपराध्यति । जानामि चरचारेण कुशलं त्वत्पितुः कुले ॥ ६९ ॥ कौतस्कुतेन तद्रुग्ना विलासतरवस्तव । साञ्जनाश्रुमदौघेन माद्यता दुःखदन्तिना ॥ ७० ॥ इत्थं यथा

गयापृच्छत्पृथ्वीनाथस्तथा तथा । उद्वाष्पबिन्दुरेखाभूदियं नोवाच किंचन ॥ ७१ ॥ सा भूस्तदा तदालीभिः पश्चालीभिरिवाभितः । धारालैर्दृग्जलैर्दुःखकेलिधारागृहं कृता ।७२॥ मुञ्चद्वाष्पाणि पाणिभ्यां प्रमृज्य नयनद्वयम् । अत्याग्रही महीकान्तस्तामपृच्छन्मुहुर्मुहुः ॥ ७३ ॥ अथो कथंचिदालम्ब्य सा धैर्यमिदमभ्यधात् । हा निःपुत्राहमित्युक्तमात्रे तारं रुरोद सा ॥ ७४ ॥ इत्युक्तिश्रवणादेव नृदेवस्यापि चक्षुषी । पूरयामासतुः प्रावृण्मासाविव जलैरिलाम् ॥ ७५ ॥ निरादृय धरानाथो धैर्यं संधाय कष्टतः । दुःस्वमग्नां प्रियामाह गलितागलिताश्रुदृक् ॥७६॥ आहिताग्निरहं देवि नित्यं दुर्गाग्निनामुना । त्वया सद्धर्मचारिण्या स युक्तं प्रकटीकृतः ।७७॥ तद्भाग्यं क्वास्ति मे येन त्वयि पुत्रं लभे शुभे । को जीवः पुण्यवांस्तादृगस्ति यस्ते सुतीभवेत् ॥७८॥ तत्खेदमरविन्दाक्षि मन्दीकुरु करिष्यते । तत्किंचन तपो येन भविष्यति सुतस्तव ॥७९॥ तद्भाग्यस्यानुसारेण भविष्यति सुतस्तव । इत्याददे गिरं कीरोऽप्याम्रद्रुमशिरश्चरः ॥ ८० ॥ मुदानुमोदमानौ तौ तद्वचःसदुपश्रुतिम् । दम्पती यावदुत्पश्यौ जातौ तावदपश्यताम् ॥८१॥ पूरिते जलभृज्जालैर्जम्बालैरिव वर्त्मनि । भीतमप्कायसंघट्टाचरन्तं गगनाङ्गणे ॥८२॥ स्वच्छन्दं गच्छतामिच्छाविच्छेदो भूदमीषु मा । इति दूरात्युगे मार्ग मुञ्चन्तं दिवि पत्रिणाम् ॥८३॥ विकाशयन्तं लोकानां लोचनानि सरोजवत् । रत्नगर्भादिवोत्कीर्णं कीर्णं कान्तिकदम्बकैः ।८४॥ खेलन्तीनां चिरं पञ्चमहाव्रतमयश्रियाम् । विलाससद्मप्रायमानकमकराननम् ॥८५॥ रसद्रङ्गोनिर्लीनत्या लज्जितैरिव । अचिरैरपि तैः स्वर्णरत्नभारैरभूषितम् ॥ ८६ ॥ सहामुनैव यास्यामि मोक्षेऽपीति मनोरथात् । लाघवार्थमिव क्षामीभवताङ्गेन भासुरम् ॥८७॥ क्रियमाणतपस्तारं मूर्तीभूतैश्च सेवितम् । कृतैः करिष्यमा-

णैश्च तपोभिरिव साधुभिः ॥ ८८ ॥ विनयंधरनामानं विद्याधरमुनीश्वरम् । उत्तरन्तं पुरोभागे स्वस्य भाग्यमिवाद्भु-
तम् ॥८९॥ नवभिः कुलकम् ॥ पदं ददौ च स क्ष्मायां ननाम च जनाधिपः । तं त्रिः प्रदक्षिणीकृत्य सानन्दः सपरि-
च्छदः ॥९०॥ अथाधाय करौ मूर्ध्नि पृथिवीपालपुङ्गवः । मुनिं व्यजिज्ञपद्दत्ताशिषं कृत्वाशुभद्विषम् ॥९१॥ प्रभो नभोऽङ्ग-
णस्यास्य किमभाग्यं विजृम्भितम् । किं भाग्यं मद्भुवो वा यत्तन्मुक्त्वा त्वमिमां श्रितः ॥९२॥ अद्य नाथ कृतार्थोऽ-
हमद्य मे सफलं जनुः । अद्य मे जीवितं श्लाघ्यमद्य राज्यं च मेऽनघम् ॥९३॥ तव स्तवामृते वाचि दर्शने श्वाससौरभे ।
पदस्पर्शे मिथोहृत्वा ममाक्षैः म्रियते कलिः ॥९४॥ तद्ध्वानिनीं सितां शीतां सुरभिं मधुरां गिरम् । यच्छादेशप्रसादेन
पञ्चाक्षप्रीतये प्रभो ॥९५॥ युग्मम् ॥ अथ तीर्थेशसिद्धान्तकल्पद्रुकुसुमैर्मुनिः । वचोभिः शोभयामास वसुधावासव-
श्रवः ॥९६॥ चिरादघौघसंघट्टविपाटनपटीयसीम् । नभःपथेन मे तीर्थयात्रामुर्वीश कुर्वतः ॥९७॥ इदमद्यैव देवाधिदेव-
मन्दिरमण्डलैः । भद्रधर्मद्विपालानस्तम्भैरिव विभूषितम् ॥९८॥ जिनेशधूपधूमोर्मिनाशितैर्मशकैरिव । त्वच्चारित्रकृशैः
पापव्रजैरव्यथितमजम् ॥ ९९ ॥ पौषधग्राहिणां भित्तिलम्बितै रत्नभूषणैः । अपि पौषधशालासु निशि ध्वस्ततम-
स्तति ॥१६००॥ बभूव भुवनोद्दामरोचिर्लोचनगोचरम् । व्यक्तमुक्तावलीपुष्पप्रकरं नगरं तव ॥१॥ पञ्चभिः कुलकम् ॥
तदेतदवनीनेतर्दूरतः पश्यतो मम । प्रीतिप्रतिष्ठचित्तस्य चिन्ताभूदिति चेतसि ॥२॥ दूरतो दुरितं जेता नेतास्य नगर-
स्य यः । आरामिकेण नारामो रामः स्यादधमात्मना ॥३॥ तत्तमत्र महात्मानं पश्यामीत्याशया मया । निक्षिप्तचक्षु-
पादर्शि भवानीदृक्षदुःखभूः ॥ ४ ॥ तत्तज्ज्ञातुमहायातो महीधव जवादहम् । को न स्याद्धर्मधीराणां सतां दुःखेन

दुःखितः ॥ ५ ॥ तज्जल्प भुवनाकल्प दुःखं किं धर्मिणोऽपि ते । स्यादिन्दुधामधौतस्य कार्ष्ण्यनिः कुमुदस्य किम् ॥ ६ ॥ अभाभ्यधत्त भूभर्त्ता प्रभो दुःखतमो मम । सुतेन नयनाम्भोजसहस्रच्छविना विना ॥ ७ ॥ इदानीं तत्परित्रस्तं तदभ्युदयसूचकः । यदेष वीक्षितो युष्मच्चरणावरुणोदयः ॥ ८ ॥ अथ पृथ्वीपतेः स्पष्टमिष्टार्थफलवल्लिकाम् । गिरमुल्लासयामास स मुनिः स्मितपुष्पिताम् ॥ ९ ॥ भविष्यति शुभं भूप सर्वमेव तव ध्रुवम् । यद्स्मिन्पथि पान्थानां फलमिष्टं पदे पदे ॥ १० ॥

इहार्थे शृणु दृष्टान्तमस्ति विस्तीर्णवैभवम् । भूर्भुवःस्वस्त्रयीख्यातं दूरपाराभिधं पुरम् ॥ ११ ॥ यस्य भूमिगृहाण्याहुरधोलोकं विचक्षणाः । उच्चैःशिरोगृहाण्यूर्ध्वलोकमालोकशालिनः ॥ १२ ॥ महारम्भवशीभूतसुरासुरनरोरगः । उग्रशासन इत्येतत्पुरं पाति जनाधिपः ॥ १३ ॥ दत्तमुच्चैःपदं येन तुष्टेनेव सुपर्वणाम् । अर्पितं कुपितेनेव द्विजिह्वानामधःपदम् ॥१४॥ बभूव सचिवः शुद्धबुद्धिरित्यस्य विश्रुतः । अशेषतत्पुरोदारसर्वव्यापारपारगः ॥१५॥ प्रभोरादेशतो नित्यं पुरेऽस्मिन्नतश्चिरात् । पुण्याश्रय इत्यस्य मिलितः सुहृदन्यदा ॥१६॥ स कोऽपि परमस्थेमा प्रेमास्मिन्नस्य विद्यते । बभूव भोजने येन भाजनस्य.पि नान्तरम् ॥१७॥ प्रीतिं बभार तेनैव स्नातेनालंकृतेन सः । न कदापि स्वयं स्नातो नालंकारं चकार वा ॥१८॥ स्वयं कुसुमकर्पूरकस्तूरीचन्दनादिभिः । अमुं स वासयामास न चक्रे वासमात्मनः ॥१९॥ दुःखितो दुःखितस्यास्य स्पृहां पूरयितुं सदा । सोऽभ्रमद्भुवने बाढं मूढः स्वार्थनिरुद्यमः ॥२०॥ वयस्योऽपि समं शेते समं जागर्ति तेन सः । समं याति समं तिष्ठत्याधिरयं प्रेम्णि दर्शयन् ॥ २१ ॥ इति तस्य महोद्दामप्रेमप्रसरपेशलम् ।

नित्यासक्ततया नित्यमित्रमित्यमुमभ्यधुः॥२२॥ किं चैष पितृपूज्योऽयमिति दाक्षिण्यतः श्रुतिम्। दत्ते विश्वहिताख्यस्य पुंसो वाचि कदाचन ॥२३॥अयमुल्लासमत्तो मां मन्यतेऽथ न मन्यते। इति द्विधानना विश्वहितः प्राह कदापि तम् ॥२४॥ उदारस्फाररूपश्रीर्महाकुलसमुद्भवः। सुहृत्तवैष नो कस्य प्रयाति स्पृहणीयताम् ॥२५॥ किं तु त्वमनुरक्तोऽसि यथास्मिन्न तथा त्वयि। अयमन्तःकुशुद्धत्वाद्धारयत्यनुरागिताम् ॥२६॥ यतः स्नानेन भोज्येनालंक्रियेत यदैव न। कदाप्यसत्कृत इव स्याद्विरूपस्तदैव सः ॥२७॥ तथावद्दैवतो न स्याद्वैचित्यममुना सह। दुःखेऽप्याश्वासकस्तावत्कर्तुं कोऽप्युचितः सुहृत् ॥२८॥ यदा विघटसे दैवात्सद्दानेन तदा तव। नान्यो भावी सुहल्लोकैर्दूरस्थैस्तु हसिष्यसे ॥ २९ ॥ एकं नेत्रमनेत्रेषु सूनुमेकमसूनुषु। एकं मित्रममित्रेषु जगुर्मित्राणि तत्कुरु ॥ ३० ॥ इति विश्वहितोक्त्यासौ किंचिदञ्चितचेतनः। चक्रे मित्रं कृतज्ञाख्यमपर शिथिलादरः ॥ ३१ ॥ तमन्नवस्त्रालंकारगन्धताम्बूलमण्डलैः। सोऽप्रीणयत्कृतज्ञाख्यं मित्रं पर्वणि पर्वणि ॥ ३२ ॥ पूज्यमानं समालोक्य तेन सर्वेषु पर्वसु। समाचचक्षिरे पर्ववयस्य इति तं जनाः ॥ ३३ ॥ ईदृग्विधसुहृद्द्वन्द्वनिविडद्वन्द्वपातिनम्। स विश्वमहिता विश्वहितोऽमुं पुनरभ्यधात् ॥ ३४ ॥ त्वद्दुःखे दुःखितो भावी सैष पर्वसुहृत्क्षणम्। भव्योऽयमपि किं त्वीदृग्मित्रार्थं न दिशाम्यहम् ॥३५॥ यः स्यादल्पेन संतुष्टो नत्या वा स्तवनेन वा। दुःखेभ्यः क्षम उद्धर्तुं स कोऽपि क्रियतां सुहृत् ॥ ३६ ॥ विहस्य शिरसि न्यस्य शुद्धबुद्धिः करौ ततः। कीदृग्मया सुहृल्लभ्योऽपृच्छद्विश्वहितादिति ॥३७॥ अथैष श्रवणानन्दप्रवणामन्दवाग्भरः। शुद्धबुद्धेः पुरो विश्वहितं विश्वहितो जगौ ॥३८॥ विभावरीविभुविभासंनिभामलकुन्तलम्। रङ्गद्भ्रातरङ्गायनानश्रीवरन्नीवरम् ॥३९॥

मुक्तानन्दनकर्पूरपूरगौरतरद्युतिम् । तारकोटीरताडङ्कहारकेयूरकङ्कणम् ॥४०॥ आनाभिकूर्चमुत्तुङ्ग विस्तीर्णांसं सदास्मि-
तम् । दशा प्रसन्नया पुंसः पश्यन्तं नमतोऽग्रतः ॥ ४१ ॥ मध्येपुरं परिभ्राम्यञ्शुद्धबुद्धे कदाचन । पुमांसं मांसलश्री-
कमीदृशं क्वापि पश्यसि ॥ ४२ ॥ चतुर्भिः कलापकम् ॥ अथ सोऽभिदधे तात कदापि जिनसद्मनि । कदापि मुनिशा-
लायां कदापि सदने सताम् ॥ ४३ ॥ कदापि राजमार्गान्तः संचरन्तं नरोत्तमम् । संचरन्पथि पश्यामि सेव्यमानं वरै-
र्नरैः ॥ ४४ ॥ युग्मम् ॥ इत्याकर्ण्य जगौ विश्वहितस्तत्त्वं सुहृत्कुरु । अङ्ग तत्संगमाधाने दुःखं न स्यात्कुतोऽपि ते॥४५ ॥
स हि सिद्धः पुमाँल्लोकनाथाख्यः सर्वगो महान् । आश्रितं पाति भूपाग्निकूपसर्पाद्यपायतः ॥ ४६ ॥ इत्यस्य शिक्षया
सख्यं तेन साकं चिकीर्षति । प्रमादाद्विस्मरत्येव शुद्धबुद्धिर्दिने दिने ॥ ४७ ॥ अभियोगे ततो विश्वहितेन विहिते
मुहुः । तं ननामैकदा लोकनाथं यानस्थ एव सः ॥ ४८ ॥ कदापि कार्यतो गच्छन्दूरे दृष्टस्य वर्त्मनि । तस्य प्रणाम-
संदेशं प्रेषयामास पार्श्वगैः ॥ ४९ ॥ फलपुष्पादिकं चारु केनचिद्ढौकनीकृतम् । यस्य कस्यापि हस्तेन तस्मै प्रैषीत्क-
दापि सः ॥५०॥ दूरस्थोऽपि स्वयं गत्वा युग्यादुत्तीर्य नम्यते । स महात्मा स्वयं चास्मै ढौक्यं पुष्पफलादिकम् ॥५१॥
इत्थमाराध्यमानोऽयमतिदाक्षिण्यपूरितः । दक्ष रक्षिष्यति स्पष्टं भवत्कष्टं कुतोऽपि ते ॥ ५२ ॥ एवं पुनरसौ विश्वहि-
तेनाभिहितो मुदा । यानादुत्तीर्य तं पुष्पफलैरर्चति वन्दते ॥ ५३ ॥ त्रिभिर्विशेषकम् ॥ अयमालोकितं मार्गे नियमेन
नमत्यमुम् । इति प्रणामसुहृदं जगदुस्तस्य तं जनाः ॥ ५४ ॥ इति मित्रत्रयीमेनामेष संतोषयन्सदा । उग्रशासनभू-
पस्य शासने सुचिरं स्थितः ॥ ५५ ॥ एकदा नित्यमित्रेण सहैकशयने स्थितः । सुखं स एव सुष्वाप भूरिभोगविभू-

पणः ॥५६॥ यावन्निद्रां मुमोचायं तावत्पार्श्वेऽवलोकत । श्यामाञ्शोणदृशः क्रूरान्नरानुद्दवमुद्गरान् ॥५७॥ क्रुद्धस्य भर्तु-
रादेशकृतो यूयं किमागताः । मयि केनापराधेन कारितं प्रभुणास्ति किम् ॥५८॥ एवमेतेन ते पृष्टाः प्राहुर्भर्तैव दोप-
वित । त्वं तु स्वाम्यादतः कृष्टा क्षेपितोऽस्यन्ध कूपके ॥ ५९ ॥ युग्मम् ॥ इति तद्वाक्यमाकर्ण्य सोऽयं भयभराकुलः ।
नित्यमित्रं प्रति प्रोचे गिरा मन्दत्वगुरुया ॥ ६० ॥ सखे सखे समुत्तिष्ठ कथंचिदपि रक्ष माम् । उग्रशासनधात्रीशः
क्रुद्धवानधुना मयि ॥ ६१ ॥ कति संपदि मित्राणि न सुलभ्यानि देहिनाम् । दृश्यतेऽपि विपत्तौ यः क्षितिस्तेनैव
रत्नसूः ॥६२॥ पितृमातृप्रियाभ्रातृपुत्रादिभ्योऽपि वत्सलः । सुहृन्ममासि सन्मित्रं दुःखोद्धाराय धार्यते ॥ ६३ ॥ तदि-
दानीं ममानेन क्लिश्यमानस्य भूभुजा । अपारदुःखकूपारतारणाय तरीभव ॥ ६४ ॥ अथो म्लानाननो नित्यसुहृदि-
त्याह किं नु भोः । नृपं दिशसि मे मुद्धं संबन्धः क इवावयोः ॥६५॥ किं नोपलक्षतेऽसौ मामिति भ्रान्त्येव शुद्धधीः ।
कस्ते चित्तभ्रमः किं मां न जानासीति तं जगौ ॥ ६६ ॥ अथायमूचे ज्ञातोऽसि राजद्विष्टं किमप्यधाः । तत्त्वां न्यग्राह-
यन्न्यायाभिग्रहोऽप्युग्रशासनः ॥ ६७ ॥ तन्मे राजविरुद्धेन न कार्यं किमपि त्वया । स्वकृतस्य प्रमाणेन सहस्वैकोऽपि
निग्रहम ॥ ६८ ॥ ऊचे सोऽथ सखे नित्यमकृत्यं त्वत्कृते कृतम् । सर्वं ह्युपकृतं तुभ्यं मुक्तान्युपकृतानि हा ॥ ६९ ॥
अथातिविधुरो नित्यसुहृदभ्यधित क्रुधा । किमद्घुष्यसि निर्लज्ज मत्कृते किं कृतं त्वया ॥७०॥ यथा यथाहं त्वद्दत्तमा-
हरामि तथा तथा । प्रीतिस्तेऽभूत्ततः स्वस्मै त्वया सर्वं कृतं न मे ॥७१॥ मिथ्यावादिन्न मे कार्यं राजद्विष्टकृता त्वया ।
तन्मे पार्श्वं विमुञ्चेति धियस तेन गले धृतः ॥ ७२ ॥ इहान्तरे गृहान्तर्द्राक्पार्वणः सुहृदाययौ । उग्रशासनसंरुद्धं शुद्ध-

बुद्धिं निशम्य सः॥७३॥नित्यमित्रे विमुक्ताशो दीनं चक्षुर्जलाविलम्। किं कर्तव्यत्वमूढोऽसौ पर्वमित्रं प्रति न्यधात्॥७४॥
जातं मित्र किमेतत्ते कथंचिच्छुट संप्रति। दत्त्वा मदीयं सर्वस्वं दुःखेऽस्मिन्मां नियुज्य वा ॥ ७५ ॥ एवं गलज्जलभरं
कलयन्नयनद्वयम्। पर्वमित्रस्य गां श्रुत्वा दध्यौ शुद्धमतिस्तदा ॥७६॥ पोषितः त्पोषितस्त्वेन धिग्मया पुरुषाश्रयः। हहा
कृतं कृतज्ञस्य न कदाचन किंचन ॥ ७७ ॥ इत्ययं चिन्तयन्नेव नित्यमित्रेण शुद्धधीः। गले बाढतरं धृत्वा द्रुतं दूरीकृतः
स्वतः ॥७८॥ मैनं नयध्वं स्थानेऽस्य मां नयध्वं स्यादिति। पर्वमित्रे कृताक्रन्दे सोऽग्राहि नृपकिंकरैः ॥ ७९ ॥ तैस्त-
स्मिन्चलनः कृष्टे कष्टं पर्वसुहृद्यभूत्। चिरात्पुत्रीं विवाह्येवाशोत नित्यसुहृत्पुनः ॥ ८० ॥ द्वादशार्कप्रभाचक्रकर्कशेन
कृशानुना। दीप्तकोडस्य कूपस्य पार्श्वेऽसौ तैरनीयत ॥ ८१ ॥ हहामुष्मिन्नहं क्षेप्योऽमीभिः क्रूरतराशयैः। तत्कथं नु
भविष्यामीत्युत्कम्पोऽयमचिन्तयत् ॥८२॥ मयि विश्वहितेनोक्तं यदा दुःखे पतिष्यसि। त्वां सिद्धः सर्वगो लोकनाथः
पालयत्सौ तदा ॥८३॥ स मे संप्रति कालोऽयं करालोऽतिभयंकरः। तदसौ भवतु श्रीमाञ्शरणं करुणार्णवः ॥८४॥
इत्यस्मिन्ध्यायति स्फायमानञ्जुलतेजसः। हीरचीरपरीधानदृढबन्धकृशोदराः ॥ ८५ ॥ शुभ्रवज्रशिलागर्भमयदण्डोग्र-
पाणयः। अत्युदारहृदस्तारदृष्टयः स्फारमूर्तयः ॥८६॥ मुक्तादामदृढग्रन्थिग्रहावलितवेणयः। उत्तरस्या दिशः केचिदीयुः
मारस्वरा नराः ॥ ८७ ॥ त्रिभिर्विशेषकम् ॥ अमुं मुञ्चत रे योद्धुं मत्ता धत्तायुधानि वा। इति तेषां गिरा भूपकिंकरैः
समरे स्मितम् ॥ ८८ ॥ ततस्तेषां च तेषां च दूरोद्धूतरजस्तमाः। प्रकम्पितजगच्चित्तः समरः समभून्महान् ॥ ८९ ॥
तैर्महापुरुषै राजपुरुषाः परुषायुधाः। उच्चैःस्थितस्य लोकस्य पश्यतो जघ्निरेतराम् ॥ ९० ॥ त्रासिताः पातिताः क्षुण्णा

हारिता मारिताश्च ते । तै सिद्धपुरुषैः पश्चाचके विजयनर्तनम् ॥ ९१ ॥ त्वत्प्रणामसुहृल्लाकनाथस्त्वामाह्वयेदिति । तं
शुद्धबुद्धिं कृपान्तात्करेणादाय तेऽचलन् ॥९२॥ स तैः समं व्रजन्नग्रे शिखरोल्लिखिताम्बरम् । अतुल्योल्लासिकल्याण-
मयसर्वाङ्गसुन्दरम् ॥९३॥ अत्यूलमिलन्मुक्तावलीवलयमञ्जुलम् । स्वविस्तारगुणैर्भूरिपूरिताशासमुच्चयम् ॥९४॥
अङ्गीकृतमहारङ्गतुरङ्गरथकुञ्जरम् । आलयं प्रीतिमानेक सुविवेकं व्यलोकयत् ॥९५॥ त्रिभिर्विशेषकम् ॥ अथ क्वचित्कु-
रङ्गाक्षीशृङ्गारैर्नयनोत्सवे । क्वचिद्गीतसुधासिन्धुतारणोत्तरलश्रुतौ॥९६॥क्वचिद्बृहद्दृहारामसौरभ्योल्लासिनासिके । क्व-
चित्स्वाद्यशतालोकप्रचलद्रसनाञ्चले ॥९७॥ क्वचिद्विलाससरसीमरुत्पुलकिताङ्गके । तस्मिन्सद्मनि निश्छद्मप्रमोदः प्रवि-
वेश सः॥९८॥ त्रिभिर्विशेषकम्॥ अथारात्रिकसंकाशभ्रमन्मार्तण्डमण्डलम् । दूर्वाराजितरौप्यार्घपात्राभमृगलाञ्छनम्॥९९
मङ्गलाक्षतसंभारनिभव्याकीर्णतारकम् ॥ प्रणम्यमानं हृष्यद्भिः सुरासुरनराधिपैः ॥ १७०० ॥ स्तूयमानं स्वधीशक्त्या
सर्वदर्शनसूरिभिः । प्रसादविशदां दृष्टिं ददतं सेवकान्प्रति ॥ १ ॥ युतं चतुर्भिश्चरणैर्भाग्येनापि सुदुर्लभैः । निविष्टं
विष्टरे लोकस्पृहणीये महीयसि ॥२॥ तस्य विश्वहितस्याङ्के कृतावष्टम्भसुस्थिरम् । प्रणाममित्रं धीमाँल्लोकनाथमलो-
कयत् ॥३॥ पञ्चभिः कुलम् ॥ तद्वीक्ष्य विस्मितोऽध्यायमध्यायद्धिग्ममौचितीम् । सर्वस्वं नित्यमित्राय दत्तं नो सत्कृतो-
ऽप्ययम् ॥४॥ अभविष्यद्गतिः का मे कामेन चरतः क्षितौ । नतिमप्यकरिष्यं चेन्नास्य विश्वहितोक्तिभिः ॥५॥ इति
चिन्तार्तचित्तोऽयं लोकनाथं ननाम च । तेनालिङ्ग्य घृतश्चाङ्के सममोदवशंवदः ॥६॥ किं मित्र विधुरोऽसीति पृष्टस्तेन
महात्मना । शुद्धधीरभ्यधादात्मन्युग्रशासनतो भयम् ॥७॥ अथामुं स महात्माह किं भयं ते श्रितस्य माम् । क उग्र-

गाममस्तस्य दुःखं मूर्ध्नि मुखे रजः ॥८॥ न सवके मया किंचिदप्यमिलपि मा शुचः । सत्कृतिभ्यः सुमस्ताभ्यो महती
सत्कृतिर्नति ॥ ९ ॥ सेवकानां ददल्लक्ष्मीं शौर्यादेः स्यान्नृपोऽनृणः न तु तेषां प्रणामस्य कथमप्यनृणो भवेत् ॥ १० ॥
ततः कृतप्रणामस्य न भवामि तवानृणः । पदं त्रैलोक्यसाम्राज्यादप्युत्तरमनर्पयन् ॥ ११ ॥ कृतिन्किंचिदृणस्यास्य ददे
यावत्कल्पान्तरम् । तावत्तिष्ठैव मत्पार्श्वे मा कुतोऽपि भयं कृथाः ॥१२॥ इत्युक्त्वा स गृहस्याग्रभूमौ तेनाधिरोपितः ।
तस्थौ सुगसृहातुल्यकालपूर्णमनोरथः ॥ १३ ॥ कैरप्यथ दिनैरेनं लोकनाथोऽभ्यधादिति । ज्ञातोऽसीह चिरात्तिष्ठन्नुप-
शासनकिंकरैः ॥१४॥ यज्ञपितैव मे मन्यमदृष्टि दुष्टैकचेष्टिताः । कदाचिच्छलयित्वामी त्वां ग्रहीष्यन्ति शत्रवः ॥१५॥
तन्मुखे पित्र कुत्रापि भवन्तं यत्र तत्र ते । संमुखालोकनेऽपि स्युर्न समर्थाः कथंचन ॥ १६ ॥ किं तु कष्टतरः पन्थाः
सुदूरं तत्र गच्छताम् । क्षुत्तृष्णादिमहादुःखं सहमानैर्विलङ्घ्यते ॥१७॥ तद्विधेहि दृढं क्लेशसहने गहने मनः । मामन्वेहि
कृमिःदेहि कण्ठपीठे पदं क्षिपाम् ॥ १८ ॥ मनोहारिभिराहार्यैर्लोभयित्वा पदे पदे । पथि त्वामाह्वयिष्यन्ति स्नेहमारभ्य
वैरिणः ॥ १९ ॥ भद्रेन वाचा निरोन संभावयसि तान्यदि । तच्छलाद्गृह्यमाणं तैस्त्वां रक्षिष्याम्यहं न हि ॥ २० ॥
इत्यमुं शिक्षयित्वैष लोकेशः प्रस्थितः पथि । तद्वचनिश्रयः शुद्धबुद्धिरन्वगमन्मुदा ॥ २१ ॥ तृषितो यत्र यत्रैष विषमे-
ऽध्वनि गच्छति । तत्र तत्र पयः शीतं पिबामन्त्रेति भाषिणीः ॥२२॥ स्फारहाराद्यलंकाराः शृङ्गाररस्येव देवताः । आलो-
कत पयःशालापालिका वरपालिकाः ॥ २३ ॥ युग्मम् ॥ पान्थसंघातपादाग्रपातकणे रजोजुषि । तृणे च तत्र क्षणे च
महाशालदृढोऽगतन्॥२४॥ क्षुत्क्षामकुक्षिर्यत्राभूत्तत्रालोकत सोऽग्रतः । मञ्जाः पद्मनिर्मज्जद्भोजना भाजनावलीः॥२५

अध्वन्यमण्डलीखेदप्रस्वेदजलपिच्छले । रजोभारेऽप्यसौ तत्राहारेऽपि समदर्श्यभूत् ॥ २६ ॥ रविच्छविप्रतापेन जातो
यत्रायमाकुलः । तत्र च्छायानरून्पुष्पगायद्भृङ्गानवैक्षत ॥२७॥ दावाग्नौ च ज्वलज्ज्वाले विशाले च द्रुमोच्चये । तस्मि-
न्विस्मेरयामास दृशं समरसामसौ ॥ २८ ॥ आकारयत्सु तद्रक्षामनुष्येषु मृदूक्तिभिः । नासौ प्रपञ्चयामास हेलयापि
विलोचनम् ॥ २९ ॥ इति शुद्धमतिः सिद्धमतिज्ञः सत्वरं व्रजन् । अनन्यसदृशाकारं केवलैः स्फटिकैः कृतम् ॥ ३० ॥
अदृष्टपूर्वं निर्भाग्यैः सभाग्यैश्च महद्गृहम् । पुरो निरूपयामास लोकनाथेन दर्शितम् ॥ ३१ ॥ युग्मम् ॥ तदालोकन-
संजातपरमानन्दमग्नहृत् । स तृणं गणयामास चक्रिशक्रादिसंपदः ॥३२॥ प्रविश्याशु महासौधं तदेतत्तेऽकुतोभयम् ।
तमित्युक्त्वाचलल्लोकनाथो लोकेष्टसिद्धये ॥३३॥
इति सर्वेष्टद सर्वकष्टपिष्टकरं प्रभुम् । त्वमप्येनं महीनाथ लोकनाथं सुहृत्कुरु ॥३४॥ मुञ्च दुःखं न दुःखेन भवन्ती-
ष्टानि कुत्रचित् । आराधुहि त्याल्लोकनाथमिष्टार्थसिद्धये ॥ ३५ ॥ अथापृच्छत्प्रियः पृथ्व्या लोकनाथः स कः प्रभो ।
कथं चाराध्यतेऽसौत माराध्नोमि प्रियासखः ॥३६॥ इत्थमुक्ते नृपेणायं मुनिराचष्ट खेचरः । अन्तरङ्गधिया राजन्विचारय
कथामिमाम् ॥ ३७ ॥ ससार एव दुःपारो दूरपाराभिधं पुरम् । उग्रः कर्मपरीणामो राजास्मिन्नुग्रशासनः ॥ ३८ ॥
शुद्धात्मा जीव एवैतन्मन्त्री शुद्धमतिर्मतः । नित्यमित्रं पुनस्तस्य यथोदितगुणं वपुः ॥ ३९ ॥ जनो जनितसौजन्यस्तस्य
पर्वसुहृन्मतः । गुरूपदेश एवास्य पूज्यो विश्वहिताभिधः ॥४०॥ तच्छिक्षयामुना राजन् यः प्रणामसुहृत्कृतः तं विद्धि
लोकनाथाख्यं धर्ममेवाद्भुतं प्रभुम् ॥ ४१ ॥ दृष्टाः सुसोत्थितेनाग्रे तेन ये निष्ठुरा नराः । ते दुःकर्मगणा व्याधिमृत्यु-

दुर्गति हेतवः ॥ ४२ ॥ ते रुद्धौ निःक्रियं वीक्ष्य जीवः शुद्धमतिर्वपुः । तस्मिन्नुपकृतं मेने भस्मनि क्षिप्तवत्तदा ॥ ४३ ॥
कदाचित्किंचिदप्येष यद्दौ स्वजने जने । तदा धावति दुःखार्तं तदमन्यत साक्षिवत् ॥ ४४ ॥ कृष्टोऽङ्गेन गले धृत्वा
क्रन्दति स्वजने शुचा । नीतो यत्रैष कृपोऽसौ नरको दुःखसात्विकः ॥४५॥ शरणं लोकनाथोऽस्तु ममेति गदितेऽमुना ।
ईयुर्ये पुरुषाः कर्मगणास्ते धर्मसाक्षिकाः ॥ ४६ ॥ जितदुःकर्मभिर्निन्ये यत्र सत्कर्मभिस्त्वसौ । लीलावासः स धर्मस्य
विवेकाख्योऽतिनिर्मलः ॥ ४७ ॥ दानशीलतपोभावसत्पादोपशमासनम् । गुरूपदेशावष्टम्भं तत्रासौ धर्ममैक्षत ॥ ४८॥
श्रीधर्मेण स्वसोपानभूमौ कालं कमप्ययम् । देवेषु सम्यग्दृष्टित्वपदे सौख्येन लालितः ॥४९॥ ततः शिक्षास्थिरं मार्गे
विपरीतैरप्रलोभितम् । धर्मस्तं मन्दिरे मुक्तौ मुक्तवानकुतोभये ॥५०॥ येन प्रणाममात्रेण प्रसन्नेनेति निर्मितम् । स धर्मो
विधिनाराद्धो राजन्कि किं न यच्छति ॥ ५१ ॥ अथाभ्यधाद्धरिश्रीन्द्रस्तत्क्रियोच्छिद्रमानसः । धर्मस्याराधने देवीसत्वं
शिक्षयाशु माम् ॥ ५२ ॥ शमामृतसमुद्रोर्मिशीकरप्रकरैस्ततः । अक्षरैः शिक्षयामास साधुर्धर्मविधौ नृपम् ॥ ५३ ॥
धर्मस्य तस्यार्हत्सिद्धाचार्योपाध्यायसाधवः । यथा पञ्चेन्द्रियाणीव तुष्यन्ति नृप तत्कुरु ॥५४॥ सुखसाध्यमसंभाव्यप्र-
त्यूहकणमप्यहो । श्रियोमिव तत्प्रीतिकरायं विपुलं शृणु ॥५५॥ जयदम्भःशिखिविपस्तम्भनः प्रियलम्भनः । महामन्त्रो
नमस्कारः पञ्चानां परमेष्ठिनाम् ॥५६॥ मर्त्यामर्त्यासुरश्रेणीकर्षणेऽस्य किमद्भुतम् । यत्करोति नमस्कारः संमुखीं मुक्ति-
मप्यसौ ॥ ५७ ॥ राजन्नेष शुचीभूय त्रिकालं जप्यते यदि । तदयं प्रीयते धर्मः प्रसन्नसकलेन्द्रियः ॥ ५८ ॥ इत्युदीर्य
मुनीन्द्रोऽयं सरहस्यं रहस्यदात् । राज्ञे पञ्चनमस्कारमन्त्रं पावित्र्यशालिने ॥ ५९ ॥ मन्त्राप्य धरिश्रीन्द्रः प्रीतश्च प्रियया

चिरं स्थित्वैव तत्रैव भवनं
सह । गतश्च गगनं देहद्युतिद्योतितदिग्मुनिः ॥६०॥ मुनीन्द्रदर्शनानन्दरसास्वादविचेतनः । चिरं स्थित्वैव तत्रैव भवनं भूविभुर्ययौ ॥ ६१ ॥ अथो यथाविधि धराधिपतिः प्रतिवासरम् । चक्रे पञ्चनमस्कारमन्त्रध्यानं वधूसखः ॥ ६२ ॥ यथाकालपतन्नीरो नीरोगो निरुपद्रवः । सरसान्नसमुद्देशो देशोऽमुष्य तदाभवत् ॥६३॥ दुग्धैः क्षरद्भिर्धेनूनां धारालैरूधसः पथि । यशोभिरिव भूपस्य तदा तस्य व्यभूषि भूः ॥६४॥ आविर्बभूवुः सर्वेषु शैलेषु मणिखानयः । आसन्सर्वेष्वरण्येषु तदा तद्भुवि दन्तिनः॥६५॥इत्थं महर्द्धिवर्धिष्णुनिःशेषविषयव्रजः । कदाचिदपि निद्रान्ते निशान्तेऽचिन्तयन्नृपः॥६६॥ अहो महत्त्वं मन्त्रस्य यत्प्रसादवशादभूत् । राज्यं मम मनोहारि स्पृहणीयं हरेरपि ॥ ६७ ॥ नयनानन्दसंदोहमन्दिरं नन्दनस्तु माम् । नाधुनापि धिनोतीन्दुरिव दुग्धपयोनिधिम् ॥ ६८ ॥ इति ध्यानभृतं धात्रीभृतं सद्यो विनिद्रदृक् । राज्ञी विज्ञपयामास संमदोल्लाससपदा ॥ ६९ ॥ पीयमानं सुधापूरं जनिताञ्जलिभिर्जनैः । वर्षन्कर्षन्करैर्बिम्बान्मलिनं लक्ष्म निर्मलैः ॥ ७० ॥ योगीन्द्रैरपि साक्षेपं लक्ष्यमाणोऽधुना मया । स्वप्नेऽदर्शि प्रविद्द्येन्दुर्वदनेनोदरं स्थितः ॥ ७१ ॥ युग्मम् ॥ इत्याकर्ण्याद्भुतस्वप्नसोमां रोमाञ्चितः कथाम् । राजा वदनराजीवमरन्दमसृजद्गिरम् ॥ ७२ ॥ अकलङ्ककलाशाली धर्मात्मा मधुराकृतिः । जगतामुपजीव्यस्ते भविता देवि नन्दनः ॥७३॥ एवमस्त्विति सा बद्ध्वामेतस्यां ग्रन्थिमंशुके । बहिर्बभूव कम्बूनां प्रातस्त्यो मङ्गलध्वनिः ॥७४॥ अथोद्यत्प्रमदामोदः सप्रियो मेदिनीपतिः । क्षणं स्थितो नमस्कारमन्त्रध्यानस्थमानसः ॥ ७५ ॥ एतौ विशेषतस्तत्र मन्त्रे प्रसृमरादरौ । शमयामासतुर्दुःखं गमयामासतुर्दिनान् ॥ ७६ ॥ दिनेषु परिपूर्णेषु पूर्णेन्दुवदनस्ततः । सूनुर्जज्ञे जयावल्याः शुभेऽह्नि शुभलक्षणः ॥७७॥ पुत्रजन्मोत्सवं यो यः कथयामास

बुभुजे । स ददावुपदानन्दस्तस्य तस्याभिकाधिकम् ॥७८॥ तत्काले नृपतेर्मुक्तबन्धबन्धुरचेतसाम् । तत्र पुत्रे तदोत्पन्ने छिपामप्युत्सवोऽभवत् ॥७९॥ अस्मिन्गर्भस्थिते चन्द्र उदरे ददृशेऽम्बया । इति स्वमाददौ भूपस्तस्य चन्द्रोदराभिधाम् ॥८०॥ समं राज्यश्रिया बालः सोऽवर्धत दिने दिने । परा परिणतिः पञ्चपरमेष्ठिनमस्कृतेः ॥८१॥ स पञ्चवर्षदेशीयः मर्पममवनीभुजा । कलागुरुभ्यो निःशेषकलाशिक्षार्थमर्पितः ॥८२॥ काममभ्यस्यतस्तस्य प्रज्ञातिशयमीक्षितुम् । कलाः कौतूहलेनैव तदन्तमुपागताः ॥८३॥ बालोऽय लालयन्तीभिः प्रहृष्टाभिर्मुहुर्मुहुः । कलाभिः कुतुकात्काममङ्कादङ्कम- नीयत॥८४॥ तथा कथंचिद्दक्षाभिः कलाभिर्लालितः शिशुः । यथा ताभिर्विना नायं कश्चित्क्षणमपि स्थितः ॥८५॥ क्रमात्कलाकलापेषु निर्भराभ्यासभासुरः । जज्ञे बोधविशेषेण गुरूणामप्ययं गुरुः ॥८६॥ क्षिप्तं लक्षणमार्गोऽर्कतीव्रत- कौतुरं मुहुः । साहित्यामृतवापीषु पान्थवत्तन्मनोऽविशत् ॥८७॥ दानहन्त सुविधं च तं देशान्तरकोविदाः । जङ्गमं श्रीमरस्वत्योः संगमं तीर्थमागमन् ॥८८॥ अभ्यासाद्रूपयमश्रीमङ्गस्य परितोऽपि सः । लोहपञ्जरमध्यस्य इवालोकि विनोदकैः ॥८९॥ अभ्यासकुतुकेनापि कोऽप्यस्य न पुरः स्थितः । स दक्षो लक्ष्ममाधाय स्तम्भमेव व्युजृम्भत ।९०॥ निर्विशेषपदन्यासः पुण्याद्भूमिमल्लपातिनः । त्वरावेशादविज्ञातपूर्वश्चात्पदक्रमः ॥९१॥ खेलन्खुरलिकाधाम्नि वामद- क्षिणमण्डलैः । स नाङ्गसादं न स्वेदं न च श्वासमदर्शयत् ॥९२॥ युग्मम् ॥ नीरसं नव्यमश्वस्य शात च महिषत्वचाम् । मगुडमभिद्राभ्यासे शरैर्यो विवेध सः ॥९३॥ शरैरलक्षिशादानसंधानाकर्षमोक्षणैः । बेध्यानि विद्धवान्करचलसूक्ष्म- दृश्यान्यगम् ॥९४॥ सर्वेषु सैव मिश्रेषु दुःकरेषु च दुर्धरः । अभीयत धराधीशैर्धनुर्धरधुरंधरः ॥९५॥ सेवके ज्याकिण-

श्रेणी भुजयोस्तस्य रेजतुः । हृद्धशौर्यदन्तीन्द्रमदलेखाद्वयोपमे ॥९६॥ बभौ स भूपतेः सूनुः प्रचलेषु परिस्फुरन् । तुर-
ङ्गेषु तरङ्गेषु प्रतिबिम्ब रवेरिव॥९७॥इतस्ततस्तरलितैर्वालितैर्मधु चालितैः । द्विपैः सोऽरमत स्वैरं समीर इव नीरदैः॥९८॥
ऊरुसदशकापीड्यमानग्रीवो यदृच्छया । अत्राल्यत प्रमत्तोऽपि नागो नाग इवामुना ॥९९॥ इत्यशेषकलाश्लेषविशेषसु-
भगाकृतिः । पूर्णचन्द्रोपमां चन्द्रोदरः स्म भजते युवा ॥ १८०० ॥ सद्धर्मगनिसारस्य मतिसारस्य मन्त्रिणः । राज्ञा
नीतिलयज्ञस्य शिक्षार्थमयमर्पितः ॥१॥ अतीव सान्द्रयन्कूर्चकुन्तलान्दन्तकान्तिभिः । मन्त्री पुरः कुमारस्य नर्तयामास
भारतीम् ॥ २ ॥ वत्स यच्छिक्षयामि त्वामर्कमुज्ज्वालयामि तत् । आज्ञा राज्ञो न लङ्घयेति किंचिद्ब्रचिम तथाप्यहम्
॥ ३ ॥ सुस्थूलकरणः काममिहलोकश्रियां नयः । परलोकश्रिया धर्म इव तीर्थेशदेशितः ॥ ४ ॥ पुंसः सेवाकृतां राज्ञा
धर्मेणेव मनोरथः । न देयः पातकेनेव प्रत्युत न्यसनोदयः ॥५॥ कल्पद्रुः प्रार्थित वेगाद्धर्मस्त्वप्रार्थित चिरात् । द्रुत
चाप्रार्थित चैको दत्ते सेवाभृतां नृपः ॥६॥ स्त्रीषु स्त्रीषु च नो रक्तिर्न विश्वासश्च रच्यते । जीवतां व्यसनायोर्वैर्मृताना
नरकाय याः ॥७॥ कीर्तये धर्ममुलायै रक्षणीयः सदोद्यमः । स्थलमूर्ध्नि तृणालीव कीर्तिरन्याशु नश्यति ॥८॥ नृणां
रूप न रूप स्याद्दान रूपं जगन्मुदे । वर्षन्नब्दो वर कृष्णोऽप्यवर्षन्विशदोऽपि न ॥९॥ रक्षणीयः सदा दक्षैः पुरेऽपि
न्यसनी वसन् । पापात्र व्यसनं मूलं पापं दुःखततेरिव ॥१०॥ धर्मस्याव्यसन मूलं धर्मः सर्वसुखश्रियाम् । व्यसने
सुखमिच्छन्ति मूढाः शैत्यमिवानले ॥११॥ सर्वव्यसनमुक्तेपु युक्तेषु सुकृतोत्सवैः । पुरुषेषु त्वया तात रचनीया रति-
स्ततः ॥१२॥ इत्यसौ सचिवाचार्यवाचा प्रीतो नृपात्मजः । मेने मुधा सुमनसः सुधयाप्युन्मुदः सुरान् ॥१३॥ कदाचन

सभागर्भे भूपो भास्वरसेवकम् । अलंचकार सत्तारमिव ताराविभुर्नभः॥१४॥नृपाननदिनाधीशस्मितस्य सचिवेशितुः । अङ्के पङ्केरुहस्येव हंसो भूपालभूरभूत् ॥१५॥ चितन्वानं कलावद्भिः कलालापमिलापतिः । सुतं पश्यन्व्रतं स्वस्मै तस्मै राज्यर्द्धिमैहत ॥ १६ ॥ तद्विवाहं स्वदीक्षायामन्तरायं धरापतिः । अमन्यतावनम्रेण विज्ञसश्चाशु वेत्रिणा ॥ १७ ॥ स्वामिन्नामितसर्वारिः काम्पील्यनगरेशितुः । राज्ञः श्रीरत्नसेनस्य दूतोऽस्ति द्वारि वारितः ॥१८॥ चक्षुस्त्वन्मुखचन्द्रेऽस्य प्रमोदयितुमिच्छतः । प्रभो पूरय संकल्पमवनीकल्पपादप ॥ १९ ॥ इत्याकर्ण्य नियुक्तोऽयं राज्ञा भ्रूवल्लिसंज्ञया । तं दूतं वेत्रभृद्दूतं समादेशमवेशयत् ॥ २० ॥ आविर्भूतमदो दूतस्तदोत्तंसस्फुरत्करः । नत्वा नृपमथादिष्टे निविष्टो विष्टरे पुरः ॥ २१ ॥ श्रीरत्नसेनः कुशली वयस्यः परमो मम । किमर्थं पार्थिवोत्तंसः स त्वां मयि नियुक्तवान् ॥२२॥ इत्थं पृथ्वीभुजा स पृष्टो हृष्टचेतसा । स्वाभिभूतजीमूतो दूतो वचनमाददे ॥ २३ ॥ युग्मम् ॥ कस्तस्य कुशलप्रश्नो यस्ते हस्तेऽर्विनोदगः । स्वामिन्संकुचति क्वापि किं रवेः केलिवारिजम् ॥ २४ ॥ न स्वस्य किंचिदप्यल्पं स भूधव भवद्वशः । वियोरन्तःपुरक्रीडाचकोर इव मन्यते (?) ॥ २५ ॥ मर्त्यलोकार्यं यत्कार्यमस्ति तस्यासदीशितुः । तत्समाकर्णय क्षोणिवर्गिनीकर्णकुण्डल ॥ २६ ॥ अस्ति श्रीरत्नसेनस्य कलत्रं रत्नमञ्जरी । या विराजति तत्पुण्यपादपस्येव मञ्जरी ॥ २७ ॥ कन्यावती तु तत्कुक्षिकमलैकमरालिका । अस्ति तस्य महीनेतुस्तनया नयनोत्सवः ॥ २८ ॥ अदृष्टपूर्वं शीलस्य सुषमा मंगतेरपि । ततदस्यां तदालोकभूतोत्कण्ठमिवागतम् ॥ २९ ॥ तस्यां श्रियं समालोक्य स्वतोऽप्युपरिवर्तिनीम् । व्रीडयेव हृदये लीना छद्मं तस्थौ कलावलिः ॥ ३० ॥ राजलक्ष्मी जिनग्रन्थजिनाज्ञाजिनभक्तिभिः । व्यासकर्णशिरोहृद्भि-

गोंणाखिलविभूषणा ॥ ३१॥ दिद्युते नन्दनैर्नायं तथा भूपो यथा तया । नावश्यायैस्तथा भाति गिरीन्द्रो गङ्गया यथा ॥३२॥ नरेन्दुना सभादानदेवावसरभूमिषु । सहैव संचरत्येषा नित्यं कान्तिरिवात्मजा ॥३३॥ उत्सङ्गसङ्गीनीमेनां कदापि कलयन्नृपः । भूषितां भूरिभिर्भूपैः सभाभुवमभासयत् ॥३४॥ अस्या रूपकलाशीलैः समः कोऽस्ति क्षितौ वरः । इत्यपृच्छन्नृपो दूतान्प्रभूतावनिचारिणः ॥३५॥ यावद्वदन्त्यमी किंचित्तावन्नृपतिनन्दनी । नाहं विवाहं वाञ्छामित्याह सा हर्षशालीनी ॥३६॥ अथैनामभ्यधाद्भूमिविभुर्वैलक्ष्यलक्षणः । पाणिग्रहस्य विमुखी वत्से त्वच्छेमुषी कथम् ॥ ३७ ॥ न रतिः स्फुरति स्वान्ते येन केन विना तव । स त्वया श्वशुरावासे कायच्छायवदेष्यति ॥ ३८ ॥ चेन्म्लायसि वियोगे मे तडागस्येव पद्मिनी । आनेष्यामि तदत्रैव मरालमिव ते वरम् ॥३९॥ काम्यं यत्किंचिदन्यद्वा दूरं तत्पूरयामि ते । वत्से विवाहमात्सर्यमुत्सारय मदिच्छया ॥४०॥ इत्याग्रहमहीयस्या महीपस्यापि भाषया । सेयं विवाहवार्तामप्यमन्यत न कन्यका ॥४१॥ ततः कन्येयमेकान्ते पृथिवीकान्तकान्तया । विवाहाय मुहुः प्रार्थ्यमानादत्त गिरं चिरात् ॥ ४२ ॥ राधावेधं विधाता यो याता नार्यन्तरं न यः । मातर्मा तेन केनापि कृतिना परिणायय ॥ ४३ ॥ इति तद्वचनं देवीमुखादाकर्ण्य पार्थिवः । राधावेधकृते वीरानाह्वातुं प्रैषयच्चरान् ॥४४॥ अहं तु गन्तुमनसा सौहृदस्य परां धराम् । इहास्मि प्रहितो राज्ञा विज्ञापितमिदं वचः ॥४५॥ यद्देव कन्यया राधावेधे वरपणीकृते । चन्द्रोदरस्य योधत्वसिद्धयास्मि स्मितमानसः ॥४६॥ चन्द्रोदरं विना कोऽपि राधावेधाय न क्षमः । इत्यस्यैव यशो न्यङ्कुमाहृता दोर्भृतः परे ॥४७॥ तदादिश विशामिन्द्र चन्द्रोदरमिहोद्यमे । अधिकं दधतां स्नेहग्रन्थिदार्ढ्यमिहावयोः ॥ ४८ ॥ इति

श्रीरत्नसेनस्य मान्त्रिकेनाश्रितस्मयः । हर्षोपचितरोमाञ्चकञ्चुकः क्षितिकामुकः ॥४९॥ राधावेधोत्सुकं लज्जमानं पाणि-
प्रणोदिभिः । अस्मिन्महोत्सवे चन्द्रोदरं सादरमादिशत् ॥५०॥ युग्मम् ॥ प्रसाददानादानन्दस्यूते दूते गते च सः ।
चतुरङ्गचमूचारः कुमारः प्राचलन्मुदा ॥५१॥ महस्वनिर्जितेनोच्चैरब्धिनेव चरीकृतम् । व्यञ्जयन्त्या ध्वनिं विश्वे सूतः
पृतनगामिनः ॥ ५२ ॥ पद्मपत्रलंकृतान् रत्नैर्निर्गलन्मदनिर्झरान् । जयश्रीजङ्गमक्रीडाभूधरान्गन्धसिन्धुरान् ॥ ५३ ॥
स्वराभराभिरामाणि मुहुर्जनमनांस्यपि । आकर्षन्तीषु वेगेन दत्तदृग्वाजिराजिषु ॥५४॥ मङ्गलहरिभिर्धुर्यहरिभ्यः शिक्षितुं
त्वराम् । ध्वजव्याजादुपेताभिः कान्तानालोकयन् रथान् ॥५५॥ गणयन्निस्तृणं प्राणांस्त्रिलोकीं च स्वधैर्यतः । अभि-
मानपरैर्वीरैर्वृतो पतिवरैरिव ॥५६॥ द्रष्टुं श्वश्रूदियोः कन्याः श्रुततादृक्पतिंवराः । खनन्हरिखुरैः क्षोणीं कुर्वन्पथां
रजोभरैः ॥५७॥ ग्रामरामाभिराकृष्टहृष्टिभिः स्मितदृष्टिभिः । असंस्कृतमनोज्ञाभिरनाकृतं निरीक्षितः ॥५८॥ दधिसा-
रदधिक्षीरैः स्वैर्मनोभिरिवोज्ज्वलैः । प्रथितोपायनान्ग्रामवृद्धान्संमानयन्पथि ॥५९॥ सिञ्चन्द्विरदवृन्दानां दानाम्भोभि-
र्वनद्रुमान् । दुस्तराः सुतराः कुर्वन्नुर्वीधूलीभरैर्धुनीः ॥६०॥ गिरिमध्याध्ववैषम्यं भिन्दन्स्यन्दननेमिभिः । क्षोभयन्नट-
वीमिहानिसहनादैर्भुजाभृताम् ॥६१॥ अज्ञातमार्गसंचारो विदग्धानां कथारसैः । क्रमात्कुमारः काम्पील्यपरानाभ्यासमा-
सदत् ॥६२॥ एकादशभिः कुलम् ॥ सन्मान्य रत्नसेनेन कुमारः स्थापितस्ततः । सुधाकरकरध्वंसोद्दामधामनि धामनि
॥६३॥ धनुर्धरैकधौरेयमन्यैरन्यैरपि द्रुतम् । अपूरि पूरियं वीरै राधावेधाय धावितैः ॥६४॥ ततोऽलंकृतमालोलध्वजच्छा-
याहिरक्षितैः । कन्दर्पैर्मन्मथराष्ट्रनिधानकलशैरिव ॥६५॥ विलासमण्डपं भूमिमण्डलाखण्डलस्ततः । अकारयन्मणिश्रे-

णिश्रीहस्त्मश्वसंचयम् ॥ ६६ ॥ युग्मम् ॥ तत्राहूय न्यवेदयन्त भुजभाजो महीभुजा। बभौ तेषु त्विषा चन्द्रोदरश्चन्द्र
इवोडुषु ॥ ६७ ॥ चलसयोर्व्योम्नि यन्त्राग्रे षोडशद्वादशारयोः। सृष्टिसंहाररूपेण भ्राम्यतोरधऊर्ध्वयोः ॥६८॥ चक्रयो-
रुपरि न्यस्य भ्रमन्तीं काष्ठकच्छपीम्। अधस्त भूतले पात्रं हैममच्छैर्भृतं घृतैः ॥ ६९ ॥ युग्मम् ॥ ऊर्ध्वीकृत्य करं भूपः
पश्यतां सर्वदोष्मताम्। सनीरनीरभृद्धीरगम्भीरध्वनिरभ्यधात ॥७०॥ वेगाभोगभ्रमचक्रद्वयारान्तः स्ववर्त्मना। क्षिप्त्वेषुं
दत्तदृग्लक्ष्ये घृतान्तःप्रतिबिम्बिते ॥७१॥ भ्रमत्कच्छपिवामविलोचनकनीनिकाम्। यो भेत्स्यति स एवास्मत्तनयां परि-
णेष्यति ॥ ७२ ॥ युग्मम् ॥ इत्याकर्ण्य गिरं कोऽपि क्ष्मापश्चापमुदश्वयन्। राधायन्त्रतलं प्राप योधवियैकदुर्मदः ॥ ७३ ॥
तन्मुक्तः खं ययौ बाणश्चक्रमुन्मुच्य वामतः। द्रुतभ्राम्यदरोद्दृष्टादङ्गभङ्गभयादिव ॥७४॥ वेध्याध्वानं मुहुः सैष रुणद्धीतीव
कोपतः। बाणः कस्यापि भूभर्तुररं चक्रस्य विद्धवान् ॥७५॥ अस्माभिः सह वेगेन स्पर्धतेऽसाविति क्रुधा। अरैर्भ्रमद्भि-
श्चक्रस्य कस्यापीषुर्विखण्डितः ॥ ७६ ॥ कच्छपीदृग्भिदे मुक्तश्चक्रारैः स्खलितः पतन्। कस्याप्यूर्ध्वमुखस्येषुर्दृशं तस्यैव
विद्धवान् ॥७७॥ कश्चिद्विगुप्यतो वीक्ष्य हस्यमानाञ्जनैर्नृपान्। प्राप्तोऽहं द्रष्टुमेवेति मञ्चाग्रादपि नोत्थितः ॥७८॥ स्त्रीकृते
किं न लज्जेऽहमभ्यस्तां दर्शयन्कलाम्। इत्युत्तरकरो राधां कोऽप्यवज्ञातवान्हसन् ॥७९॥ उत्तरेष्वपि रुद्धेषु राधावेधनि-
षेधिभिः। यथावकथयन्नेव कश्चिदुत्थाय मञ्चतः ॥८०॥ इत्थं विसंस्थुले राजकुले काम्पील्यपार्थिवः। एत्य चन्द्रोदरस्याग्रे
जाग्रद्दुर्दर्जंगीर्जगौ ॥८१॥ उत्तिष्ठोत्तिष्ठ कोदण्डकलाधुर्यं दधुर्यतः। वीरा मुखेष्वयोधत्वदुःकीर्तिमिव कालिकाम् ॥८२॥
सन्ति वीरास्त्वमेवासि राधावेधविधौ बुधः। सन्ति तेजस्विनो भास्वानेव रात्रिक्षये क्षमः ॥८३॥ मानवेन न केनापि

वेण्या राधेति निश्चयम् । मिथो लज्जापहं राज्ञां हरं साम्यश्रिया सह ॥८४ इत्यस्य वाग्भिरुत्थाय वहँल्लीलायितं गतौ । जगाम रामग्र राधां द्रुमद्भिर्वीक्षितो नृपैः ॥ ८५ ॥ षोडशे धन्वनि स्वैरमात्तवन्दितसज्जिते । संदधौ तत्र सूच्यग्रशिखं स विशिखं कृति ॥ ८६ ॥ घृते प्रतिमितं लक्ष्यं भ्रमदालोकयन्नयम् । इदं मुहुरिहायातीत्यारचय्य स्थिरां दशाम् ॥ ८७॥ दग्लक्ष्यमंमुखीं धृत्वा विशिखस्य शिखामसौ । चिरमाकृष्टको दण्डश्चित्रन्यस्त इव स्थितः ॥ ८८ ॥ युग्मम् ॥ तद्बाणाग्रे न लक्ष्ये च हृदयस्पर्शया रयात् । राज्ञां चिचत्ते दृग्युग्ममेद्दिरेयादिरां मुहुः॥८९॥ न च मुञ्चन्शरं प्रैक्षि न च खे संचरन्शरः । वेगमेव तदा विद्धं विस्मितैर्वीक्षितं नृपैः ॥९०॥ नृपेष्वथ महाश्चर्यलीलाधामसु रामसूः । अपायि श्रमभेदाय केनं श्रृङ्गारसुधारसम् ॥९१॥ औचित्यावानसन्मानसहानीतान्यभूभुजा । पुःप्रवेशं नरेशेन कुमारः कारितस्ततः ॥९२॥ राजलोके ततः पाणिग्रहमाङ्गलिकोत्सुके । आनन्दसुन्दरेऽभवत्त सा कन्या म्लानमाननम् ॥९३॥ तादृशोदयदानन्दमन्थमन्थरया गिरा । अथैनामभ्यधाद्दुःस्वपञ्जरी रत्नमञ्जरी ॥ ९४ ॥ वत्से कृत्स्नपरीवारसुखवारिरुहक्षपाम् । कालिकां कलयस्येवमद्यापि वदने कथम्॥९५॥रूपे निरुपमः काम्यकलावलिविलासभूः । अपूरयत्तव श्रद्धां शुद्धान्वयनृपात्मजः ॥९६॥ धीरोदात्ताकृतिर्नित्यदात्तदाक्षिण्यभूषणः । नायं सपत्नीदुःखं ते कदाचिद्दर्शयिष्यति ॥९७॥ वत्से तन्मुञ्च वैमुख्यं स्मितं मातु भवन्मुखम् । क्षणेऽत्र स्वजनानन्दक्षीरनीरनिधेर्विधुः ॥९८॥

इत्याकर्ण्य गिरं मातुः सा तुषारकरानना । ऊचे भ्रूचेष्टितैरन्तः सूचयन्ती शुचं पराम्॥९९॥मातः कातरता नास्ति सपत्नीभ्यः कदापि मे । मच्चेत्कर्मपरं ताः कुर्युरीर्ष्यासु तत्परम् ॥१००॥ यच्चैना भविष्यन्ति तद्वतिमीलिरीतिभिः ।

चिन्तयिष्यामि ता भर्तृसुन्दरीः सोदरीरिव ॥१॥ तदेतच्चेतसि न मे मात्तमालिन्यकारणम् । धत्तेऽङ्गिजन्यास्तमिस्रारिः किं संकोचनिमित्तताम् ॥२॥ किं तु प्रतिज्ञा मेऽपूरि राधावेधेन नामुना । अन्यः स राधावेधोऽस्ति येन मे हृन्महोत्सवः ॥३॥ अरैः सत्कर्मदुःकर्मचक्रयोर्वेदनामयैः । भ्रमद्भिः सृष्टिसंहारक्रमेणान्तरितं द्रुतैः ॥४॥ भ्रान्तं संदेहयन्त्रेण विचारविशिखेन यः । सूक्ष्मं भिन्द्यात्परं तत्त्वं राधावेधी स मे प्रियः ॥ ५ ॥ युग्मम् ॥ इत्यस्यां विकसद्वाचि श्लोकोऽयमुदभूद्भुवः । लीलावातायनतलात्सहसा राजमार्गतः ॥६॥ ईदृक्षराधावेधेन कलावत्या मनःप्रियः । एकश्चन्द्रोदरो विश्वमौलिवर्ती जयत्ययम् ॥७॥ इत्युपश्रुतिमेवानुमोदमाना प्रमोदिनी । ददौ जालान्तरे नेत्रं पुत्र्या सह नृपप्रिया ॥८॥ असौ पुरः पठद्वन्दिनिवहं वाहवाहनम् । पथि चन्द्रोदरं वीरं संचरन्तमलोकत ॥ ९ ॥ चन्द्रोदरस्य पुत्र्याथ वीक्षमाणा मुखं मुहुः । अनुपश्चाच्छिरः कम्पमन्वभूद्रत्नमञ्जरी ॥ १० ॥ क्वायं कृतीन्दुर्यातीति पृष्टा दिक्करिका तथा । कापि गत्वाशु विज्ञाय समागत्य व्यजिज्ञपत ॥११॥ अथायं देवि मन्त्रीन्दुमतिसारगिराचलत् । पुरान्तस्तीर्थकृच्चैत्यपरिपाटीविधित्सया ॥१२॥ वार्तया च तया चन्द्रोदरश्रीदर्शनेन च । प्रीता कलावती किंचिद्भेजे पाणिग्रहस्पृहाम् ॥ १३ ॥ अथाकारयदावार्धिमिलितस्वजनव्रजम् । चन्द्रोदरकलावत्योर्नृपः पाणिग्रहोत्सवम् ॥ १४ ॥ विदुषोऽपि पठन्मूर्वं तिष्ठत्याक्षिप्य सभ्रमात् । आचारं कारयन्तीषु गोत्रवृद्धासु हर्षतः ॥ १५ ॥ ताम्बूलपूरणस्थूलकपोलासु पुरन्ध्रिषु । लसत्कुङ्कुमकौसुम्भशोभाभ्रमदुकूलषु ॥१६॥ पठत्यन्वयमुत्ताले वैतालिककुलेऽभितः । वाद्यमानेषु वाद्येषु सान्द्रमन्द्रतरस्वरम् ॥१७॥ ह्रिया न्यग्मुखयोः स्वैः स्वैरुन्मुखीक्रियमाणयोः । वधूटीवरयोर्जायमाने तारेक्षणे मुहुः ॥१८॥ आपूर्णगगनो मग्नभुवनश्रवणेन्द्रियः ।

उदन्नुन्मुलः कोऽपि दिग्भित्तिभ्रंशभूरिव ॥१९॥ पञ्चभिः कुलकम् ॥ ततः किमिदमित्युच्चभ्रूलते ततचक्षुषि । उत्कन्धरे
सगाधीशगणे चन्द्रोदरेऽपि च ॥२०॥ कोऽपि राजपुमानेत्य वैधुर्यग्लपितस्वरम् । ऊचे वाचा त्वराचारकण्ठशोषेण रूक्षया
॥२१॥ युग्मम्॥ समासो गगनस्येव व्यासो विन्ध्यगिरेरिव । स्वामिन्क्रूरत्वदीक्षादिगुरुः पितृपतेरिव ॥२२॥ शुण्डावलि-
तदन्ताग्रो गर्जितर्जितदिग्गजः । दृग्गोचरस्य नामापि नाशयन्गात्रघट्टनैः ॥ २३ ॥ पुराट्टश्रेणिकायुग्मकलङ्कपमहारयः ।
निमामरापगापूर इव दूरमनुन्नतः ॥२४॥ वन्यः कश्चिद्द्विपायातः कुतोऽपि नगरान्तरम् । भृङ्गैर्गीतयशा लुब्धैर्दानवारिणि
वारणः॥२५॥ चतुर्भिः कलापकम्॥ नद्विपा स्तम्भमुन्मूल्य गजा गर्वमिवात्मनः । पलायांचक्रिरे न्यस्य कर्णेभ्योऽङ्घ्रिषु चाप-
लम्॥२६॥ पलायमाना हरयो रयोपहतमारुताः । ललङ्घिरे मिथो मार्गरोधक्रोधसमुद्धुराः॥२७॥ क्षणात्करोलपि जगन्न येषां
पतितं रणे । वीरैस्तैरप्यहो त्रस्तैस्त्रस्तशस्त्रैः पलायितम्॥२८॥ किं वा बहु वदाम्येष प्राप्त एवेक्ष्यतां स्वयम् । नदन्नकालक-
ल्पान्तकालमेघ इव द्विपः॥२९॥ इत्युक्तया सपरीवारौ तौ कुमारधरापती । रभसाभ्युत्थितौ नागमैक्षेतां कथिताधिकम्॥३०
यावत्पश्यति भूजानिस्तावद्धातातृणैरिव । द्विपत्रस्तैर्जनैः शून्यं कृतं भूतलमग्रतः ॥३१॥ द्विपेऽस्मिन्दलयत्यट्टजालाट्टा-
लकमालिकाः । पुरस्य कृपया कम्पमानो भूपनिरभ्यधात् ॥३२॥ कोऽप्यस्ति क्षत्रियापुत्रः कुत्रचिन्ममसूनवे । दोर्बलेन
पुरं पाति पाल्यमानं द्विपेन यः ॥३३॥ इत्युक्त्वा पार्थिवः चक्षुर्यस्य यस्य मुखे ददौ । वीरः सद्यो नवोढेव स स न्यग्मु-
खतां दधौ ॥३४॥ ततः कृतमहाक्रन्दे तस्मिन्नत्यातुरे पुरे । बद्धं वधूसरीयेणोत्तरीयं प्रोज्झ्य रंहसा ॥३५॥ पर्युत्फुल्लोल्ल-
रोमाञ्चकञ्चुको रामनन्दनः । रे रे मा मेति मातङ्गं कण्ठीरवरवोऽगदत् ॥३६॥ युग्मम्॥ तस्मादभयसंभ्रान्तः स्थित्वा स्तब्ध

इव क्षणम् । स्वं चेतः पर्यवस्थाप्य क्रुधा तं प्रत्यधावत ॥३७॥ न कुम्भी वामभोगेन शक्नोति वलितुं जवात् । इत्यस्या-
श्रित्य तत्पार्श्वं कुमारः पेचकं गतः ॥३८॥ तमन्वचलत क्रोधाद्बलेन प्रबलो गजः । पुच्छमूलस्थ एवामुं व्यथयन्भ्रमकृद्दः
॥३९॥ इत्यभ्रामि चिरं कौतूहलाद्वीरेण वारणः । क्रोधक्षेपादिदोषाढ्यः क्षेत्रज्ञ इव कर्मणा ॥४०॥ उद्दामवामपार्श्वाति-
भ्रान्तिश्रान्तिस्फुरद्वपुः । क्रुद्ध एव तदा तस्थौ स कृत्रिम इव द्विपः ॥४१॥ खेदाच्छुष्यन्मदं प्रोद्यन्निःश्वासं मीलदीक्षणम् ।
उपेत्याग्रे कुमारस्तं करेणाताडयत्करे ॥४२॥ क्रोधतापाद्गलद्रक्ते इव रक्ते दधद्दृशौ । चिक्षेपास्मिन्करं कुम्भी दुष्टः फण-
मिवोरगः॥४३॥ नश्यंस्तिष्ठन्पतन्नुधन्नृपजन्मा तमग्रहः । गजमाकुलयद्दुष्ट ऋणिको धनिकं यथा॥४४॥वेगादुद्दष्टोत्पतनः
स्थिरं किल शिलामयम् । कुमारोऽथ तमारोहल्लोकाग्रमिव योगवित्॥४५॥तद्वीक्षाकौतुकोत्ताले जाते जालेऽङ्गिनां ततः ।
पक्षीवोदपतत्पृथ्वीभागान्नागाग्रणीर्दिवि ॥ ४६ ॥ तैरदर्शि दिवि श्यामधामश्रीः सामजो लसन् । कुमारद्युतिभिस्तारत-
डित्वानिव तोयदः ॥४७॥ एष यात्येष यातीति जने जाग्रद्घनस्वने । करी कुमारमाणिक्यतस्करोऽयं तिरोऽभवत्॥४८॥
किमेतदिति चिन्तर्तिनिश्चलैश्चित्रगैरिव । जनैरजनि दुःखस्य चित्रशालेव सा पुरी ॥४९॥ नयनैकप्रिये तत्र कुमारे करिणा
हृते । स्वसर्वस्वमिवामोचि जनानां नयनैः पयः ॥५०॥ तदन्तिगमनाद्द्वेष्यं न्यग्मुखो निःश्वसञ्जनः । आकाशस्यावका-
शत्वं हन्तुं धूलिमुदक्षिपत् ॥५१॥ आयूरुद्धदशद्वारे देहे गेहेऽभितोऽभ्रमि । प्रियं कुमारमन्वेतुमाकुलैरसुभिर्नृणाम्॥५२॥
तदा तेन कुमारेण सममेव गते हृदि । मूर्छामगच्छदुचितं नन्दिनी मेदिनीपतेः ॥५३॥ विलोक्य पितृकोद्वेदं दग्धस्यो-
परि तं नृपः । मज्जन्दुःखभराम्भोधौ किंकर्तव्यजडोऽजनि ॥ ५४ ॥ पुनश्चैतन्यमापन्ना तदन्तिपथदत्तदृक् । हा जीवेश क

यातोमीत्युक्तिगर्भं यरोद मा ॥५५॥ तदा वदामः किं दुःखं महोदग्रमहो जने । तस्यां रुदत्यां जज्ञेऽतिर्यद्रुमेषूपलेष्वपि ॥५६॥ मुक्तमुक्ताफलामालहार्दैववेलादिशङ्कितः । चक्रन्द विस्मृताक्रन्दकारणोऽपि जनोऽथ सः ॥ ५७ ॥ शुचा रसीभवन्त्याथ समं विलसनः मतः । तज्जनस्य जगामाहस्तुटिमाहात्म्यभृत्तदा ॥५८॥ चक्राङ्गनादैः क्रन्दन्ती ताराभिर्बाष्पबिन्दुभृत् । तमोभिर्मुक्तकेशा च दुःखिनीव निशाप्यभूत् ॥ ५९ ॥ चन्द्रेऽप्युदयमानेऽथ कुमारमुखशङ्कया । जनस्य हृष्यतो विघ्नं मृगमलेनैव निर्ममे ॥६०॥ चक्षुर्व्याकलयन्कण्ठविलग्नां रोदनक्रियाम् । मोहसुप्तो जनो यान्तीमजानीत निशां न मः ॥६१॥ ततो गतसिताभीशुजीवितेशवियोगिनीः । रचिच्छविचिताचक्रे पतन्तीर्वीक्ष्य तारकाः ॥ ६२ ॥ चित्तमित्रवियोगार्ता मापि मृणालकन्यका । दुःखौषधं ममास्त्वग्निरित्युच्चैराददे वचः ॥ ६३ ॥ युग्मम् ॥ आभूपरङ्कपर्यन्तं जनानां मरणार्थिनाम् । तदा तदेव वचनं समं वक्त्रेष्वजायत ॥ ६४ ॥ इत्येकमतमाश्रित्य प्रत्यक्षे कर्मसाक्षिणि । जनो ययौ चितार्थं नदीतीरमहीतलम् ॥ ६५ ॥ व्यभज्यत जनैर्दूरादिह स्वस्य चिताकृते । खण्डं खण्डं भुवः खड्गाकर्षणैर्मितमङ्गुलैः ॥ ६६ ॥ कन्याणतुल्यमूल्याद्यैः काष्ठखण्डकदम्बकैः । अहम्पूर्विकया तत्र व्यरच्यन्त जनैश्चिताः ॥ ६७ ॥ तच्चितानलमालोक्य भविष्यत्तापशङ्कया । समकम्पन्त तत्सीमभूजलस्थलदेवताः ॥ ६८ ॥ विन्यस्य तृणपूलेषु वह्निं तस्मिन्ननन्ततः । जीवितस्येव नासीरं समीरं मुखतोऽक्षिपत् ॥६९॥ मुखमारुतवीचीभिः प्रेरितार्मिर्मुहुर्मुहुः । विलक्षोऽजनि लोकोऽयं नाज्वलज्ज्वलनः पुनः ॥ ७० ॥ जनितज्वालनोपायमजेनापि जनेन सः । नाग्निर्ज्वालयितुं लोके कृतकोत्रानिलैर्हसन् ॥ ७१ ॥ विलक्षा दिक्षु विक्षिप्तमक्षुः क्ष्मापसुता ततः । ददर्श दूरतः कायोत्सर्गमवर्जितं यतिम् ॥ ७२ ॥

दध्यौ च युक्तं कारुण्यसुधाब्धेरस्य संनिधौ। गलावज्जनतामृत्युहेतुर्ज्वलति नानलः ॥७३॥ तदन्देऽहमसंदेहं स्वार्थमिध्यं
जवादमुम्। भान्तीच्छाकल्पतरवो गुरवो भृशमीदृशाः ॥७४॥ इत्यगच्छदियं स्वच्छमतिर्यतिनतिस्पृहा। साधुदर्शनसा-
नन्दैर्जनैरनुगताखिलैः ॥७५॥ तं नत्वाथ मुनिं व्यक्तभक्तिभासुरमानसा। जगाद जगतीनाथसुता दुःखोचितं वचः॥७६॥
किं कृपाब्धे त्वयारोधि तपःशक्त्या ज्वलञ्छिखी। शिखिजित्वरतापार्तं न किं जानास्यमुं जनम् ॥ ७७ ॥ ईदृक्तापातुरं
तर्हि संयमामृतसागरे। इम निमज्जय जनं भगवञ्जगतां हित ॥ ७८ ॥ पारयित्वाथ संसारपारदृश्वा मुनीश्वरः। जगौ
साक्षादवज्ञातद्राक्षावलीफल वचः ॥ ७९ ॥ दानशीलतपोभावजित्वरी पुण्यसंपदा। गार्हस्थ्ये भाविनी त्वत्तः शास-
नस्य प्रभावना ॥८०॥ तत्कल्याणिनि मा कार्षीरिदानीं संयमोद्यमम्। भूरिभोगफलं कर्म त्वयि किंचिच्च वक्ष्यति॥८१॥
उद्यमोऽयं यदर्थं स चतुर्थेऽह्नि समेष्यति। राजपुत्रः स तु यथा विद्यते श्रूयतां तथा ॥८२॥ अस्ति पूः स्वस्तिपूर्णश्रीर्वै-
ताढ्याचलमण्डनम्। विदिता महिका नाम्ना पुरचक्रमतल्लिका ॥८३॥ नयी रत्नाङ्गदो नाम महोदामपराक्रमः। विद्याध-
रवरस्तारविद्याशक्तिर्भुनक्ति ताम् ॥८४॥ तस्य लीलावतीकुक्षिनलिनैकमरालिका। सुतास्ति रुक्मिणी नाम रूपश्रीरिव
रूपिणी ॥ ८५ ॥ तां क्रोडे क्रीडयन्सत्यानुवाच ह्यस्तनेऽह्नि सः। वरोऽस्ति कश्चिदप्येतदनुरूपः क्षिताविति ॥ ८६ ॥
ततः खेचरचक्रेभ्यः श्रुत्वा तदधिकश्रियम्। त्वत्प्रियं खेचराधीशः स कुमारमहारयत् ॥ ८७ ॥ तेन कन्याविवाहार्थं
कुमारोऽभ्यर्थितस्ततः। नयधर्मसदाचारसत्यधीरभ्यधादिदम् ॥ ८८ ॥ अयैव दैवनर्यादोल्लङ्घिरूपमयश्रियम्। दृग्लीला-
स्थानशीलादिगुणां पर्यणयं वधूम् ॥८९॥ सतीं रूपवतीं चैकामङ्गीकृत्य मृगीदृशम्। कस्मै सुखाय सुमुखी द्वितीया

परिगीयते ॥ ९० ॥ वरं कारागृहक्षिप्तो वरं देशान्तरभ्रमी । वरं नरकसंचारी न द्विभार्यः पुनः पुमान् ॥ ९१ ॥ अभ्यक्तो गृह्णाति नामोत्यम्बुच्छटामपि । अक्षालितपदः शेते भार्याद्वयवरो नरः ॥ ९२ ॥ दुर्भगापि विरूपापि सपत्नी सुभ्रुवामपि । गात्रमात्रं सदाप्यन्तस्तस्याः शल्यमुल्लसेत् ॥ ९३ ॥ तत्तादृक्प्रेयसीप्रेमरसव्यसनिना मया । पुत्रीसंबन्धबन्धस्ते गदितोऽप्युचितोऽपि न ॥ ९४॥ इत्युक्त्वा विरते धर्मनिरते नृपजन्मनि । विद्याधराधिपो जिह्वादोलयान्दोलयन्निदम् ॥९५॥ मत्पुत्री परिणीयासौ त्रष्टव्यापि कदापि न । किं तूबह महाभाग भाग्यमेतावतापि मे ॥९६॥ इत्यादिभिर्गिरां भारैरुपरोध्य विवाहितः । कृत्वा मण्डपरात्रि स सकलत्रः समेष्यति ॥९७॥ त्रिभिर्विशेषकम्॥इति तत्कृपयादिदेश सोऽप्रिस्तम्भं कथां च ताम् । चचार चारणमुनिर्मनुष्यामहते पथि ॥९८॥ इहैव हि स्थितैः पाल्यः कुमारागमनोत्सवः इत्यालोच्य जनैस्तस्थे तद्दिनीनट एव तैः ॥९९॥ एष्यत्यद्य कुमारेन्दुर्नान्यथा मुनिवागिति । चतुर्थांशनिशीथेऽपि स जनो जागरी स्थितः ॥ २००० ॥ रे रे मया हृतां कन्यां च्युत्य नीत्वा क यास्यसि । अयं न भवसि क्षिप्रमस्त्रमस्त्रं सज्जय ॥१॥ रेरे वधूं मया व्यूढामेतामाच्छेत्तुमिच्छसि । एभिरेव पदैरद्य पातयामि शिरस्तव ॥२॥ एवं वधूविरोधेन क्रोधेन व्योम्नि धावतोः । कयोश्चन जनैनोधैरुक्तिप्रत्युक्तयः श्रुताः ॥ ३ ॥ त्रिभिर्विशेषकम् ॥ किमेतदितिसंभ्रान्तः स जनो दिवि दत्तदृक् । खड्गप्रहारखाट्कारान्महुंकारानकर्णयत् ॥४॥ मा भूदिह कुमारेन्दुः स्याचेत्तत्र गतदसौ । इत्यमन्तुतयोऽभवन्नं जनस्याकुलचेतसः ॥५॥ एतस्मिन्नन्तरे खड्गक्षतक्षतजवृष्टिकृत् । पपात पुरुषः कोऽपि दिव्यो दीप्तवपुर्व्यसुः ॥६॥ हा नाथ मां द्विपानेन ह्रियमाणां न पासि किम् । रणाग्रमरणो ध्यानसिद्धसिद्धिः सुरोऽसि यत्

॥७॥ एवं कदनगाः कस्याश्चिद्दूरं दूरं मृगीदृशः । शुश्रुवे ह्रियमाणाया इव व्योमाध्वनि ध्वनिः ॥८॥ युग्मम् ॥ पुमांसं पतितं गावद्दीपेनैक्षत भूपतिः । उपालक्षत तावत्तं कुमारं पूत्कार च ॥९॥ निन्दन्तस्तामहर्षेण महर्षेरपि भारतीम् । कुमारमरणं वीक्ष्य प्रापुः पौराः परां शुचम् ॥ १० ॥ रराज राजपुत्री तु यद्दिस्था शोकहर्षयोः । रचयन्ती चितामेवोपचितामिन्धनैर्घनैः ॥ ११ ॥ मृत्युव्यवसितिव्यग्रां क्ष्मापमुख्या निरीक्ष्य ताम् । सर्वे तत्कर्मनिर्माणमरसास्त्वरसाभवन् ॥१२॥ चितां कुमारमारोप्य प्रज्वाल्य ज्वलनं ततः । स्नात्वा नृपनिभूस्त्यक्तकम्पा झम्पाकृते स्थिता ॥१३॥ सत्त्वेन केचिदीश्चिल्याचरणेनापरेऽपरे । लज्जया सज्जयामासुश्चितामाशु निजां निजाम् ॥१४॥ क्षणे सत्त्वस्य निकषे तत्र सत्राः सचेतसः । सिन्धुस्नानविधानादिच्छलात्केऽपि पलायिताः ॥१५॥ अपाभवश्यीकलंकपया चिन्तयाकुलाः । मन्दं मन्दं परे चक्रुश्चिताचक्रप्रपञ्चनम् ॥ १६ ॥ दधुः सत्त्वभृतः केऽपि कपोलपुलकोत्तरम् । द्विगुणं राजपुत्रीनः प्रीतचित्ताश्चितापरम् ॥ १७ ॥ धूमं क्रौर्यजिताद्दण्डमिवाच्छिद्य कृतान्ततः । भ्रमयन्तः शिरस्युच्चैर्ज्वलन्ति स्म चिताग्नयः ॥ १८॥ तापयन्तस्तलैर्ज्वालाजालैर्नभस्तलम् । दिशः स्फुलिङ्गैरप्यासन्नामी कस्य प्रियेऽग्रयः ॥ १९ ॥ ततश्चित्तस्फुरत्पञ्चशरमेछिन्नसत्कृतिः । रोमाञ्चिताङ्गी तत्राग्नौ यावज्झम्पति भूपभूः ॥ २० ॥ तावदायात एवाहं हव्यवाहं भजस्व मा । प्रिये त्वमेव मे प्राणाश्चित्तं चेत्युदभूद्वचः ॥ २१ ॥ युग्मम् ॥ ततः खे दत्तनयना नयनानन्दकं प्रियम् । समायान्तं विमानेन सापश्यत्प्रेयसीयुतम् ॥२२॥ प्रियासौ मत्प्रियस्यापि तन्ममातिप्रिया ध्रुवम् । इति सा प्रीतिसरसां सपत्न्यामप्यदादृशम् ॥२३॥ किं जीवितं किमानन्दः किमुल्लासः किमुत्सवः । आयालसाविति स्मेरदृशा केनैव नेक्ष्यत॥२४॥पादन्यासैः कुमा-

रोऽप्यगात् भूमिमभूपगत् । स्मेरयन्ननवक्त्राणि कमलानीव भास्करः ॥ २५ ॥ प्रणमन्योमयुद्वादि पृष्टो राज्ञा जगाद
सः । अभूत्कस्याप्यसौ मायाप्रपञ्चो वञ्चनाय वः ॥ २६ ॥ ततः क्षितिपतिः कल्सकुमारागमनोत्सवः । दानैरानन्दय-
न्नार्थिनकलान्प्राविशत्पुरीम् ॥ २७ ॥ चिरं विरञ्चिनोद्दामनमजामातृगौरवः । ततः कृती कृतार्थं स पार्थिवः स्वममन्यत
॥ २८ ॥ मुहुरापृच्छमानोऽथ पृथ्वीशेन स भूपभूः । यद्भूयाप्येण सत्कृत्य प्रेषितः प्रेयसीयुतः ॥ २९ ॥ यान्ती पत्या
समं पादौ प्रणिपत्य पितुस्ततः । विनयेन विराजन्ती राजपुत्रीदमब्रवीत् ॥ ३० ॥ यो धर्मरुचिनामा वो धर्मामात्यो-
ऽस्ति धर्मवित् । स प्रेष्यतां धर्मकथासंवादाय मया समम् ॥ ३१ ॥ निवेद्याथ कुमाराय कुमारब्रह्मचार्यसौ । प्रैषि धर्म-
रुचिर्धर्मरुचिः पुत्र्या महामुना ॥ ३२ ॥ संत्यक्तान्युःखपन्देशानादत्तानेष हर्षयन् । ततः कलत्रद्वयवानवाप स्वां पुरीं
परः ॥ ३३ ॥ समायातं तमालोक्य पुत्रं प्रीतोऽथ पार्थिवः । राज्ये बलेन योग्यत्वादभिषिच्यादित व्रतम् ॥ ३४ ॥
मन्त्रिन्यस्तमहीभारो महीपालसुतावशः । विद्याधराधिपसुतां स नाचष्टे न चेक्षते ॥ ३५ ॥ महीपातुः सुता सा तु-
शीलशीलनशालिनी । दध्यौ सद्धर्मकर्मैकविचारविशदा तदा ॥ ३६ ॥ पत्युर्भवन्ति यावत्यो युवतयः पाणिपीडिताः ।
पतिवारक्रमाशासां सोऽह्नि तावद्दिनान्तरे ॥ ३७ ॥ विलुप्य वारमन्यस्या रागाद्रागामुकः स्वयम् । स्पृह्योऽपि शील-
वत्या न स्त्रियोपपतिवत्पतिः ॥३८॥ ततो विद्याधराधीशसुतावारनिवारणः । मामयं कामयन्नुर्वीपतिः पापाय जायते
॥ ३९ ॥ केनाप्यगमुपायेन न्यायेन च बलेन च । तद्वारे वार्य आगच्छन्नागतो नेक्ष्यतेऽपि सः ॥ ४० ॥ इति चेतसि
निश्चित्य शीलशीलावती नृपम् । मावदद्विनयानम्रवदना सदनागतम् ॥४१॥ कुलीना निष्कलङ्का च कनिष्ठा सा मम

स्वसा । निरूप्यतेऽपि नो भूपरत्न किं रूपवत्यपि ॥ ४२ ॥ धर्मोऽप्यसौ न धर्मज्ञ नयज्ञ न नयोऽप्ययम् । गोत्राचारज्ञ नो गोत्राचारोऽप्येष करोषि यम् ॥ ४३ ॥ प्रभो पाणिगृहीतां तां युक्त्या युक्तिज्ञ पालय । शुद्धधर्मनयाचारविचारिषु यशः स्पृश ॥ ४४ ॥ इतिप्रभृतिभिर्भाषाभङ्गीभिर्भाषितोऽभितः । नाङ्गीचकार तत्कर्म तद्गुणोर्मिवशो नृपः ॥ ४५ ॥ अनन्यहृदया सेयममेयमहिमोज्ज्वला । दिनेनैकान्तरेणाथ महीनाथमसेवत ॥ ४६ ॥ रुक्मिणीवारयोग्ये तु वासरे सा नरेश्वरम् । आयातमपि नोऽपश्यद्धर्मवश्येन चेतसा ॥ ४७ ॥ तादृग्धर्मकथालापकलापकलयैव सा । तां क्षिपां क्षिपयत्येषा प्रत्याख्यानविधायिनी ॥ ४८ ॥ सपत्न्यामपि वात्सल्यं सतीत्वमपि तादृशम् । तां प्रति क्ष्मापतिर्ध्यायन्मुहुः पुलकितोऽभवत् ॥ ४९ ॥ प्रभावभाजनं भान्ति स्त्रियश्चारित्रदेवताः । वैमनस्यमहो तासां यः करोति स पातकी ॥ ५० ॥ वयं मुदे तदेतस्याः कुर्मः कर्मेति भूपतिः । रुक्मिण्या अप्यदाद्वारमेकान्तरमनन्तरम् ॥ ५१ ॥ ततः सतीनां मुख्येयं पुण्यलब्धानमन्यत । प्रदत्तधर्मावसरान् रुक्मिणीवारवासरान् ॥५२॥ धन्यंमन्या पुनर्मेने पतिप्रीत्या पतिव्रता । घटितान्पुण्यसारेण स्ववारदिवसानसौ ॥ ५३ ॥ निजवारेऽपि राजेन्दो राजकार्यक्षणेषु सा । आत्मानं सफलीचक्रे सुकृतस्यैव केलिभिः ॥ ५४ ॥ सा धर्मरुचिना तेन पूर्णोपकरणव्रजा । त्रिकालं जनयामास पूजनानि जिनेशितुः ॥५५॥ जिनाधिनाथशेषाभिरेव द्रव्यैः सुगन्धिभिः । सा वल्लभसुकृताभोगानङ्गभोगानपि व्यधात् ॥ ५६ ॥ यद्वस्तु कल्प्यमार्यं यतीन्द्रेषु वितीर्य तत् । आजह्रे च विजह्रे च यथा स्वशुचिनैव सा ॥ ५७ ॥ सप्तक्षेत्रीमहादानवितानविघसैरसौ । धनैरन्यानि कार्याणि न चकार चकार वा ॥५८॥ इति शीले च दाने च भवन्ती मा निदर्शनम् । दूरतोऽपि वयस्येव

नुगमालिङ्गितुमैच्छयत ॥५९॥ तपोभिः शोषितः (त) स्वात्मा तुर्यषष्ठाष्टमादिभिः । तेषु धर्मेषु बन्धुत्वं तस्या धर्मरुचि-र्दधौ ॥६०॥ तया पितेव भ्रातेव स मेने मनसा शुचिः । सदामन्यत तेनापि मातेव भगिनीव सा ॥ ६१ ॥ स तस्या-मम्ब मा धर्मक्रियां गातुं प्रमादतः । दूरीपमूवतुर्नैव चिरकालं कदाचन ॥६२॥ इयं धर्मे धियं शुद्धामतीव दधती सती । स्यगात्कुसपे प्रेम रुक्मिण्यां पत्युरैहत ॥ ६३ ॥ रुक्मिणी तु सदा दध्यौ कदा वध्या सपत्नीसौ । दोषं दत्त्वानृतमपि चपलादपि बलादपि ॥ ६४ ॥ सा नित्यमिल्लसद्ध्याना दासीरासीनमत्सरा । तत्कलङ्कच्छलं कर्तुमूचे धिगसतां धियम् ॥ ६५ ॥ रुक्मिणीपार्श्वगोऽन्येद्युर्भूपालो जालवर्त्मना । दृष्ट्वा धर्मरुचिं चैत्यपरिपाटीविहारिणम् ॥ ६६ ॥ उवाच व्यक्त-रोमाञ्चो धर्मध्यानेऽस्ति कोऽपि न । अस्य पट्टमहादेवीधर्मबन्धोः समः पुमान् ॥ ६७ ॥ युग्मम् ॥ इत्युक्तिभाजि निर्व्याजे राजनि व्याजनिश्चला । मुखं सखीनां वीक्ष्याधोमुखास्मयत रुक्मिणी ॥ ६८ ॥ तासां मुखे विकारं स वीक्ष्य क्ष्मापाल विस्मितः । किं व्यलोकि कश्चिद्धर्मलोपो धर्मरुचेरपि ॥ ६९ ॥ ततः सस्मितमैक्षन्त तद्वयस्याः परस्परम् । किंचिद्विलक्षा इव क्षणकम्प्रोत्तराधराः ॥७०॥ एका तासु जगौ ज्ञाता धर्मे धर्म रुचे रुचिः । यत्ते पट्टमहादेवीं रुणत्त्येष भगिनीं जने ॥ ७१ ॥ विजने त्विति जल्पन्ती रुक्मिण्या भ्रूगुरुभ्रुवा । भ्रमयन्त्या दृशौ मौलिप्रकम्पेन न्यषेधि सा ॥ ७२ ॥ अर्थोक्त्यैनदभिप्रायं जानन्राजा तु संजगौ । धिक्तत्र दोषमथनं धिगर्के लक्ष्मभाषणम् । ७३ ॥ सतां गुणोऽपि दोषत्वं प्रगल्भमहने जने । सुधामरश्चेरपि कश्चित्काहे दहनायते ॥ ७४ ॥ अथाह रुक्मिणी कोपकपिशोद्भ्रान्तलोचना । मत्वा यो यत्र लीनः स क्षीणस्तत्रेति लोकवाक् ॥७५॥ असतां हन्त दोषोऽपि गुणः स्यात्तत्प्रिये जने । अन्धकारोऽपि

गामर्थभूता दुःकर्मकरिणा हतौ ||९३|| युग्मम्|| नेन्द्रोऽपि कर्मसु यलीलशोचक्रविच्युतिम् । चञ्चत्पञ्चनमस्कारध्यानो
धर्मं निमज्जन् || ९४ || गृहगर्भेऽतिगुप्तानि दुःसहश्यामैर्गुणांशुभिः । तमीतमांसि पुष्णन्ती सा तु तापवती सती
|| ९५ || किं करोमीति चिन्तान्तौ पुरोऽकस्मात्परिस्फुरत् । मार्तण्डमण्डलमिव द्युतिमण्डलमैक्षत || ९६ || युग्मम् ||
किमेतदिति संभ्रान्तां कुन्तीकान्तामथावदत् । प्रभागर्भगता कापि स्त्री दिव्याकारधारिणी ||९७|| नाम्ना पद्मावतीं तीर्थ-
जिनः शासनदेवनाम् । तत्पूजकभक्तां जानीहि मां हिमांशुसमानने ||९८|| ये जिनैकरसास्तेषां पुण्यश्रीरिव संनिधिम् ।
न मुञ्चे दुरितानीव शमनानि निरासितुम् ||९९||मयि मत्यां तवेदृश्यात्रिविडं न विडम्बनम् । मया तु सोढमिच्छन्त्या
शासनस्य प्रभावनाम् ||२१००|| धर्मप्रभावनाम्भोभिः कलङ्कः पङ्कवत्तव । इदानीं क्षालनीयोऽयमप्रक्षालितनिर्मले ||१||
तस्या इत्याशिषमुक्त्वा कृत्वा देवी तिरोऽभवत् । भूमेर्भीष्मजपृच्छमाणं पृष्टयेव जलदावलिः ||२|| प्रतिरोमभ्रमत्सप्ततर्कु-
लोमविशिखरी । अनिराकस्मिको कांचिदिनश्चाभूदिलाविभोः || ३ || पराक्रमैकशाकोऽयं बाढं संक्रन्दनीभवन् । स्वं
जीवितं तथाप्यन्तर्मेने दुःसहनं नृपः || ४ || तस्यार्तोऽन्तर्विशन्तीभिर्व्यथ्यमान इवार्तिभिः । शब्दौघः कण्ठकूलानि
कषन्कृच्छ्रेण निर्ययौ || ५ || स्वयं मुखेन प्रहितो राज्ञः शब्दः स दूतवत् । दूरीकमोऽपि सचिवानाहूतस्प्रथितव्यथः
|| ६ || विदधुर्विधकं वैद्या मन्त्रवादं च मान्त्रिकाः । यथा यथास्य पृथ्वीन्द्रोर्व्यथा पुष्यस्तथा तथा || ७ || अद्वैतवादि-
वादैकजयालम्बनभूतया । आकुल्यभूदथ क्ष्मापव्यथया व्यथितो जनः || ८ || न शय्यायां न च क्ष्मायां न हिमैरहि-
मैर्न च । स न पृष्टाश्च नाप्राप्तनिर्वृतिं नृपतिर्ययौ || ९ || जनैरसाध्ये रोगेऽस्मिन्दैवाकिंचन दैवतम् । कथाति यथौषधं

किंचिज्जीवति महीपतिः ॥ १० ॥ इत्यादिध्यायिनं पूर्वमपूर्वध्वनिना जनम् । सावधानं विधायाभूद्देवाम्बरसरस्वती
॥ ११ ॥ युग्मम् ॥ कस्याश्चन जिनस्वामिभक्तिकेतनचेतसः । सतीशतनमस्यायाः केशस्नपनवारिभिः ॥१२॥ जिनार्च-
कस्य कस्यापि कुमारब्रह्मचारिणः । हस्तात्तैः स्नपयित्वास्तरुज कुरुत भूभुजम्॥१३॥युग्मम्॥ श्रुत्वेति सचिवैः प्रीतैरा-
नीतः पुरविश्रुतः । अर्हद्भक्तः सतीवर्गो गणश्च ब्रह्मचारिणाम् ॥ १४ ॥ तस्मिन्कर्मणि राज्ञोऽथ कार्यमाणे क्रमेण तैः ।
प्रत्येकं नरकक्रीडाकरी पीडा व्यवर्धत ॥ १५ ॥ अथाह भूपः पीडाया मूर्तैरवयवैरिव । दीनमन्दातुरैर्वर्णैः पीटयद्भिः
परिच्छदम् ॥ १६ ॥ उपचारचयैरेभिः शमाय प्रथितैर्यथा । वर्धते प्रत्युतैवासौ लोभो लाभवतामिव ॥ १७ ॥ तदेव-
मेव स्थातव्य यद्भविप्यतयाधुना । अभावद्यमियं पीडा क्रीडावः किं भवेदिति ॥१८॥ उदासे जिनदासेन वागथो वृद्ध-
मन्त्रिणा । स्वजल्पः क्वापि नासल्पः सत्यस्तु भुवि दुर्लभाः ॥ १९ ॥ पुनस्ताश्चिन्तयामीति क्षणं स्तब्धीकृताकृतिः ।
अभिनीय स्मृतिं चैप सचिवः प्रोचिवान्नृपम् ॥२०॥ महासती महादेवी जिनधर्मधुरंधरा । कुमारब्रह्मचारी च स धर्म-
चिन्चकैः ॥ २१ ॥ तयोर्गृहजुपोर्यत्नस्तद्गुणालोकनं वहिः । सा भिक्षा सद्मगतयोः कामधुक्कल्पवृक्षयोः ॥ २२ ॥ अथ
व्यथावशोऽप्यूचे हा सहासमुखो नृपः । तयोर्मन्त्रिन्कृथा मैवं मिथो विप्लुतयोः कथाम्॥२३॥इति श्रुत्वा वहिर्गेहाद्गत्वा
वीक्ष्य सुधाकरम् । पल्यान्तः पाणिना दीपं स्पृष्ट्वा च सचिवोऽब्रवीत॥२४॥विधुः सुधामयोऽप्यापि दहत्यथापि पावकः ।
तत्कथं भापसे गोप शुद्धयोर्विप्लवं तयोः॥२५॥दर्शयाम्यधुनैवाहं तयोर्व्रतमविप्लुतम् । उक्तेन नीरयोगेन नीरोगं त्वां
सृजन्नवात् ॥ २६ ॥ राजाप्युवाच किं रुच्यं यन्मया दोपशङ्कया । देव्याः केशोचयः कृत्तः कृत्तौ धर्मरुचे करौ ॥ २७ ॥

उवाच मन्त्रिणोऽप्युच्चैर्हा महाराज किं कृतम् । तयोर्मुधासि शापेन पापेऽस्मिन्पतितो ध्रुवम् ॥२८॥ तत्तस्याः स्नानपानीयमुपानीय कथाप्यहम् । त्वां धर्मैकनिपाणिभ्यां छिन्नाभ्यामपि सेचये ॥२९॥ इत्युक्त्वा त्वरितं गत्वा दीर्घदुःखोनिकन्मनाम । स पट्टराज्ञीमाचष्ट मन्त्री मधुरया गिरा ॥३०॥ त्वद्विडम्बनपापेन देवि तापेऽपतन्नृपः । अस्तु त्वदीयस्नानाम्बुस्पर्शकुम्पेन निर्व्यथः ॥ ३१ ॥ इति क्षितिपतिक्लेशश्रुतिपुष्टमहाशुचः । पुण्याः पितेव स्नानाय देव्या मन्त्री निरोधनम् ॥ ३२ ॥ यावत्कर्तुं स प्रावर्त्तावद्धम्मिल्लमैक्षत । पूर्वच्युतं च धम्मिल्लं रत्नोर्व्यां तस्य बिम्बवत् ॥ ३३ ॥ ॥युग्मम्॥ अहो शीलमहो शीलमिदं देवि तवाद्भुतम् । कृत्तोऽपि केशपाशः स्वाग्येनाजनि पुनर्जनिः ॥ ३४ ॥ इति स्तुति गतः देव्याः केशान्प्रक्षाल्य तज्जलम् । स्वर्णकुम्भस्थमादाय सोऽगाद्धर्मरुचेः पुरः ॥३५॥ अक्षतावेव तस्यापि मन्त्री हस्तौ व्यलोकयत् । निर्जिताकणप्रभाभौ प्राग्हस्तौ च तयोरधः ॥३६॥ अहो ते ब्रह्मचारित्वमहो ते निर्मलं तपः । यत्तुष्णानन्सेकेन सद्यः कन्दलितौ करौ ॥३७॥ स्नपयाशु स्वपाणिभ्यां देवीस्नानजलैर्नृपम् । त्वत्कलङ्कप्रदानोत्थकर्थं निर्व्यथम् कृतम् ॥ ३८ ॥ इत्युक्ते सोऽपलशावज्जलकुम्भं सुधीर्दधत् । देवतानिशयात्तावदभिकुम्भजलं तदा ॥ ३९ ॥ अभूद्रूपं निराधारं धाराचामरवीजनम् । पुष्पवृष्टिर्जयारावो गगने दुन्दुभिध्वनिः॥४०॥युग्मम्॥ इत्थं महोत्सवैर्गत्वा तैर्धर्मरुचिरम्बुभिः । अभिषद्भूपतिं चन्द्रः किरणैरिव कैरवम्॥४१॥तेनाम्बुना ययौ भूपाद्भूत इव कश्मरः । सद्यः पवनदीसाम्निशालयेयान्न्यागमः ॥ ४२ ॥ तद्वरित्रचमत्कारवीचीनिचयलीलया । चिरं लोलमुखाम्भोजः सोऽजनिष्ट जनेश्वरः ॥ ४३ ॥ क्षमयित्वा क्षमाधीशो धीमान्धर्मरुचिं ततः । तां च क्षमयितुं देवीं स रुक्मिण्या समं ययौ ॥ ४४ ॥ सर्वे

मम क्षमस्वेति पाणिलग्ने महीभुजि । देव्याः पदद्वये लग्ना रुक्मिणी बाष्पगद्गदगौ॥४५॥यद्देवि पाणिग्रहणे हारितस्त्वं-
त्पतिर्मया । त्वन्मृत्युकाङ्क्षयादर्शि कपोमयुद्धशवं च यत् ॥४६॥ अतुच्छमपि वात्सल्यं बिभ्रत्या मयि सर्वदा । मुधा
कलङ्कमुत्पाद्य यत्तेऽकारि विडम्बनम्॥४७॥विप्रिय यच्च ते ध्यातं नित्यं दुश्चिन्तया मया । तन्मम क्षम्यतां सर्वं क्षमाव्रति
महासति ॥४८॥ त्रिभिर्विशेषकम् ॥ तत्पृष्ठदत्तहस्ताह देवी किं मे त्वया कृतम् । सर्वः पूर्वकृतानां हि कर्मणां लभते
फलम् ॥ ४९ ॥ अथ बाहुबुलां देवीं सानुतापो नृपोऽवदत् । अहं ते मूर्तिमत्कर्म येनेदं दर्शितं फलम् ॥ ५० ॥ सपत्नी-
मत्सराचक्रे वक्रतां रुक्मिणी चरम् । प्रिया प्रियेण मयका यद्दग्धामि हतोऽस्मि तत् ॥ ५१ ॥ निःकृत्रिमप्रेमवती सती
हृदयवल्लभा । कथं मया विराद्धामि धिग्मां धर्मबहिर्मुखम् ॥५२॥ तस्य मेनानुबन्धस्य कीदृगाचरितं मया । अश्रोतव्य-
चरित्रोऽहमद्रष्टव्यमुखोऽस्मि तत् ॥५३॥ एवं जल्पत्यपि क्ष्मापे सा नैवोर्ध्वं शिरोऽकरोत् । प्रियापमानप्राग्भारभारितेव
कलावती ॥ ५४ ॥ ततश्चन्द्रोदरश्चक्रे चित्ते चिन्तामचञ्चले । यः स्यादस्या मयि क्रोधः सोऽल्पः कारणमानतः ॥ ५५ ॥
तत्प्रसत्तिं प्रिया केनोपायेनासौ विधास्यति । यद्वा का मम चिन्तास्याः स्वं तावच्चिन्तयामि न ॥५६॥ ममाप्रसत्तेरेषा-
भूदप्रसन्नाधुना ध्रुवम् । स्वयं दाहस्वरूपोऽग्निर्दहतीन्धनमन्तिके ॥५७॥ तत्किमात्मन्प्रसन्नत्वं न त्वं धत्से सदा हृदि ।
यतः प्रसन्ने त्वय्येव प्रसन्नमखिलं जगत्॥५८॥ न चिन्तयसि चिद्रूप यदि त्वं हितमात्मनः । ततस्ते कोऽस्ति यः पीडां
धृत्वा तत्कथयिष्यति ॥ ५९ ॥ त्वमेकः कर्मणां कर्ता भोक्तैकस्तत्फलस्य च । अन्ये संयोगजाः सर्वे भावाः कर्मविनि-
र्मिताः ॥ ६० ॥ मातृपुत्रपितृभ्रातृकलत्रस्वजनादयः । सर्वे स्वार्थाय ताम्यन्ति त्वदर्थाय न कश्चन ॥ ६१ ॥ सर्वभूतहिता

सा तु सद्गुरोर्धर्मदेशना। संसारव्यवहाराधिपाधे त्वयि न सा स्थिता ॥६२॥ तदावेद्य वेद्यज्ञ भवान्तं लप्स्यसे कथम्। त्वमपापि किमत्मर्मा किंस्वरूपः किमुत्तमः ॥६३॥ इति चिन्तयतस्तस्य प्रशस्तोज्ज्वलभावनाम्। चिक्रीड चेतने चित्तं स्थिरं वैराग्यरञ्जितः ॥६४॥ यथा यथा स्थितं चित्तं ज्योतीरूपेऽस्य चेतने। तथा तथागात्विलयमातपे करको यथा ॥६५॥ विलीने मनसि क्षीणेष्वखिलो घातिकर्मसु। दग्धरज्जुसमानेषु भवोपग्राहिकर्मसु ॥ ६६ ॥ सद्ध्यानामृतसिक्ताया भावनायास्ततः फलम्। चन्द्रोदरोऽवनीपालः केवलज्ञानमासदत् ॥६७॥ युग्मम्॥ ततः कृते महोत्साहे पुष्पवृष्टिपुरःसरे। परागला विलीनों च मुनिवेषे यथाविधि ॥ ६८ ॥ फलायत्या धर्मरुचेर्जिनदासस्य मन्त्रिणः। दत्त्वा दीक्षां विहृत्योर्व्यां कृत्वा तत्सम्यकाशनम् ॥६९॥ विधायानशनं मासपर्यन्ते पुण्यभूतले। देहं त्यक्त्वा ययौ मुक्तिं चन्द्रोदरमहामुनिः॥७०॥ त्रिभिर्विशेषकम् ॥ दानशीलतपोधर्मरहितोऽपि शिवं पुमान्। चन्द्रोदर इवाप्नोति भावनायाः प्रभावतः ॥७१॥

इति भावनायां चन्द्रोदरनृपतिकथा ॥

तं निद्रूपमनूरूपं धर्मं सम्यग्निशम्य सः। अथ पद्मोत्तरो राजा व्याजहार मुनीश्वरम्॥७२॥ धर्मेश धन्य एवास्मि यस्य भाग्योदयैर्भवान्। धर्ममीदृशमाचख्यौ मोक्षश्रीसौख्यकारणम् ॥७३॥ मयेनमि चमत्कारं विचारस्त्वकृतोऽकृत। स्वामिन्नेकस्तु संदेहः मरोहं कुरुते हृदि॥७४॥यतं हि गृह्यते सद्भिर्भेत्तुं दुःकर्मणां गणम्। ध्यानतः केवलज्ञाने संपन्ने किं फलं मनाग् ॥ ७५ ॥ आलोकाय गृहे लोका दीपयन्ति हि दीपकम्। स चेच्चण्डांशुनो जातः किं कार्यं तेन तद्दिने ॥ ७६ ॥ ततः प्रत्युत्तरं प्राह पृथ्वीनाथार्थितो मुनिः। उक्तं युक्तं त्वया राजन्किं तु तत्कारणं शृणु ॥ ७७ ॥ गोत्रवृ-

द्वैर्नरैर्नैव सद्गुणोऽपि प्रणम्यते । अलंकृतनृपश्रीस्तु वन्द्यते नम्रमौलिभिः ॥७८॥ एवं न केवलज्ञानी गृहस्थो नम्यते जनैः । गृहीतचारुचारित्रः शक्रैरपि स पूज्यते ॥ ७९ ॥ अतो दिशन्ति चारित्रं केवलज्ञानतोऽधिकम् । तस्मिँल्लब्धेऽपि तल्लब्धुं तेन धावन्ति धीधनाः ॥ ८० ॥ एव निशम्य सम्यक्त्वतत्त्वगौरीं गुरोर्गिरम् । अप्रमत्ते चिरं चित्ते धत्ते स्मेति नृपस्तदा ॥ ८१ ॥ आचख्यौ चतुरो धर्मान्श्रीमान्यानेष मे गुरुः । सपूर्णमेकमप्येषु न कर्तुमहमीश्वरः ॥ ८२ ॥ पात्रे क्षेत्रेऽनुकंप्ये च देयं दानमिति स्थितिः । महाव्रतधरा राज्ञो मम दानं न गृह्णते ॥ ८३ ॥ विषयायत्तचित्तस्य प्रियाया-मवनीपतेः । क्व मे सर्वोत्तमं शीलमजिह्मब्रह्मजीविनम्॥८४॥ उपवासकृतावासमङ्गभङ्गकरं तपः । धरोद्धरणधुर्यस्य धव-लस्येव मे कुतः ॥ ८५ ॥ निरन्तरचरच्चिन्ताचान्तस्वान्तस्य सर्वतः । मम संयमलीनाया भावनायाः कथा कुतः ॥८६॥ यदि राज्यं परित्यज्य द्रुतं गृह्णे महाव्रतम् । शुद्धं चतुर्विधं धर्मं कर्तुं स्यां तदहं क्षमः ॥ ८७ ॥ एवमुद्वेलसवेगः संप्रधार्य वसुधार्यमा । स व्यजिज्ञपदिष्टार्थदापकं मुनिनायकम् ॥ ८८ ॥ प्रभो ज्ञानप्रभाधीश धर्मोद्धरणकारणम् । अतुल्यं मातृ-वात्सल्यमिवादिष्टं तवाखिलम् ॥ ८९ ॥ आनृण्यं पुण्यवाँल्लोके भजेत्प्रत्युपकारतः । भवभ्रमभिदस्तत्त्वोपदेशस्य न ते पुनः ॥ ९० ॥ आतपोत्तापितस्येव सुधाधाराभिषेचनम् । दारिद्र्योपद्रुतस्येव चिन्तारत्नोपलम्भनम् ॥ ९१ ॥ महा-न्धकारविवरप्रविष्टस्येव दीपिका । पयोधिमध्यनिक्षिप्तस्येव प्रवहणं वरम् ॥ ९२ ॥ विकटाटविकागर्भभ्रष्टस्येवेष्टसा-र्थपः । अस्ताधकूपपतितस्येवोद्धरणमञ्चिका ॥ ९३ ॥ अनन्तसंसृतिभ्रान्तिश्रान्तदान्तस्य मेऽधुना । बभूव मुक्तिसंप्राप्त्यै वाहनं तव दर्शनम् ॥ ९४ ॥ चतुर्भिः कलापकम् ॥ ततो विस्तारितोपज्ञश्रीसर्वज्ञप्रणीतया । मम निर्ममनाथ त्वं दीक्ष-

पानुमतं कुरु ॥ ९५ ॥ पुत्रं निवेश्य राज्येऽस्मिन्यावदायाम्यहं पुनः । सप्रसादैः प्रभोः पादैः स्थेयं तावदिहैव हि॥९६॥
सद्गुरुमिति विज्ञप्य प्रविश्य नगरं नृपः । राज्ये धनोत्तरं नाम पुत्रमस्थापयन्निजे ॥ ९७ ॥ मर्त्यान्विमोचयत्काराभ्यो
निखिलान्मत्तशृङ्खलान् । मीनाम्मृगांश्च पाशेभ्यः पञ्जरेभ्यः पतत्रिणः ॥९८॥ बन्धुवर्गं व्यवस्थाप्य कृतस्नानविलेपनः ।
बन्दिभिर्वर्ण्यमानोऽयं गीयमानगुणो जनैः ॥९९॥ तूर्यतारवैर्भेरीभाङ्कारैः पूरयन्नभः । चैत्येष्वभ्यर्चयन्देवान्ददानो दान-
मुत्तमम्॥२००॥ भर्तृमार्गानुसारिण्यो धन्या एताः क्षिताविति । श्लाघ्याभिः स्वजनैरन्तःपुरीभिः शोभितोऽभितः॥१॥
घनाशिभिर्वृतो भूपैरन्वितो नवभूभुजा । चचालोदारशृङ्गारः सारकुञ्जरवाहनः ॥ २ ॥ अस्मान्मुक्त्वा क्व हा स्वामी
गमाप्यं व्रजेदिति । दुःखार्तैर्वीक्षितः पौरैः क्ष्मापः प्राप वनान्तिकम् ॥ ३ ॥ षड्भिः कुलकम् ॥ मुक्त्वा हस्तिपरिस्पन्दं
त्यक्त्वा छत्रं सचामरम् । अनुयातां क्षरद्बाष्पां क्षमयित्वा प्रजां निजाम् ॥४॥ इदं तेऽङ्गं कथं वत्स व्रतकष्टं सहिष्यते ।
इति जल्पद्रुदत्प्राप्तमापृच्छ्यान्तःपुरं पितुः ॥ ५ ॥ अहो सत्त्वमहो सत्त्वमिति साधुगणैः स्तुतः । प्रविश्योद्यानमाक-
न्दमसुश्रमिर्ममो नृपः ॥ ६ ॥ त्रिभिर्विशेषकम् ॥ राज्यबन्धं परित्यज्य दक्षः पक्षीव पञ्जरम् । आत्मारामाभिरामां स
दीक्षाशां शिश्रिये मुदा ॥७॥ कृतकेशोद्धृतिर्नत्वा वज्रनाभगुरुं तदा । छत्रीभूते गुरोः पाणौ पपाठेति क्षमापतिः ॥८॥
करोमि भगवन्नेवं सामायिकमिह व्रतम् । सर्वं सावद्यकं योगं प्रत्याख्यामि ध्रुवं त्रिधा ॥ ९ ॥ तदा केवलिनं राजमुनिं
ध्यानस्य भक्तितः । माश्रुनेत्रः समं राज्ञा सर्वो लोकः पुरेऽगमत् ॥ १० ॥ लब्धसंयमसाम्राज्यो यथाकल्पमनल्पधीः ।
विनयी निजहारैव राजर्षिर्गुरुभिः समम् ॥ ११ ॥ आचाराङ्गं तथा सूत्रकृत, स्थानाङ्गमप्यथ । समवायाङ्गं विवाहप्रज्ञप्ति-

भंगवत्सौ ॥ १२ ॥ ज्ञाताधर्मकथा तस्मादुपासकदसा तथा । अथान्तकृद्दशा चानुत्तरौपपातिका दशा ॥ १३ ॥ प्रश्नव्याकरणं चात्र विपाकश्रुतमेव च । सूत्रादर्थादपीत्येकादशाङ्गान्यथ सोऽपठत् ॥ १४ ॥ त्रिभिर्विशेषकम् ॥ उपवासोनोदरते भूरयल्पत्वं रसोज्झनम् । सलीनता वपुःक्लेश इति बाह्यं तपश्चरन् ॥ १५ ॥ प्रायश्चित्तं वैयावृत्यं स्वाध्यायो विनयस्तथा । कायोत्सर्गश्च सद्ध्यानं तन्वन्नित्यान्तरं तपः ॥१६॥ स सवीर्यः स्फुरद्वैर्यः सुश्लिष्टान्यपि हेलया । कर्माणि जर्जरीचक्रे काननानीव कुञ्जरः ॥ १७ ॥ त्रिभिर्विशेषकम् ॥ शुद्धश्रद्धानिधिः साधुर्विंशतिस्थानकान्यथ । संस्पृशन्नर्जयामास तीर्थकृन्नामकर्म सः ॥ १८ ॥ तथाहि—

सर्वज्ञे सर्वजन्तूनां बन्धौ श्रेयोध्वदर्शिनि । नमनं स्तवनं पूजानुमोदनमसौ व्यधात् ॥१९॥ क्षीणकर्मसु लोकाग्रस्थितेषु स्थिरमानसः । अयं ध्यानविधानेन सिद्धेष्वाराधनां दधौ ॥ २० ॥ श्रीसङ्घरूपे सिद्धान्तरूपे प्रवचने मुनिः । आज्ञानतिक्रमेणैष स्वशक्त्या भक्तिमानभूत् ॥ २१ ॥ अयं महाव्रताधारे शुद्धधर्मोपदेशिनि । आदेशवश्यचित्तत्वादर्चां व्यरचयद्गुरौ ॥ २२ ॥ समवायाङ्गविज्ञेषु वयोव्रतमहत्स्वपि । स्थविरेषु स्थिरामेष भक्तिं भेजे भवच्छिदे ॥ २३ ॥ श्रेयान्सूत्रधरादर्थधरः सूत्रार्थभृत्ततः । इति क्रमाद्व्यधाद्भक्तिं कृती श्रुतधरेष्वसौ ॥२४॥ तपस्तीव्रं वितन्वत्सु तपस्विषु तपोनिधिः । शुश्रूषामेष निःशेषां शुद्धश्रद्धाधरोऽकरोत् ॥२५॥ पठने गुणनेऽर्थे च सिद्धान्तस्य मुहुर्मुहुः । चिरं तदेकचित्तत्वादुपयोगमयं दधौ ॥२६॥ सर्वज्ञधर्मसर्वस्वे सिद्धिसंधिविधायिनि । अयं विरचयामास सम्यक्त्वे निश्चलं मनः ॥२७॥ ज्ञानस्य ज्ञानपात्रस्य विनये गुणचक्रिणि । नातिचारं चकारायमन्तरायं शिवश्रियः ॥ २८ ॥ भवाकूपारपारेषु

स्थानाचारेषु सम्प्रियाम् । आवश्यकेषु सोऽत्यर्थं नातिचारपरोऽजनि ॥२९॥ शीले पुण्यलतामूले मूलोत्तरगुणेष्वपि । अयं
व्यधात् प्रवरकरनिरतिचारताम् ॥३०॥ अयं काले क्षणलवप्रमाणेऽप्यप्रमत्तधीः । ध्यानासेवनसंवेगभावनादीनि नामु-
चत् ॥३१॥ निक्षिप्तमात्मसुवर्णं ज्वलितेन तपोऽग्निना । असौ सुवर्णमात्मानमहर्निशमशोधयत् ॥३२॥ वस्त्रपुस्तकपात्रा-
न्नपानं स मुनिशेखरः । आनीयानीय साधुभ्यः शुद्धं श्रद्धाश्रयो ददौ ॥३३॥ एष ग्लानेषु बालेषु गुरुषु स्फुरितादरः । नित्यं
सर्वजनस्तुत्यं वैयावृत्त्यं व्यधत्त सः ॥३४॥ केनापि कारणेनोच्चैरसमाधिगतं मनः । सर्वेषां प्रापयामास समाधिमयमा-
शिषिः ॥ ३५ ॥ नित्यं नवनवं ज्ञानं ज्ञानावरणकर्महृत् । श्रवणाध्ययनव्याख्यानुग्रहैरयमग्रहीत् ॥ ३६ ॥ आनन्दमग्नो
रोमाञ्चलोमाञ्चितमनुश्रिरम् । श्रुते भक्त्या ददौ चित्तं लोलमौलिर्मुहुर्मुहुः ॥३७॥ धर्मव्याख्यान्यवादीन्द्रमल्लाख्या कवि-
तादिभिः । गुणैर्जैने स सर्वत्र शासनस्य प्रभावकः ॥३८॥ इत्युपार्जिततीर्थेशनामकर्मा समाहितः । प्रतिग्रामपुरो विश्वं
बोधयन् विजहार सः ॥३९॥ दक्षाः साक्षात्परोक्षास्तस्यामृतकिरं गिरम् । पातुमीयुः खगोत्तमा हंसा इव नदीं दिवः ॥४०॥
तपोलब्धिभिराकृष्टाः सुरासुरनरोरगाः । तमसेवन्त विनयं धिषणाद्विगुणा इव ॥४१॥ एवं भावी चरित्रेण पवित्रीकृत्य
स मतीं । भवामोगमहारोगमहापानशनार्थ्यमूत् ॥ ४२ ॥ विज्ञाय केवलज्ञानी वज्रनाभः प्रभुस्ततः । तत्पुण्यैस्तस्मादा
स्थानं प्राप पापहरो गुरुः ॥४३॥ तस्यागमनमिति मुदेऽभूद्गुरुदर्शनम् । यथा चन्दनसिक्तस्य मलयानिलसंगमः ॥४४॥
अथ हर्षोल्लसद्रोमहर्षो राजर्षिशेखरः । गुरुपादाब्जयोर्भृङ्गभङ्गीमङ्गीचकार सः ॥४५॥ असावनशनं साधुराधाय गुरुसंनिधौ ।
चक्रे कृताञ्जलिस्तत्रान्तिरात्मोक्तनामिति ॥४६॥ चिरमत्ययकरासारराशौ निवसता मया । अनन्तजन्तुसन्तानं गहनं क्षम-

यामि तत्॥४७॥ न्यवहाराख्यराशौ च पृथ्वीकायभृता मया । लोहलोष्टोपलीभूय ये हताः क्षमयामि तान्॥४८॥ नदी-
नदीशकूपेषु जलरूपेण ये मया । जन्तवः संभिन्नाः केऽपि संहृताः क्षमयामि तान् ॥४९॥ प्रदीपनतडिद्दावदीपप्रभृतिमू-
र्तिना । ये मया जघ्निरे तेजस्कायेन क्षमयामि तान् ॥५०॥ महावृष्टिहिमग्रीष्मधूलिदुर्गन्धबन्धुना । ये मया वायुकायेन
व्यथिताः क्षमयामि तान् ॥ ५१ ॥ पीडिता दण्डकोदण्डकादण्डस्यन्दनताभृता । ये वनस्पतिनात्मानो मयात्र क्षमयामि
तान्॥५२॥ अथ कर्मवशादाप्य त्रसतामसता मया । रागद्वेषमदान्धेन येऽर्दिताः क्षमयामि तान्॥५३॥ अपराधं क्षमन्तां
मे तेऽपि सर्वत्र जन्तवः । सर्वभूतेषु मे मैत्र्यमास्तां वैरं न कुत्रचित् ॥५४॥ महाव्रतेषु यः कश्चिदतीचारः कृतो मया ।
मिथ्या मे दुष्कृत तत्र भवताद्गुरुमाक्षिकम्॥५५॥राशावव्यवहाराख्येऽनन्तजन्तुप्रघट्टनात् । मया मे कर्म कृत्तं तां पीडाम-
प्यनुमोदये ॥५६॥ जिनानां प्रतिमाचैत्यभृङ्गारमुकुटादिषु । यो मे पृथ्वीमयः कायो जज्ञे तमनुमोदये ॥ ५७ ॥ जिनस्ना-
नेषु पात्रेषु दैवादुपकृतो भवेत् । यो मे जलमयः कायः प्रायस्तमनुमोदये ॥५८॥ धूपाङ्गारे च दीपे च जिनानां पुर एव
यः । मम तेजोमयः कायो जातस्तमनुमोदये॥५९॥धूपोत्क्षेपेऽर्हतां सङ्घे श्रान्ते वा तीर्थवर्त्मसु । यो मे वायुमयः कायो
वबौ तमनुमोदये ॥ ६० ॥ मुनीनां पात्रदण्डेषु जिनार्चाकुसुमेषु च । मम द्रुममयः कायो योऽभूत्तमनुमोदये ॥ ६१ ॥
क्वापि सत्कर्मयोगेन जिनधर्मोपकारकः । आसीत्त्रसमयः कायो यो मे तमनुमोदये॥६२॥इत्यनन्तभवोपात्तं दुष्कृतौघम-
गर्हत । कदाचिन्न्यचितं किंचित्सुकृतं चान्वमोदत ॥६३॥ शरणं तीर्थकृत्सिद्धसाधुधर्मा भवन्तु मे । इत्यालापपथः सोऽथ
चतुःशरणमाश्रितः॥६४॥परित्यक्तनिदानोऽसौ मृत्युजीवितनिःस्पृहः । भवमोक्षनिराकाङ्क्षः समाधिं साधुरासदत्॥६५॥

वारं वारं नमस्कारानुस्मरन्परमेष्ठिनाम् । गतप्रमादो निस्तापः प्राप साधुरयं लयम् ॥ ६६ ॥ एवं समाधिलब्धस्य मृत्यो-
र्यामममंसिदन् । पूर्णमासोपवासोऽयं प्रपेदे प्राणतं दिवम् ॥६७॥ सुरश्चन्द्रप्रभासाख्ये विमानेऽतिमहर्द्धिकः । अन्तर्मु-
हूर्तात्संपूर्णसर्वाङ्गो दिव्यमयः ॥ ६८ ॥ तल्पप्रच्छादनं प्रातः संध्याकालमिवार्यमा । उत्सार्याविरभूदेष प्रभाप्राग्भारभा-
सुरः ॥६९॥ युग्मम् ॥ कैः पुण्यैरियमुत्पन्ना ममर्द्धिरिति विस्मितः । अवधिज्ञानविज्ञातं प्राग्भवं सोऽन्वमोदत ॥७०॥
सविमानपरीवारः सुरवारस्तदोत्सवान् । चकार तत्पुरः स्फारस्फुरज्जयजयारव ॥ ७१ ॥ नाथ नस्त्वमनाथानां नाथः
पुण्यैः प्रकल्पितः । चिरं जय चिरं जीव चिरं पाह्यनुजीविनः॥७२॥इत्यादिवादी देवानां देवीनां च समुच्चयः । तं ननाम
सतेने च पञ्चशब्दोदयं मुदा ॥७३॥ रत्नपुञ्जमयल्यः पल्यङ्कादुत्थितस्ततः । कृतवैक्रियरूपर्द्धिः क्रीडावापीमवाप सः॥७४॥
मग्नो स तत्र विक्षोभोल्लोलकल्लोलपाथसि । तन्मुखालोकनव्रीडामग्नहेमपयोरुहे ॥ ७५ ॥ दृष्ट्वा सुरविधेयानां निधानं
सोऽत्र पुस्तकम् । भक्त्या विमानचैत्यस्थं नित्यार्हन्तमपूजयत् ॥७६॥ सिंहासनं विमानश्रीकिरीटमभिभूष्य सः । अथा-
नन्दोर्मिमग्नाक्षो दिव्यं प्रेक्षणमैक्षत ॥ ७७ ॥ कदापि केलिवापीषु कदाचिन्नन्दने । वने । विललास स कान्ताभिर्नि-
काम इव मूर्तिमान् ॥७८॥ कदाचिज्जिनयात्रासु विजहार महामरैः । कदाचिन्निर्ममे धर्मक्षेत्रे सत्पुरुषस्तुतीः ॥ ७९ ॥
भविष्यज्जिनमाथोरथैः वपुरंशुभिरद्भुतैः । जगज्जिन्द्रानपि ययौ जिनकल्याणिकेषु सः ॥८०॥

इत्थं प्रतिक्षणविनिर्मितदेवकृत्यो, नित्योत्सवैः प्रविलसन्भृशमप्रमत्तः ।
आलोलमौलिमुरमण्डलकर्णदोला-केलीसुखस्फुरितपाक्चरित्रकीर्तिः ॥ ८१ ॥

अभ्यर्णतीर्थविसुलाविभवेषु लुभ्य-न्नभ्यापतच्च्यवनकालशुचाप्यचान्तः ।
आह्लादनत्विषि महामहिमा विमाने, तस्मिन्नसौ रसमयं समयं निनाय ॥ ८२ ॥

इति दण्डाधिपतिश्रीमदाह्लादनसमभ्यर्थितश्रीविजयसिंहसूरिशिष्यश्रीवर्धमानसूरिविरचिते श्रीवासुपूज्यचरित आह्लादनाङ्के महाकाव्ये तीर्थंकरकारणलब्धिवर्णनो नाम द्वितीयः सर्गः ॥

---

## ॥ अथ तृतीयः सर्गः ॥

इतश्च संख्यातीताब्धिद्वीपमण्डलवेष्टितः । द्वीपोऽस्ति जम्बूद्वीपाख्यो रत्नजम्बूद्रुमाङ्कितः॥१॥ स्फुरन्तौ परितो यिभ्रद्दौ रवी द्वौ हिमच्छवी । स्वर्णभूभृद्धभौ यत्र चतुर्यामिकवानिव ॥ २ ॥ अन्तर्मेरुमणिस्तम्भां धर्मरक्षाविधौ बुधः । यः सदा विजयश्रेणिं वीरः फलकवद्दधौ॥३॥कुप्यन्तो यः स्फुटक्षारो जलमूर्तिर्मलीमसः । रारटीति लुठन्भूमौ सिन्धुर्येन बहिःकृतः ॥४॥ तत्रास्ति भारतं क्षेत्रं षड्भूखण्डानि यद्दधौ । षण्मन्त्रमण्डलानीव रक्षितुं षड्विधात्मनः ॥५॥ अवनीवनिताभाल-

गम्भीलागिनन्दशि । यत्र श्रीमन्दरेखेव राजते राजतो गिरिः ॥ ६ ॥ इहास्ति हास्तिकस्तोममदार्द्रीभूतभूतला । संलग्नांतादिनस्वर्गकन्या चम्पाभिधा पुरी॥७॥कृतपापविपर्यासाः प्रासादा। काममर्हताम् यस्यां पताकाजिह्वाग्रैर्लिहन्तीव गुणाकरम् ॥८॥ यस्यामनुपमानोऽपि सोपमानोऽभवज्जनः । मणिमन्दिरभूमीषु स्वैरेव प्रतिबिम्बितैः ॥९॥ निर्निमेषा मिथो रूपदर्शनादत्र तिप्रजाः । धर्मक्षेत्रे यमुर्यत्र स्वर्गपौरा इवागताः॥१०॥रत्नकुम्भा धृताः प्रोच्चैर्यत्र चैत्यैः सतां पुरः । मोहपान्तहो दीपा इव मोक्षाध्वदर्शने॥११॥इक्ष्वाकुकुलगजीवलक्ष्मीसंजीवनौषधम् । तत्र प्रतापोष्णवसुर्वसुपूज्योऽभवन्नृपः॥१२॥शोषिता यत्प्रतापेन द्विषतां शौर्यवल्लयः । पत्रैरिवासिभिर्भ्रष्टै रणारण्यमपूरयन्॥१३॥ कामधुग्दुग्धनिर्मिते निन्नामणिशिलातले । कल्पद्रुकुसुमाकीर्णे यशनश्रीर्नटत्यहो ॥ १४ ॥ नित्यं यदीयधनस्य वर्धमानस्य सर्वतः । नैवश्रियः स्म नन्वन्ति न्युञ्छनानि ध्वजाञ्चलैः ॥ १५ ॥ निःसृतां रणरेणुभ्यः स्नातामर्यिमुदश्रुभिः । चैत्यधूपनधूमैर्यः श्रियं कीर्तिमधूपयत्॥१६॥तस्याग्रमहिषी जज्ञे स्वर्गस्त्रीजयिनी जया । जितं भासेव वक्त्रेन्दोर्नासीद्यस्याः स्मितं बहिः ॥१७॥ त्रैलोक्यस्त्रीजयप्राप्तपताकात्रितयोपमम् कम्बुकम्र्या ध्रुवं कण्ठस्तस्या रेखात्रयं दधौ ॥१८॥ अङ्गुलीपल्लवोल्लासिनखांशुकुसुमाश्रितम् । असेवि भृङ्गदम्भैर्यस्या बाहुलतायुगम् ॥१९॥ काञ्चीपट्टो नितम्बेऽस्ति मदधःस्थेऽपि नो मयि । इतीव दुःखितस्तस्या मध्यदेशः कृशोऽभवत् ॥ २० ॥ अब्जे एव क्रमो यस्या न हंसो यदसेवत । गतिनिर्जयलज्जैव जानीमस्तत्र कारणम्॥२१॥मत्स्यन्तःपुरे तस्यां रेमे क्ष्मापतिमानसम् । लक्ष्ये नक्षत्रलक्षेऽपि चक्षुश्चन्द्रतनौ व्रजेत्॥२२॥ तस्य विश्रम्भतामर्तुः प्रतापमिव सेवितुम् । एकदागच्छदुष्णोष्मा ग्रीष्मोऽत्युग्रत्वलक्षयः ॥ २३ ॥ हेलया कवलीकृत्य

सकलामपि यामिनीम् । स्वाद्वैतमिव निर्मातुमवर्धत दिनोदयः ॥ २४ ॥ प्रतापाधिक्यमालोक्य क्षिपतो दिवसेशितुः । दुःखादिव कृशीभावमभजन्त भृशं निशाः ॥२५॥ सरोवरसरिद्वारिशोषे तोयेन कृपणाः । विश्वोपकारसाम्राज्यात्याजु-रापस्तुपारताम्॥२६॥ आकर्षन्ति ध्रुवं वारि करा भानोर्धरातलात् । जलैः क्लिन्नानि यत्सद्यादद्यान्यद्भूतो घनः ॥२७॥तथा तपनतापेन च्छायापि हि महीरुहाम् । ययौ मध्यंदिने मूलमालवालाम्बुशीतलम् ॥२८॥ यस्तसैः शान्तये सेव्यः सोऽपि तसो मरुत्वौ । इति भूयो हिमश्वासमियामर्त्ति न सोऽमुचत् ॥२९॥ तदा च पूरयित्वायुः सागरोपमविंशतिम् । ज्येष्ठे नवम्यां शुक्लायां चन्द्रे शतभिषग्गते ॥ ३० ॥ स प्राणताज्जयाकुक्षिं प्राप पद्मोत्तरामरः । शुक्तिं मुक्तोद्भवमयः पयःकण इवाम्बुदात् ॥३१॥ युग्मम् ॥ तदालयद्भुतसंभूतमर्मभित्तिमनोरमे । नीलाश्मस्तम्भावष्टम्भरत्नपाञ्चालिकाञ्चिते ॥३२॥ वर्तुलामलमुक्तावचूलितोल्लोचमञ्जुले । अस्तोकालोकमाणिक्यदीपध्वस्ततमस्तमे ॥३३॥ उत्फुल्लमल्लिकापुष्पप्रकरामोद-संपदि । दह्यमानाध्यकस्तूरीकर्पूरागुरुधूपने ॥३४॥ शोभाभिभूतजम्भारिविमाने वासवेश्मनि । दुकूलास्तीर्णमतूलातु-ल्यपल्यङ्कसंश्रया॥३५॥ सर्वसौख्यमयस्वल्पनिद्रामुद्रितलोचना । अतिव्यक्ताञ्जयादेवी स्वप्नानेतानवैक्षत॥३६॥ पञ्चभिः कुलकम् ॥ मत्स्वामिसेव्यस्त्वत्सूनुरयं देवि भविष्यति । इतीवाख्यातुमायातं सैरावतमलोकत ॥३७॥ क्षमाभारवहो मह-द्भावी ते देवि नन्दनः । इतीवाग्रे स्थितं साक्षाद्द्राक्षीद्वृषभं जया ॥३८॥ त्वत्सूनुर्दर्पमत्तेभं हन्तायं मदद्विलय । विज्ञा-पकमिवैक्षिष्ट सुमुखी नखरायुधम् ॥ ३९ ॥ त्वत्सूनुमाश्रिताया मे देवि चापलदूषणम् । यास्यतीतीव विजल्पी प्रासां लक्ष्मीं ददर्श सा ॥४०॥ देवि त्वन्नन्दनो मयज्ञावी सत्कीर्तिसौरभः । इति व्याख्यापिनीमग्रे मापद्यत्कुसुमस्रजम्॥४१॥

प्रभोः ॥५९॥ आवासे वसुपूज्यस्य द्वात्रिंशत्रिदशेश्वराः । आगत्य स्तवनं चक्रुर्गर्भस्थस्य जिनेशितुः ॥६०॥ युग्मम् ॥ जय त्रिभुवनाधीश ज्ञानत्रयनिकेतन । गर्भस्थोऽपि सतां तुष्टयै घनान्तर इवांशुमान्॥६१॥भवाम्भोधेः परं पारमिवान्त्यं गर्भमाश्रितः । कस्य नाश्रयणीयोऽसि जगत्रितयतारक॥६२॥जय देवि नमस्यासि यस्याः कुक्षौ जगत्पतिः । कल्पद्रुर्यत्र जायेत सा स्तुत्या वनभूरपि ॥६३॥ स्त्रीषु त्वमेव धन्यासि जननी या जिनेशितुः । पूर्वैव श्लाघ्यते दिक्षु यस्यामुदयते रविः॥६४॥जिन तज्जननीं चेति स्तुत्वा नत्वा च भक्तितः॥पुष्पबन्धुरगन्धाम्बुवृष्टिविस्तारचारवः॥६५॥नन्दीश्वरवरे कृत्वा स्पष्टमष्टाह्निकोत्सवम् । धन्यमन्या दिवं जग्मुः सर्वे गीर्वाणपुङ्गवाः॥६६॥युग्मम्॥स्वप्नेष्विन्द्रेषु चागत्याप्यतृप्त इव भानुमान् । प्रभोः कल्याणि [ण] के प्राप्तः पुनरप्युदयच्छलात् ॥ ६७ ॥ तदावतीर्णमालोक्यान्तरध्वान्तभिद विभुम् । तमो बाह्यमपि त्रस्तं निःशङ्काः कश्मलाः क नु॥६८॥विज्ञायेव प्रभोराद्यं कल्याणिकमहोत्सवम् । राजीविन्यो जगुर्भृङ्गनिनादैर्नृत्तुर्दलैः ॥६९॥ गुणिभ्योऽपि वत्र दोषाकरेच्छा इति लज्जया । सन्यमीलन्कुमुद्वत्योऽवतीर्णे ज्ञानिनि प्रभौ ॥७०॥नाथेऽवतीर्णे निर्वाणद्वारोद्घाटनसूचकाः । कपाटा उद्घटन्ते स्म धर्मस्थानेषु सर्वतः ॥७१॥ त्रैलोक्यैकप्रदीपेऽस्मिन्नवतीर्णे सति प्रभौ । लज्जयेव भवन्ति स्म विच्छाया गृहदीपकाः ॥ ७२ ॥ भविष्यति प्रभोर्धर्मव्याख्या पीयूषवर्षणी । क्षीणः प्रागेव चक्राणां विप्रयोगहुताशनः॥७३॥भूपः श्रीवसुपूज्योऽथ कृतप्राभातिकक्रियः । नभोभागं यथा भानुः सभाभाग व्यभूषयद् ॥७४॥ जानन्नपि जिनेन्द्रस्यावतारं वासवोत्सवैः । पर मुहुः कृता वार्ता प्रियाप्रित्यै भवेदिति ॥७५॥ तूर्णमानीय सन्मान्य स्थापितैः स्वप्नकोविदैः । व्याख्यापयन्नृपः स्पष्टदृष्टान्स्वप्नांश्चतुर्दश ॥७६॥युग्मम्॥अथैते प्रथितास्च-

प्रसन्नाननाम्भोरुहशोभिताः । विचार्य निरमन्योन्यमुखे रोमाञ्चिता जगुः॥७७॥स्वामिन्नेकैकमप्येषु स्वप्नेषु स्वप्नमीक्षते ।
या काचित्स्त्री प्रसूते सा तनयं मनयं नृपम्॥७८॥ एतेषु वीक्षते क्ष्माप या तु स्वप्नचतुष्टयम् । सीरिणं वैरिणां शल्यम-
तुल्यं जनयत्यसौ ॥७९॥ या पुनः पश्यति स्वप्नान्सप्तैतेषु नृपेश्वर । भरतार्धस्य भोक्तारं सा सारं जनयेत्सुतम् ॥८०॥
चतुर्दशाप्यमून्स्वप्नान्या पश्येत्किल स्फुटान् । सा प्रभो प्रमदा सूते नन्दनं चक्रवर्तिनम् ॥८१॥ इयं पुनर्जयादेवी स्फु-
टानेतानलोकत । तदयं त्रिजगन्नाथं सा जिनं जनयिष्यति ॥८२॥ यद्देव्या ददृशे दन्ती चतुर्दन्तीशुभाननः । तच्चतुःशु-
क्लधर्मोपदेष्टास्या भविता सुतः ॥८३॥ गमिष्यति सुतो देव्या वृषभस्य निरीक्षणात् । क्षेत्रेऽस्मिन्भारते बोधिबीजवाप-
निमित्तताम्॥८४॥ मृगेन्द्रमार्गणाद्देव्या नन्दनः पालयिष्यति । दुःकर्मकरिभिर्भज्यमानान्भव्यवनस्पतीन्॥८५॥ एतस्याः
साभिषेकश्रीदर्शनान्नन्दनः पुनः । सांवत्सरं ददान श्रियं पुण्यां करिष्यति ॥८६॥ अमुष्या भविता सूनुः प्रसूनस्रगवि-
लोकनात् । सुरासुरनराधीशैर्मौलौ धृतपदः सदा ॥८७॥ पूर्णेन्दुदर्शनाद्देव्या नन्दनो नेत्रनन्दनः । दास्यते वीतरागात्मा
नित्यं कृपालये मुदम् ॥८८॥ मार्तण्डमण्डलालोकात्सूनुरस्या भविष्यति । मार्तण्डमण्डलाखण्डभामण्डलविभूषणः॥८९॥
ध्वजस्य दर्शनाद्देव्यास्तनुजन्मा तनिष्यते । स्वं प्रमुख पुरःस्फूर्जद्दिव्यधर्मध्वजश्रिया ॥९०॥ कलशालोकनात्पुत्रः सुपू-
र्णोऽस्याः करिष्यति । उत्कृष्टोऽग्रयसद्धर्मप्रासादशिखरस्थितिम् ॥९१॥ विहरिष्यति पुत्रोऽस्याः कमलाकरदर्शनात् ।
सुरसंचारितस्वर्णसरोजस्थापितक्रमः ॥९२॥ गम्भीरस्तनयो देव्या रत्नाकरनिरूपणात् । केवलालोकरत्नस्य स्थानमर्ह-
न्भविष्यति॥९३॥ विमानवीक्षणात्पुत्रो जयादेव्या भविष्यति । वैमानिकनिकायानां स्वर्गोद्धारकारणम्॥९४॥ भवि-

ष्यति कुमारोऽस्या रत्नजालनिभालनात् । उदाररत्नप्राकारमध्यसद्धर्मदेशनः ॥९५॥ सुतोऽस्या भविता भास्वद्वैश्वानर-
निरीक्षणात् । भव्यलोकात्मकल्याणशुद्धिनिर्माणकारणम् ॥९६॥ दृष्टाश्चतुर्दश स्वप्ना यद्देव्या तत्तदङ्गजः । स चतुर्दश-
रज्ज्वात्मलोकाग्र्यं पदमाप्स्यति ॥ ९७ ॥ एवं निशम्य रम्यं तन्नृपः कर्णामृतं वचः । ददौ दुकूलताम्बूलाद्यपारं पारि-
तोषिकम् ॥ ९८ ॥ सभालोकं विसृज्याथ पृथ्वीनाथो यथोचितम्। सनाथं श्रीजयादेव्या जगामान्तःपुरं मुदा ॥ ९९ ॥
अथोत्थाय स्वयं देव्या सज्जितं विष्टरं नृपः । अलंचक्रे ततः सापि प्रियादेशादुपाविशत् ॥१००॥ रोमाञ्चिततनोर्देव्याः
पुरः स्फुरितसंमदः । नैमित्तिकोपदिष्टानि जगौ स्वप्नफलानि सः ॥१॥ इदं ते कथितं नाथ भूयादवितथं वचः। इत्युक्त्वा
शैखरीचक्रे करौ सा कमलेक्षणा ॥२॥ इत्थं पुत्राश्रितैः प्रीतिभाषितैर्भर्तृभार्ययोः । दिनाः कालकलामाना जग्मुः सौख्य-
मया रयात् ॥३॥ गर्भस्याद्भुतमाहात्म्यादाधिव्याधिभयव्यथाः । तस्या अङ्गे तथा द्रङ्गे न बभूवुस्तदा कचित् ॥४॥ प्रभोः
प्रभावतस्तस्याः सौधस्याजिरमादरात् । मार्जयांचक्रिरे वायुकुमार्यो वर्यभक्तयः ॥ ५ ॥ अभ्यषिञ्चंस्तदम्भोदकुमार्यो
गन्धवारिभिः । ऋतुदेव्यो मुदा पुष्पप्रकारानकिरन्निह ॥६॥ व्यन्तर्यस्तत्तनुशुश्रूषां किंकर्य इव चक्रिरे । ज्योतिष्कयोषितो
रत्नमयादर्शमदर्शयन् ॥७॥ कारयांचक्रिरे क्रीडां हृद्यां विद्याधरस्त्रियः । कामं किन्नरकामिन्यो गीतिरीतिं वितेनिरे ॥८॥
चतुर्भिः कलापकम् ॥ क्लिश्यतामर्हतो माता मा तापैर्मङ्क्षुवैरिति । तदा कादम्बिनीवृन्दान्तरस्तरणिरस्फुरत् ॥९॥ जिना-
धिपजनिस्नानादासन्ना मे पवित्रता । इति हर्षादिवानृत्यद्बुबैरम्बु तदाम्बुधेः ॥१०॥ उदेष्यति जिनाधीशो दिनाधीशो-
ऽरुणोदयः । पुष्पितैः पादमारामैर्बभूव भुवने तदा ॥११॥ जिनेन्द्रजननीपादस्पर्शात्पावनमानिनी । वालावर्तरजोव्या-

नाट्यमुतेन ननर्त भूः ॥ १२ ॥ गायन्तं मल्लिकाभृङ्गैः क्षिप्त्वाग्रीष्मं तमालयः । स्वामिमातुर्मुदे मेघमर्दलीघमघोषयत्
॥१३॥ तेजस्विभृद्गमी गाढतालाररनाहूमिति ध्रुवम् । जयादेव्यास्तडिद्भिर्यौराराग्निकमिवाकरोत् ॥१४॥ वृष्टिसिक्ता
धूमं धूपधूमं पावैः सुगन्धिभिः । देव्या द्रक्षगर्भाया रत्नगर्भाप्युदक्षिपत् ॥ १५ ॥ निवार्य वार्धिवीचीनामुच्चैः
कोलाहलं दिशः । जयादेवीं स्तुवन्ति स्म केकिकेकारवैरिव ॥१६॥ आनीतमन्द्वैर्हत्याःधेर्यापुश्चैव नदीरयैः । धरार्थ
परागः स्वामिप्रन्यासन्येव भर्मवित् ॥१७॥ सुमनोभिः कृतो जातिकदम्बनवकेतकैः । एव्यते त्रिजगन्नाथे भृङ्गीगीते-
स्विर्गोत्सवः ॥ १८ ॥ तापशान्तिप्रशालायास्तदा तादृक्सुतोचिताः । आमन्देव्या मुदा बद्धसौहृदा दोहदा हृदि
॥१९॥ एल त्रिभुवनस्यापि स्वामिनः प्रणमन्तु माम् । दौःस्थ्यच्छेदनिदानं च ददे दानं जगन्मुदे ॥२०॥ कुर्वे वात्स-
ल्यतः शर्म धर्मनिर्मलवृत्तिषु । जगत्त्रयभयाभोगमङ्गमङ्गीकरोमि च ॥ २१ ॥ इत्येषु पूर्यमाणेषु दोहदेषु चलित्रिपा ।
प्रमोदेन समं देव्याः स गर्भो ववृधे क्रमात् ॥५२॥ त्रिभिर्विशेषकम् ॥ यथाभ्रकगृहे क्रोडपरिक्रीडिनि दीपके । स्त्रियाः
स्वच्छांशुकं मध्यस्थिते चूडामणौ यथा ॥२३॥ अभिप्राये स्फुरन्तः सुकवीनां यथा वचः । तथा गर्भस्थिते देवे तदङ्ग
दिद्युतेऽधिकम् ॥२४॥ युग्मम् ॥ संतोषैकस्वभावस्य संसर्गेण प्रभोरिव । अत्यासक्तिं वितेनेऽसौ मधुरेऽपि न भोजने
॥ २५ ॥ आनन्दस्मितकान्त्येव निर्यान्त्या रोमकूपकैः । कलयामासतुस्तस्याः कपोलौ धवलां कलाम् ॥ २६ ॥ देव्याः
प्रमोऽपि पुत्रस्य स्याद्युग्मामृतपानकृत् । विश्वस्वामी न नौ पातेत्यस्याः श्यामाननौ स्तनौ ॥२७॥ विश्वैश्वर्येऽप्यनौ-
द्धत्यभाजः सूनोर्गुणादिव । तस्या निगूढगर्भाया नौद्धत्यमुदरं दधौ ॥२८॥ सदयो मे सुतस्तन्मा क्षितेः खेदो भवत्विति ।

मन्दं मन्दं चचालासौ देवी गर्भभरालसा ॥२९॥ प्रवृत्तेऽथ जयादेव्याः सीमन्तोन्नयनोत्सवे । सिञ्जानहंसमञ्जीरा नृत्य-
न्तीवाययौ शरत् ॥३०॥ अम्भांसि निर्मलीभूयात्मानमब्जैरवासयन् । भाविन्यर्हज्जनिस्नाने गृह्णन्त्वस्मान्सुरा इति ॥३१॥
कीराणां पङ्क्तयो व्योम्नि विलेसुस्त्रिदशैरिव । जिनेन्द्रजन्मने सज्जीकृता वन्दनमालिका ॥ ३२ ॥ शान्ततापं जगत्कृत्वा
जिनमातुर्मुदेऽम्बुदाः । श्यामताममुचन्नुच्चैरुद्यत्सुकृता इव ॥ ३३ ॥ ईतिमुक्तमभिव्याप्तं सहस्रगुणितैः फलैः ।
सस्यमन्तर्जगदभूत्प्रभूत्पत्त्यनुभावतः ॥३४॥ आदाय गोपीरूपाणि गोपीवर्गं सुरस्त्रियः । शालिक्षेत्रेषु तीर्थेशगुण-
गीतान्यशिक्षयन् ॥३५॥ गर्भस्थितदिनाधीशा मेघलेखेव शारदी । पाण्डुप्रभाप्यद्भुतश्रीः प्रभुगर्भा बभौ जया ॥३६॥
आसीदल्पर्हदास्यश्रीदासभावोऽधुना मम । इतीव कलयामास नैर्मल्यातिशयं शशी ॥३७॥ त्रैलोक्यभूषणेनास्मि नन्द-
नेनैव भूषिता । तत्किमेभिरितीवाल्पीचक्रेऽङ्गेभूषणानि सा ॥३८॥ विभौ गर्भावतीर्णेऽस्मिञ्शक्रादेशाद्धनेश्वरः ।
पूरयामास सद्वासःस्वर्णरत्नैर्नृपालयम् ॥३९॥ अथ मध्ये जयादेव्या गुरुगर्भोष्मशान्तये । ढौकयञ्शतपत्राणि हेमन्तः समु-
पागमत् ॥४०॥ एष्यतीह ममारातिरर्हन्निति भियाङ्गिनाम् । हृद्वयो बहिरभूद्रागः कुङ्कुमालेपनलच्छलात्- ॥४१॥
समजायन्त यामिन्यो महामहिमभाजनम् । युक्तं महत्त्वं स्त्रीजातेर्जयागर्भगतेऽर्हति ॥४२॥ मत्वा जिनार्कतो लोके
भाविनो दिवसान्गुरून् । लज्जयेव लघूचक्रे वासरान्वासरेश्वरः ॥४३॥ जन्मस्नात्रेऽर्हतः प्राप्ते धिग्धिग्निन्नतरं सुराः ।
मां मदीज्यन्ति नेत्याप तापं कूपोदरे पयः ॥४४॥ मय्युत्पत्तिर्जगद्भर्तुर्भवितेति मदोद्धतः । शिशिरोऽथ ऋतून्सर्वा-
न्दृश्यकुन्दरवोऽहसत् ॥४५॥ प्रभुप्रभाब्धिरधुनाभ्येष्यतीतीव भक्तितः । विनीतैरङ्कचन्द्रार्कैः प्रभाल्पत्वमतन्यत ॥४६॥

अवतीर्णेषु तीर्थेशपादेषु पृथिवीतले । का श्रीरस्माकमित्यज्ञैः पूर्वमेव व्यलीयत ॥४७॥ तदा मे का गतिर्लोकः पाता-
लं शरणं ययौ । इति ध्यानादिव स्तम्भमम्भः प्राप हिमोद्गमे ॥४८॥ जिनजन्मोत्सवे स्वर्गद्रुदलैस्तोरणास्रजम् ।
सुराः कर्तुं इत्युग्रां सुगन्धानि मकरन्दैः ॥४९॥ क्रियमाणासु रक्षासु देव्या वृद्धाङ्गनाजनैः । नव मासा व्यतिक्रान्ताः
सार्धाष्टमदिनास्तदा ॥५०॥ अथ कृष्णचतुर्दश्यां निशीथे मासि फाल्गुने । चन्द्रे शतभिषग्वर्तिन्यूरुस्थमहिषध्वजम् ॥५१॥
असूत नन्दनाम्भोजभवं भुवनभूषणम् । रत्नं रोहणभूमीव जयादेवी जिनाधिपम् ॥५२॥ युग्मम् ॥ तदा कोऽपि प्रका-
शोऽभवद्धि दुर्गतिभूमिषु । निखिलानां सुखं जज्ञे नारकाणामपि क्षणम् ॥५३॥ अस्माकमयमीशोऽभूद्देशेषगुणसागरः ।
इत्यानन्दवशेनेव दिशः प्रापुः प्रसन्नताम् ॥ ५४ ॥ ववुः प्रदक्षिणावर्ताः कुसुमश्रीविमिश्रिताः । तन्वन्तः इव मङ्गलि
जागरूणा जगत्प्रभोः ॥५५॥ आख्यातुमिव विश्वेषु प्रभोर्जन्ममहोत्सवम् । घनगम्भीरनिर्घोषा नेदुर्दुन्दुभयोऽम्बरे ॥५६॥
प्रभुपादाम्बुजस्पर्शपवित्रं पृथिवीतलम् । पूजयन्त्विरिवामर्त्याश्चक्रिरे पुष्पवृष्टयः ॥५७॥ मत्वासनप्रकम्पेनावधिज्ञानात्प्रभो-
र्जनिम् । अष्टाजग्मुरधोलोकवासिन्यो दिक्कुमारिकाः ॥५८॥ भोगंकरा भोगवती सुभोगा भोगमालिनी । तोयधारा
विचित्रा च पुष्पमाला त्वनिन्दिता ॥५९॥ नत्वा स्तुत्वा न भेतव्यमित्युदीर्य च ता इमाः । जिनजन्मोत्सवं देव्यै
स्यागतौ हेतुमभ्यधुः ॥६०॥ युग्मम् ॥ सहस्रस्तम्भमातेनुरैशान्यां प्राङ्मुखं दिशि । ताः सूतिसदनं वातपूतयोजनभूत-
लम् ॥६१॥ देवि त्वमेव धन्यासि यस्याः सूनुर्जगद्गुरुः । इत्यादिगीतगायिन्यस्ताः प्रभोः परितः स्थिताः ॥६२॥
पीठकम्पात्प्रभोर्जन्म मत्वा मेरुनिकेतनाः । मुदिता दिक्कुमार्योऽष्टावूर्ध्वलोकादिहाययुः ॥६३॥ मेघंकरा मेघवती सुमेघा

मेघमालिनी । सुवत्सा वत्समित्रा च वारिषेणा बलाहका ॥ १६४ ॥ इमा जिनं च देवीं च नत्वा योजनसंमिताम् । धरां गन्धोदकैः सिक्त्वा पुष्पवृष्टिं वितेनिरे ॥ १६५ ॥ युग्मम् ॥ ईयुरासनकम्पेन ज्ञात्वा जन्म जिनस्य तत् । पौरस्त्यरुचकादष्टौ दिक्कुमार्यः सदर्पणाः ॥ १६६ ॥ ताश्च नन्दोत्तरानन्दे आनन्दानन्दवर्धने । विजया वैजयन्ती च जयन्ति चापराजिता ॥ १६७ ॥ एताः प्राच्यां दिशि स्थित्वा नत्वा मातृयुतं जिनम् । जगुर्जगन्मनोज्ञानि गीतानि प्रीतचेतसः ॥ १६८ ॥ अपाच्यरुचकात्पीठप्रकम्पेनाययुस्ततः । दिक्कन्या अष्टभृङ्गारशृङ्गारितकराम्बुजाः ॥ १६९ ॥ समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा । लक्ष्मीवती शेषवती चित्रगुप्ता वसुंधरा ॥ १७० ॥ युग्मम् ॥ एताः प्रणम्य तीर्थेशं तीर्थेशजननीमपि । स्फीतगीतकलादत्ता दक्षिणस्यां दिशि स्थिताः ॥ १७१ ॥ प्रतीच्यरुचकादष्टौ दिक्कन्याः पीठकम्पतः । आययुर्व्यजनाभोगभ्राजिष्णुकरपङ्कजाः ॥ १७२ ॥ इलादेवी सुरा देवी पृथिवी पद्मवत्यपि । एकनासा नवमिका भद्रा शीतेति नामतः ॥ १७३ ॥ जननीसहितं नत्वा त्रैलोक्यमहितं जिनम् । पश्चिमायां दिशि प्रीता गीतामृतमुचः स्थिताः ॥ १७४ ॥ उदीच्यरुचकादष्ट विष्टरस्य प्रकम्पतः । दिक्कुमार्यः समाजग्मुश्चञ्चच्चामरचारवः ॥१७५॥ अलम्बुसा सुकेशी च पुण्डरीका च वारुणी । हासा सर्वप्रभा चैव श्रीर्हीरित्यभिधानतः ॥ १७६ ॥ नत्वा मात्रा समं मात्राधिकभक्तिभराः प्रभुम् । तास्तस्थुरुत्तराशायामुत्तरोदारगीतयः ॥ १७७ ॥ ईयुश्चतस्रो दिक्कन्या विदिग्भ्यः पीठकम्पतः । सुतारा चित्रकनका चित्रा सौत्रामणी तथा ॥ १७८ ॥ दीप्रदीपकरा नत्वा स्वामिनं स्वामिनीमपि । गीतामृतभृतस्तस्थुरैशान्यादिविदिक्षु ताः ॥१७९॥ दिक्कन्या मध्यरुचका चतस्रः पीठकम्पतः । रूपा रूपासिका चेयुः सुरूपा रूपवत्यपि ॥ १८० ॥

नालं धान्यस्य तादिगराः चतुरङ्गुलवर्जितम् । रत्नयुक्तं निखन्योर्व्यामत्र दुर्वामरोपयन् ॥ १८१ ॥ त्रीन्मूलसौधतः पूर्वदक्षिणोत्तरदिक्षु ताः । रम्भागृहांश्चतुःशालसिंहासनयुतो व्यधुः ॥ १८२ ॥ ता दक्षिणचतुःशालपीठे देव्या जिनस्य च । अभ्यङ्गोद्वर्तनं दिव्यतैलेनोद्वर्तनकैर्व्यधुः ॥ १८३ ॥ उभौ संलप्य संमार्ज्य प्राक्चतुःशालविष्टरे । ता दिव्यचन्दनै दिव्यवस्त्राभरणभूषणैः ॥१८४॥ एत्योत्तरचतुःशाले मथितारणिवह्निना । हुतैःक्षुद्रहिमाद्रेस्ता द्रुतैर्गोशीर्षचन्दनैः ॥१८५॥ तयोः शान्तिकमाधाय भद्रपीठप्रतिष्ठयोः । व्यक्तभक्तिविधौ दक्षा रक्षापोट्टलिकां व्यधुः ॥ १८६ ॥ युग्मम् ॥ पर्वताग्रभवेन्मुक्ता कर्णाभ्यर्णे प्रभोः स्थिताः । आस्फालयांबभूवुस्ता हस्ताभ्यां ग्रावगोलकौ ॥१८७॥ सूतिधाम्नि जिनेन्द्रं च जिनेन्द्रजननीं च ताः । आनीयाधाय शय्यायां गायन्त्यः परितः स्थिताः ॥१८८॥ समं घुघु तदा निलघण्टानामजनि ध्वनिः । विश्वप्रबोधनादैकनान्दीतूर्यरवोपमः ॥ १८९ ॥ आसनान्यचलन्नद्रिनिविडानि विडौजसाम् । व्याख्यान्तीव शिरःकम्पैर्जिनजन्मारम्भुतां भुवम् ॥ १९० ॥ अथैवं दर्शयत्योजः को मयीति क्रुधोत्कटम् । आत्तवज्रं सुधर्मेशं नत्वा सेनापतिर्जगौ ॥१९१॥ यत्नं विश्राम्यतु स्वामिन्वद कं हन्मि ते द्विषम् । इत्यस्य वाग्भिरुद्भूतसमाधिरवधीक्षणात् ॥१९२॥ परिज्ञाय प्रभोर्जन्म विलीनकोपबन्धनः । द्राग्मिथ्यादुःकृतं कृत्वामुञ्चत्सिंहासनं हरिः ॥ १९३ ॥ युग्मम् ॥ दत्त्वा पदानि सप्ताष्टौ प्रभुजन्मदिशं प्रति । नत्वा स्तुत्वा जिनं शक्रोऽलंचक्रे विष्टरं पुनः ॥ १९४ ॥ अथाहूय स सेनान्यं नैगमेषिणमादिशत् । जिनजन्मोत्सवं कर्तुमाकारय सुरानिति ॥ १९५ ॥ योजनप्रमितां घण्टां सुघोषेत्यभिधानतः । अवादयदयं घोषैर्गाम्भीर्यविपुलस्वरम् ॥ १९६ ॥ एतद्ध्वानादथैकोनद्वात्रिंशल्लक्षसंख्यया । विमानेषु प्रतिध्वाना घण्टानां

सर्वतोऽभवन् ॥ १९७ ॥ क्रीडासक्तास्ततः सर्वे सावधानाः सुराः स्थिताः। घण्टानादे च विश्रान्ते सेनानीरिति घुष्टवान् ॥ १९८ ॥ अमरा भारते क्षेत्रे जिनजन्मोत्सवे हरिः। गन्ता ततः प्रियायुक्ता एत त्वरितमेत भोः ॥१९९॥ अथ ते ॥ प्रथितानन्दा वृन्दारकसमुच्चयाः। देवीभिः सममाजग्मुर्जिनजन्मोत्सवेच्छया ॥ २०० ॥ पञ्चयोजनशत्युच्चं विमानं लक्षयोजनम् ॥ चक्रे संक्रन्दनादेशात्पालकः पालकाभिधम् ॥ २०१ ॥ स्तम्भैरङ्कुरितं कूजत्किङ्किणीभिः सकोकिलम् । मुक्तावचूलैः सत्पुष्पं पताकाभिः सपल्लवम् ॥ २०२ ॥ कलशैः फलितं रत्नप्रभाभिः सारसारणि । देवीभिः केलिशैलाढ्यं जालजालैर्निकुञ्जभृत् ॥ २०३ ॥तारतोरणमालाभिर्लोलदोलालिमालिनम् । किंचिद्गम्भीरपीठानामन्तरैर्दीर्घदीर्घिकम् ॥ २०४ ॥सुवर्णकेतनश्रीभिर्धूतपुष्परजोभरम् । तज्जङ्गमं महेन्द्रस्य लीलोद्यानमिवाबभौ ॥ २०५ ॥ चतुर्भिःकलापकम् ॥ तत्र तिस्रो व्यराजन्त रत्नसोपानराजयः । सहारोढुमिवेन्द्रस्य मनोवाक्कायसंपदाम् ॥ २०६ ॥ आरोहतस्त्रिसोपान्यां सुरांस्तत्तोरणैस्त्रिभिः । इत्थं करस्थितकरैर्नम्यः स्वामीत्यशिक्षयत् ॥ २०७ ॥ वर्तुलो मध्यभूभागस्तत्र चित्रप्रभो बभौ । जम्बूद्वीप इव स्वःश्रीशोभ्वरो जिनजन्मना ॥ २०८ ॥ स्वन्तस्तद्दर्शनेदेवीः स्थिता मूर्त्यन्तरैरिव । पाश्चालीदंधदस्यान्तर्जज्ञे प्रेक्षणमण्डपः ॥ २०९ ॥ चतुर्योजनपिण्डाष्टयोजनायामविस्तृतिः । शोभायाः केलिशैलाभा तत्राभूद्रत्नपीठिका । २१० ॥ चलश्रीनिश्चलीकारबन्धरज्जुसहोदरैः । रत्नसिंहासनं रेजे तदुपर्येकमंशुभिः ॥ २११ ॥ अर्धमौक्तिकदामालिवृतमौक्तिकदामभाक् । दिव्यश्चन्द्रोदयो वज्राङ्कुशभृत्तदुपर्यभूत् ॥ २१२ ॥ अन्तःपीठान्मरुद्यक्षत्र्यक्षकाद्यासु दिक्षुते । चतुरशीतिसहस्रेन्द्रसमसद्भद्रासनैः ॥ २१३ ॥ प्राच्यां दिश्यग्र्यदेवीनामासनान्यष्टरेजिरे । सहस्रा

प्रदिश्याग्नेय्यां चान्तःसभ्यदिवौकसाम् ॥ २१४ ॥ चतुर्दश सहस्राणि दक्षिणाशाविभूषणम् । आसनान्यभवन्नाकसदां
मध्यमभासदाम् ॥ २१५ ॥ पङ्क्तिःसभासदां स्वर्गवासिनामासनावलिः । षोडशानां सहस्राणां नैर्ऋत्यामभवद्दिशि
॥ २१६ ॥ सप्तसंख्यानि सप्तानां सेनापतिदिवौकसाम् । आशायां पाशहस्तस्य रेजिरे सिंहविष्टराः ॥ २१७ ॥ चतुर्भि
रधिकाशीतिः सहस्राण्यात्मरक्षिणाम् । औचित्येनासनान्यासन्परितो वासवासनम् ॥ २१८ ॥ विमानं विरचय्यैवं
त्रिदशैराभियोगिकैः । शक्रो विज्ञपयांचक्रे तदा तदधिरोहणे ॥ २१९ ॥ अन्यैर्नानाविमानालिवासिभिः स्वर्गवासिभिः
वृतं स्फुरन्निरम्भोज हंसैः पत्ररथैरिव ॥ २२० ॥ विकुर्व्याद्भुतरूपर्द्धिं स्वर्भूरः सपरिच्छदः । तद्विमानं समारोहद्रोह-
न्माङ्गलिकध्वनिः ॥ २२१ ॥ युग्मम् ॥ पुरुहूतः पुरोभूतदर्पणाद्यष्टमङ्गलः । महासिंहासनासीनस्तद्विमानमदीदिपत्
॥ २२२ ॥ तिर्यग्मार्गेण सौधर्मादुत्तरेण तदुत्सरत् । द्वीपं नन्दीश्वरं प्रापासंख्यद्वीपाब्धिलङ्घनात् ॥ २२३ तत्राग्नेय्यां
दिशि प्राप्य गिरिं रतिकरं हरिः ॥ संचिक्षेप विमानं तन्मानं साधुजनो यथा ॥ २२४ ॥ द्वीपान्द्वीपान्निक्रामन्क्रमत-
स्तच्च संक्षिपन् । एत्य चम्पेशसौधस्य ददौ तिस्रः प्रदक्षिणाः ॥ २२५ ॥ मुक्त्वा विमानमैशान्यां दिशि सूतिगृहं ततः
। स त्रिः प्रदक्षिणीकृत्यानमन्मातृयुतं जिनम् ॥ २२६ ॥ जन्मोत्सवं भवत्सूनोर्वयं कर्तुमिहागताः । न्यवेदयदिदं देव्यै
वाह्याहरकृते हरिः ॥२२७॥ दत्त्वासौ स्वापिनीं देव्या मुक्त्वात्र प्रतिमां प्रभोः । स्वयमात्तौ प्रभुं धर्तुमिवात्मानं पञ्चकम्
॥ २२८ ॥ गोशीर्षद्रवसौरभ्यभासुरेऽसौ सुरेश्वरः तीर्थंकरं करद्वन्द्वे पूर्व्यधारयदेकया ॥ २२९ ॥ छत्रं मूर्त्यैकया द्वाभ्यां
चामरे चामरेश्वरः । एकया तु पुरः स्थित्वाग्रीवं कुलिशं दधौ ॥ २३० ॥ नानाकरणैर्नानाकुतूहलमनोहरैः । जगामाथ

मल्लाधः सुरशैलं सुरैर्वृतः ॥ ३१ ॥ तच्चूलां दक्षिणेनाथं वने पाण्डकनामनि । अतिपाण्डुकम्बलायां शिलायाममल-
मयुतौ ॥ ३२ ॥ अपूर्वसंमदः पूर्वदिक्पतिः पूर्वदिग्मुखः । स्नानसिंहासनं भेजे शक्रः क्रोडीकृतप्रभुः ॥ ३३ ॥ युग्मम् ॥
इहान्तरे महाघोषाघण्टाघोषावबोधिनाम् । वृतो विमानिनां लक्षैरष्टाविंशतिसंमितैः ॥ ३४ ॥ ईशानाधिपतिः शूल-
शालीवृषभवाहनः । कृते पुष्पकदेवेन विमाने पुष्पके स्थितः ॥ ३५ ॥ युग्मम् ॥ ईशानकल्पादुत्तीर्य तिर्यग्दक्षि-
णवर्त्मना । एत्य नन्दीश्वरं दिश्यैशान्यां रतिकरे गिरौ ॥ ३६ ॥ क्रमाद्विमानं संक्षिप्य सौधर्माधिपतिर्यथा
। काञ्चनाचलचूलायां भक्त्याग्रे जिनमाययौ ॥ ३७ ॥ युग्मम् ॥ आगाद्द्वादशभिर्लक्षैर्वृतो वैमानिकैः सुरैः । सनत्कुमारः
सुमनोविमानस्थः प्रभोः पुरः ॥ ३८ ॥ माहेन्द्रोऽष्टविमानेशलक्षैर्युक्तो महर्द्धिभिः । श्रीवत्साख्यविमानेन प्रभोरभ्यर्ण
मागमत् ॥ ३९ ॥ वैमानिकैश्चतुर्लक्षैः सुरैर्ब्रह्मपतिर्वृतः । नन्द्यावर्तविमानस्थः समागाज्जिनसन्निधौ ॥ ४० ॥ पञ्चा-
शता विमानेशसहस्रैः परिवारितः । लान्तकेन्द्रः कामगवविमानस्थस्तथाऽऽययौ ॥ ४१ ॥ आगाद्वैमानिकामर्त्यचत्वारिं-
शत्सहस्रयुक् । शुक्रशक्रः प्रीतिगमविमानेन जिनान्तिकम् ॥ ४२ ॥ मनोरमाविमानस्थः सहस्रारसुरेश्वरः । षड्विमान
सहस्रेशैर्वृतो देवैरिहागमत् ॥ ४३ ॥ आनतप्राणतस्वामी विमलाख्यविमानभाक् । आजगामामरैर्युक्तो विमानेशैश्च-
तुःशतैः ॥ ४४ ॥ त्रिविमानशतैर्देवैरारणाच्युतवासवः । इहागात्सर्वतोभद्रविमानस्थः सुराचले ॥ ४५ ॥ पृथ्व्यां रत्न-
प्रभानाम्न्यां बाहल्यामध्यवासिनाम् । भवनव्यन्तरेन्द्राणामकम्पन्तासनान्यथ ॥ ४६ ॥ पुर्यां चमरचञ्चायां चमरोऽसु-
रवासवः । सुधर्मीयसभामध्ये निषण्णश्चमरासने ॥ ४७ ॥ ज्ञात्वावधेर्जनिं जैनीं जनज्ञप्त्यै त्ववादयत् । घण्टां मोघ

स्वर्गं गगनीयेन क्रमेण सः ॥ ४८ ॥ युग्मम् ॥ संमद्भिर्निमृभियुक्तश्चतुर्भिर्लोकपालकैः । पञ्चभिः पट्टदेवीभिर्महानीकैश्च सप्तभिः ॥ ४९ ॥ सप्तभिः अनीकाधीशैरन्यैरप्यसुरैर्घनैः । चतुःषष्टिसहस्रैश्च सामानिकमहासुरैः ॥ ५० ॥ प्रतिकाष्ठं चतुःषष्टिसहस्रैरङ्गरक्षिणाम् । त्रायस्त्रिंशैस्त्रयस्त्रिंशत्संमितैः परमर्द्धिकः ॥ ५१ ॥ पञ्चयोजनशत्युच्चं चारुध्वजविराजितम् । पञ्चाशतं सहस्राणि योजनान्यभिविस्तृतम् ॥ ५२ ॥ विमानमभियोगेन सद्यो देवेन निर्मितम् । आरुह्य चमरेन्द्रोऽगात्कर्तुं जन्मोत्सवं विभोः ॥ ५३ ॥ पञ्चभिः कुलकम् ॥ मार्गे संक्षिप्य संक्षिप्य विमानमसुरेश्वरः । सौधर्मेन्द्र इवाभ्यागान्मेरुं विभुविभूषितम् ॥ ५४ ॥ असुरेन्द्रो बलिर्नाम बलिचञ्चापुरीपतिः । महौघस्वरघण्टायाः कारयित्वा वादनम् ॥ ५५ ॥ महाद्रुमाख्यसेनान्याहूतैः षष्टिसहस्रकैः । सामानिकसुरैस्तेभ्यश्चाङ्गरक्षैश्चतुर्गुणैः ॥ ५६ ॥ त्रायस्त्रिंशादिकैरन्यैरसुरैः परितो वृतः । आगादुत्तमयानेन मेरुशृङ्गे महोत्सवात् ॥ ५७ ॥ त्रिभिर्विशेषकम् ॥ फणीन्द्रो धरणो मेघस्वराघण्टाभिनादनात् । सेनान्या भद्रसेनेन योधितैर्जनिमर्हतः ॥ ५८ ॥ सामानिकोरगैः षड्भिः सहस्रैः परमर्द्धिकः । चतुर्विंशत्यङ्गरक्षसहस्रैर्भूरिभक्तिभिः ॥५९॥ षड्भिरग्रमदेवीभिरन्यैर्नागकुलैर्वृतः । सार्धत्रियोजनशतप्रोन्नतं ध्वजमण्डलम् ॥ ६० ॥ सहस्रपञ्चविंशत्या योजनैर्जातविस्तृति । विमानरत्नमारुह्य मेरुमूर्ध्नि समागमत् ॥६१॥ चतुर्भिः कलापकम् ॥ भूतानन्दाभिधो मेघस्वराघण्टाभिवादनात् । सेनाधिपेन दक्षेणाहूतैः सामानिकादिभिः ॥६२॥ नागलोकैर्वृतो नागनाथो निर्भरभक्तिभाक् । आगाद्दिव्यविमानस्थः सनाथं स्वामिना नगम् ॥ ६३ ॥ युग्मम् ॥ हरिस्सहा हरिसहो विद्युत्कुमारस्वामिनौ । वेणुदारी वेणुदेवः सुपर्णानां पुरन्दरौ ॥ ६४ ॥ अग्निमाणवोऽग्निशिखो-

ऽग्नावग्निकुमारकौ । शक्रौ वायुकुमाराणां वेलम्बोऽथ प्रभञ्जनः ॥ ६५ ॥ महाघोषः सुघोषश्च स्तनितानां सुराधिपौ । तयोदधिकुमारेन्द्रौ जलकान्तजलप्रभौ ॥ ६६ ॥ तथा पूर्णोऽवशिष्टश्च शक्रौ द्वीपकुमारकौ । वासवौ दिक्कुमाराणममितोऽमितवाहनः ॥ ६७ ॥ महाकालश्च कालश्च व्यन्तराणां सुरेश्वरौ । सुरूपः प्रतिरूपश्च भूतानामधिपौ हरी ॥ ६८ ॥ माणिभद्रः पूर्णभद्रो वासवौ यक्षरक्षकौ । महाभीमश्च भीमश्च राक्षसाखण्डलौ वरौ ॥६९॥ किन्नराणां किंपुरुषः किन्नरश्च मरुत्पती । किंपुरुषेन्द्रौ महापुरुषसत्पुरुषाभिधौ ॥७०॥ अतिकायमहाकायौ महोरगमहाधिपौ । गीतयशोगीतरती गन्धर्वत्रिदशेश्वरौ ॥ ७१ ॥ अथाप्रज्ञप्तिपञ्चप्रज्ञप्त्यादीनां समाययुः । व्यन्तराष्टनिकायानां षोडश त्रिदशेश्वराः ॥७२॥ तत्राप्रज्ञप्तिदेवेन्द्रौ सन्निहितसमानकौ । इन्द्रौ धाता विधाता च पञ्चप्रज्ञप्तिपालकौ ॥७३॥ ऋषिवादितिकाधीशावृषिश्च ऋषिपालकः । भूतवादितिकाशक्रौ तथेश्वरमहेश्वरौ ॥ ७४ ॥ सुवत्सकविशालाख्यौ क्रन्दितानां सुरेश्वरौ । महाक्रन्दितिकाशक्रौ हासो हासरतिस्तथा ॥ ७५ ॥ ख्यातौ श्वेतमहाश्वेतौ कूष्माण्डानां पुरन्दरौ । पावकः पावकगतिः पावकानां बिडौजसौ ॥ ७६ ॥ ज्योतिषां वासवौ संख्यातीतौ रविहिमच्छवी । चतुःषष्टिरितीन्द्राणां मेरुमूर्ध्नि तदाऽऽययौ ॥७७॥ आदिष्टा अच्युतेन्द्रेणापक्रम्यैशानदिश्यथ । वैक्रियेण समुद्घातेनाकृष्योत्तमपुद्गलान् ॥ ७८ ॥ योजनोरुमुखान्हैमान् राजतान् रत्नजानपि । स्वर्णरौप्यमणिस्वर्णमणिरौप्यमयानपि ॥ ७९ ॥ स्वर्णरौप्यमणीन्कलृप्तान्कलशान्मृन्मयानपि । प्रत्येकं चक्रुरष्टाग्रं सहस्रं सुरकिंकराः ॥ ८० ॥ त्रिभिर्विशेषकम् । ते पात्रीपुष्पचङ्गेरीस्थालभृङ्गारदर्पणान् । तद्वद्रत्नकरण्डांश्च सुप्रतिष्ठान्व्यकुर्वत ॥ ८१ ॥ क्षीराब्धिपुष्कराब्धिभ्यां तदा पद्मह्रदादपि । भरतैरावतक्षेत्रमुख्यात्तीर्थव्रजादपि

॥ ८२ ॥ आनिन्यिरे मरुम्भोजमम्भो मृदन्पुरं सुराः । पुष्पसिद्धार्थतुवरौपधीः क्षुद्रहिमाद्रितः ॥ २८३ ॥ युग्मम् ॥
तेऽत्र सौमनसाक्रमशालावन्दनकाननात् । पाण्डुकाद्यन्यवस्तूनि नीत्वाम्भसि निचिक्षिपुः ॥ २८४ ॥ मल्लिकापाटलाजा-
तियूथिकाचम्पकोद्भवैः । मन्दारपारिजातोत्थैः पुष्पैः स्वर्णाम्बुजैरपि ॥ ८५ ॥ उत्क्षिप्तागुरुकर्पूरः स्तुतिं तन्वन्प्रभोः
पुरः । अच्युतेन्द्रः सुरैः साकममुञ्चत्कुसुमाञ्जलिम् ॥ ८६ ॥ युग्मम् ॥ ततेषु विततेषु घनेषु शुषिरेष्वपि । वाद्यमानेषु
नाद्येषु सर्वतोऽप्याभियोगिकैः ॥ ८७ ॥ गीयमानेषु गीतेषु तारनादेन किन्नरैः । तन्यमानेषु नृत्येषु यथातालं सुरीजनैः
॥ ८८ ॥ पठ्यमाने जिनाधीशे सुरमङ्गलपाठकैः । सितेषूद्धूयमानेषु चामरेषु सुरासुरैः ॥ ८९ ॥ जय द्वादशतीर्थेश
श्रीमद्धिजिनसंस्तुते । इत्यादिस्तुतिवाचयेषु चारणश्रमणेषु च ॥ ९० ॥ धूपिताचितभृङ्गारन्यस्तैः सर्वौषधीयुतैः । नीरैर्घुसृ-
णकर्पूरश्रीखण्डागुरुसुन्दरैः ॥ ९१ ॥ स्नात्रं श्रेयःश्रियां पात्रममात्रप्रमदैः प्रभोः त्रिपद्या विदधे शक्रैरच्युतेन्द्रपुरःसरैः
॥ ९२ ॥ पञ्चभिः कुलकम् ॥ मार्जितं गन्धकाषाय्या कर्पूरागुरुधूपितम् । व्यलिम्पन्नालिंकान्यस्तैः प्रभुं गोशीर्षचन्दनैः ॥
९३ ॥ भविष्यत्पुना भर्तृरङ्गसंग इति स्मितैः । भृङ्गगीतिपरैर्देवाः प्रभुं पुष्पैरपूजयन् ॥ ९४ ॥ सौधर्मेन्द्र इवाधाय
पञ्चमूर्तीस्त्वनः कृती । उत्सङ्गेऽसौ दधौ मूर्त्या प्रभुमीशान एकया ॥ ९५ ॥ पाण्डुरौ चामरौ द्वाभ्यामुज्ज्वलं छत्रमेकया ।
व्योमकल्पद्रुमं शृङ्गं दूरोल्लासितमेकया ॥ ९६ ॥ युग्मम् ॥ मूर्तान्धर्मानिवोन्मीलदर्ककान्तिमणीमयान् । चतुःसंख्या-
नसौ दिक्षु वृषांश्चतुष्कु व्यधात् ॥ ९७ ॥ तच्छृङ्गाग्रोच्छलत्स्फारक्षीरधाराभिरष्टभिः । सौधर्माधिपतिश्चक्रे स्नात्रं विश्वत्रयी-
पतेः ॥ ९८ ॥ दिव्यैर्दुकूलश्रीखण्डमाल्यमाणिक्यमण्डनैः । भक्तिमौघेन सौधर्मप्रभुणा भूषितः प्रभुः ॥ ९९ ॥

अथाग्रेजिनमातेने पट्टे मणिमये हरिः ।.कर्माष्टकक्षयायाष्टमङ्गलीं रूप्यतण्डुलः ॥२००॥ स किंचिदपसृत्याथ ज्वलदीप-
दलत्तमः । ऊर्वीभूतः पुरो भर्तुरारादारात्रिकं दधौ ॥१॥ तज्जिनेन्दोः पुरः स्फारलुठत्तारमिवाथ सः । क्षिप्तपुष्पं शु-
सहारैस्त्रिवारमुदतारयत ॥ २ ॥ इलानलमिलन्मौलिः स पौलोमीपतिस्ततः । विनम्य विष्टपाधीशं प्रहृष्ट इति तुष्टु-
वे ॥३॥ जय त्रिभुवनाश्चर्य जय त्रिभुवनाभय । जय त्रिभुवनानन्द जय त्रिभुवनोदय ॥४॥ सयो मयाद्यरेवाद्य प्रपेदे
भाग्यभूरिषु । यत्त्व त्रिविष्टपीतत्त्व ददृशे द्वादशो जिनः ॥५॥ अणुमातं मनस्तद्भूर्बुद्धिस्तत्सभव वचः । क्व तेन त्व-
द्गुणा नाथ स्तुत्या विश्वविलङ्घिनः ॥६॥ त्वां प्राप्य दृश्यसीमानं स्वामिन्सुकृतसीमया । दृशः प्रीता न्यवर्तन्त रूपान्त
रनिरूपणात् ॥ ७ ॥ कदावसर्पिणीकालव्यालकर्मविपाकुलम् । उल्लासयसि विश्वेश विश्वं वागमृतद्रवैः ॥ ८ ॥ इति
स्तुत्वा गृहीत्वेशमीशानेशादृतः सुरैः । सौधर्माधिपतिः,सूतिगृहेऽगात्पञ्चरूपभाक् ॥ ९ ॥ निवत्य प्रतिमां न्यस्य
जिनेश मातुरन्तिके । उच्छीर्षकेऽथ दिव्ये वाससी कुण्डले च सः ॥ १० ॥ सस्वर्णवलयैर्वर्यं लम्बिनानामणि हरिः ।
जिनेन्द्रोल्लोचनानन्दमुल्लोचे कन्दुकं न्यधात् ॥ ११ ॥ न जिना जननीक्षीरं रमयन्तीति नीतिवित् । कराङ्गुष्ठे विभोर्वज्री
नानारससुधां न्यधात् ॥१२॥ द्वात्रिंशत रौप्यहेमरत्नकोटीः पृथक्पृथक् । तथा द्वात्रिंशत नन्दासनभद्रासनान्यथ ॥१३॥
अन्यच्च सुखदं वस्तु नेपथ्यादि मनोहरम् । शक्रादेशाद्धनाधीशो जिनाधीशगृहेऽसृजत् ॥ १४ ॥ युग्मम् ॥ स्वामिनः
स्वामिमातुर्वा योऽशुभं चिन्तयिष्यति । सप्तधा भेत्स्यते तस्यार्जकमञ्जरिवच्छिरः ॥ १५ ॥ ,इत्युक्ति वासवादेशा-
दाभियोगिकनाकिनः । उच्चैरुज्जुघुषुर्देवनिकायेषु ,चतुर्ष्वपि ॥१६॥ युग्मम् ॥ अथ पञ्च समादिक्षद्दशा अप्सरसः स्त-

पम् । द्रो विश्वगुरोर्धात्रीकर्मनिर्मितये हरिः ॥ १७ ॥ मुदा तदा तु निर्मातुमष्टाह्नीं बहवः सुराः । काञ्चनाचलचूला-
याद्येव नन्दीश्वरं ययुः ॥१८॥ यत्रो स्वर्हद्गृहादेवरमणाख्यं ययौ तदा । क्षुद्रमेरुसमं नन्दीश्वरे पूर्वाञ्जनाचलम् ॥ १९ ॥
दिव्ये चतुर्मुखे चैत्ये चतुर्मेन्द्रध्वजाञ्चिते । चैत्येऽष्टाह्नीमिहारेभे नित्यानामर्हतां हरिः ॥ २० ॥ गिरौ तत्र चतुर्दिक्षु
महावापीस्थितेष्वथ । चतुर्षु स्फाटिकाद्रिषु तदा दधिमुखाद्रिषु ॥ २१ ॥ चैत्येषु जिनबिम्बानां नित्यानां महिमाद्भुतम्
। चक्रिरे शक्रदिक्पालास्तस्याष्टाह्निकामहम् ॥ २२ ॥ युग्मम् ॥ उत्तरे रमणीयाख्ये तत्रेशानोऽञ्जनाचले । गत्वाष्टाह्नीं
चक्रिके शाश्वतानां पुरोऽर्हताम् ॥ २३ ॥ ईशानस्यापि दिक्पालावापीस्थायिषु पूर्ववत् । महं जिनानां नित्यानां व्यधु-
र्दधिमुखाद्रिषु ॥२४॥ दक्षिणाशास्थिते नित्योद्योताख्ये त्वञ्जनाचले । जिनानां तत्र नित्यानां चमरेन्द्रो महं व्यधात् ॥२५॥
तद्वापीमध्यसंस्थेषु तद्दधिमुखाद्रिषु । तद्दिक्पाला मुदा चक्रुरष्टाह्नीं शाश्वतार्हताम् ॥ २६ ॥ बलिः स्वयंप्रभाख्ये तु
पश्चिमास्येऽञ्जनाचले । शाश्वतानां जिनाधीशबिम्बानां व्यधितोत्सवम् ॥ २७ ॥ तद्वापीकुहरस्थेषु चक्रुर्दधिमुखाद्रिषु
नित्यानां जिनबिम्बानां तद्दिक्पाला महोत्सवम् ॥२८॥ इति नन्दीश्वरे द्वीपेऽष्टाह्नीं कृत्वा सुरोत्तमाः। ययुर्निजंनिजंस्थानं
यथागतमथाञ्चिताः ॥२९॥ समुद्रापारमौ यो देव्या हर्षोऽभूत्पुत्रदर्शने । आस्तां स हृदि संकीर्णो न ममौ त्रिजगत्यपि ॥३०॥
तत्क्षणं दासदास्यग्रतः पुरस्ताद्धर्षमाश्रिताः । पद्मरागं द्रुतं चर्णोपनिकार्थं दधाविरे ॥३१॥ वर्धयसे सुतरत्नस्य जन्मना
देव वर्धसे । इत्युक्तिः कापि भूभर्तुश्चारीपेऽक्षिपत्करम् ॥ ३२ ॥ सुवर्णमालिकां दासी कर्णपीयूषयादियम् । इतीव
भूपस्तद्गेहे सुवर्णैः पर्यपूरयत् ॥ ३३ ॥ पुत्रजन्मोत्सिकास्य परीवारस्य पार्थिवः । ददानं महादानं ययौ भक्तिपूर्वं

प्रति ॥ ३४ ॥ अपश्यच्छविविच्छायरत्नदीपं महीपतिः । सूनोर्मुखं तुषारांशुमिव निःसारतारकम् ॥ ३५ ॥ आलाप्य कोमलैः प्रेमपेशलैर्वचनैः मिथाम् । अकारयत्पुरं भूपः पुत्रजन्मोत्सवाङ्कितम् ॥ ३६ ॥ काश्मीरजरजःपूरहारिवारिघटाछटाः । रेजुः शिशावपि स्वामिन्यनुरागा इवावनेः ॥ ३७ ॥ प्रत्योकः कौङ्कुमे पङ्के रेजे स्वस्तिकमौक्तिकैः । उप्तैः प्रभुप्रभावेण पुण्यबीजव्रजैरिव ॥ ३८ ॥ प्रभुचन्द्रोदये पुष्पप्रकरैः परितः पुरि । उद्भ्रान्तानन्दपाथोधिबुद्बुदैरिव दिद्युते ॥ ३९ ॥ पौराङ्गणेषु विश्वेशसेवावसरलब्धये । कल्याणकलशैः सर्वद्वीपसूर्यैरिव स्थितम् ॥ ४० ॥ प्रभुजन्मोत्सवे लोलभ्रुवो वन्दनदामभिः । पताकाहस्तलीलाभिर्ननृतुर्विपणिश्रियः ॥४१॥ दूरतोऽप्यतिनैर्मल्यादन्तःकर्तुमिव प्रभुम् । उच्चैस्तोरणचूलासु व्यलासि मणिदर्पणैः ।४२॥ उदाररत्नालंकारद्युतिजालजलप्लवाः । व्यालोलकरकल्लोलाश्चञ्चत्कुचरथाङ्गकाः ॥ ४३ ॥ मञ्जुसिञ्जानमञ्जीर कलहंसकलस्वराः । स्मेराननवाम्भोजस्फीतगीतालिनिःस्वनाः ॥४४॥ दृग्भिः प्रसृतितुल्याभिः पीयमानाः पुरीजनैः । प्रभुजन्मप्रमोदश्रीविलासरसहेतवः ॥४५॥ संभूय मण्डलीभूय रासकोल्लासकेलिभिः । पदे पदे व्यराजन्त सरस्य इव सुभ्रुवः ॥ ४६ ॥ चतुर्भिः कलापकम् ॥ भविष्यत्यधुना शुद्धिर्ममेतीव स्मितोऽनदत् । धर्मः सर्वेषु चैत्येषु पूजाप्रेक्षणकच्छलात् ॥ ४७ ॥ अमान्तमिव चित्तान्तः प्रमदं प्रमदाजनः । पूर्णपात्रमिषात्पाणौ बिभ्रद् भूभृद्गृहेऽविशत् ॥४८॥ प्रभोर्जनन्या स्त्रीजातिस्तथोत्कर्षमनीयत । यथा दूर्वा नरेशोऽपि शिरसा तृणमप्यधात् ॥ ४९ ॥ पाठकोलाहलोत्तालाः सबाला बालपाठकाः । पूजयामासिरे राज्ञा वदन्तः सोममातृकाम् ॥ ५० ॥ करिष्यतः प्रभोः पुंसां भवबन्धाद्विमोक्षणम् । काराविमोचनाचक्रे नृपः पुण्याहमङ्गलम् ॥ ५१ ॥ क्रीडान्तरं सुतालोकक्रीडया भ-

सिता रा मे । इतीव धंगनात्कीडातिरश्चः पार्थिवोऽमुचत् ॥ ५२ ॥ भास्वानसावसौ वेति स्वयं पश्यन्निवान्तरम् । तृतीयेऽह्नि प्रभोः प्रातर्भूपो भानुमदर्शयत् ॥ ५३ ॥ प्रभोरदीदृशद्भूपस्तस्यां निशि निशाकरम् । स बभूव सुधावृष्ट्या तद्दृष्टेव सुधाकरः ॥ ५४ ॥ निर्निमेषदृशः कामं जिनरूपनिरूपणात् । सुखेनैव व्यधुः षष्ठीनिशाजागरमङ्गनाः ॥ ५५ ॥ नृपान्यजनैः स्वामिजन्मनैयामलैरपि । एकादशेऽहनि स्नातं वृद्धाचारो हि दुस्त्यजः ॥ ५६ ॥ विविधाद्दारमाभूल्यवस्त्राभरणार्चितैः । दूरतः पूरिते धाम्नि सर्वतः स्वजनव्रजैः ॥ ५७ ॥ वसूनां पूज्य एवायमिति त्रिजगतीपतेः श्रीवासुपूज्य इत्याख्यां द्वादशेऽह्नि ददौ नृपः ॥ ५८ ॥ युग्मम् ॥ इत्युरस्यैर्नवनवैर्वर्धमानो दिने दिने ।ददेऽङ्गुष्ठसुधापुष्टः प्रभुः पित्रोर्दृशोर्मुदम् ॥ ५९ ॥ पाणी पादौ पशुर्लोलाः प्रभोरुत्तानशायिनः । सद्धर्मकल्पवृक्षाणां चतुर्णां पल्लवा इव ॥ ६० ॥ पपौ प्रभोर्मुखे मुग्धो मुग्धकान्तिः स्मितोदयः । उत्सुको लोकबोधाय निर्यद्धर्म इवौरसः ॥ ६१ ॥ लक्ष्ये यत्रापि तत्रापि निर्निमेषलोचनः । किमपि ध्यानमभ्यस्यन्निव प्रभुरभासत ॥ ६२ ॥ दोलातल्पोपरिस्थायी प्रभोर्मालिकालकः । पश्चादपैक्षत ज्ञानमिव पिण्डस्थितं पुरः ॥ ६३ ॥ बालाभिः करतालाभिर्दूराद्दाकारितः प्रभुः । उच्चैःपदगमनाभ्यासकारीवोल्ललति स्म सः ॥ ६४ ॥ स्वाङ्गुष्ठामृतसिक्तस्य प्रभोर्दशनकुड्मलाः । त्रैलोक्यानन्दकन्दस्य प्ररोहाङ्कुरा इव ॥ ६५ ॥ जिन एवैष संसारी मयेतीवोल्लसन्मुदा । प्रभुः प्रायोऽनभिमायं चक्रे किलकिलारवम् ॥ ६६ ॥ ञ्चलत्करक्रमः स्वामी विलसन्नुरसा भुवि । पश्चादपारसंसारपारावारं तरन्निव ॥ ६७ ॥ भवकूपादिभुर्विश्वं क्षमोत्पुत्रुन्मोऽसा । मातृहस्ताङ्गुलीलग्नः कुतुकेन पदान्यधात् ॥ ६८ ॥ प्रसुप्तं मोहनिद्रायां जनं जागरयन्निव ॥

विभुर्व्यधात्पदन्यासे, घनं घर्घरकध्वनिम् ॥६९॥ आकार्यमाणः स्वजनैर्जिनो रेजेऽन्यतो व्रजन् । भवाभोगभिदे तेषां
ममत्वं खण्डयन्निव ॥७०॥ वयसा सदृशीभूय प्रभोरसदृशा गुणैः । देवाश्चतुर्विधाः क्रीडां चक्रुः शक्रनिदेशतः ॥७१॥
स्फुरन्ती स्वामिनो मूर्ध्नि विमुक्ता शुशुभे शिखा । प्रतिज्ञा तत्परस्येव संसारमथनं प्रति ॥७२॥ येन येन यदा स्वामी
रन्तुमैहत कौतुकात् । तत्तद्रूपं तदाधाय पुरतः स्फुरितं सुरैः ॥७३॥ पूर्वं भवेष्वसंख्येषु दृष्टाभ्यस्तश्रुताः कलाः । सस्मा-
रैवावधिज्ञानादधिपः सद्गुणोदधिः ॥७४॥ इति क्रमादतिक्रान्तः शैशवं शिवदो विभुः । भाग्येन यौवनस्येव जगदा-
नन्ददायिनः ॥७५॥ कर्माणि यौवने जेतुं स्वामी संहननं दधौ । स वज्रर्षभनाराचं धनुःसप्तनिमानभृत् ॥७६॥ स्वामि-
नोंऽह्रितलद्वन्द्वं ताम्रत्वाद्बुबुधे बुधैः । नूनं तस्मिन्भवे पार्ष्णिद्वयमो रागसागरः ॥७७॥ विरेजिरे जिनेन्द्रस्य दश
पादनखेन्दवः । यतिधर्मश्रियां रत्नकल्पिता इव दर्पणाः ॥७८॥ निर्यतां पापजम्बालजालादृशदिगात्मनाम् । आलम्ब-
यष्टय इव क्रमाङ्गुल्यः प्रभोर्बभुः ॥७९॥ प्रभोर्भवमहानीरनिधितीरकृतस्थितेः । उन्नतौ रेजतुः पादौ निलीनकमठाविव
॥८०॥ जगद्धंसकोटीरघनघर्षभयादिव । स्वामिनः पादयोर्गुल्फौ बाढं गूढत्वमासदन् ॥८१॥ द्वेषरागजिनोर्जातौ शम-
निर्ममभावयोः । सक्ताविव जयस्तम्भौ प्रभुजङ्घायुगच्छलात् ॥८२॥ मन्नैष्ठुर्येण मा पीडि मृदुपाणिद्वयं विभोः । इतीव
जिननाथस्य जानुनी गूढतां गते ॥८३॥ ऊरू क्रमोन्नते भर्तुरधर्मजपदिष्ठयोः । तूणवद्विरतेरीर्यासमितेश्च विलेसतुः
॥८४॥ कटीतटी पृथुर्जज्ञे मध्यदेशः कृशः प्रभोः । सर्वाङ्गं क नु पूर्यन्ते तादृशाः परमाणवः ॥३८५॥ लावण्यसरसो
भर्तुः सुदृग्भृङ्गसंगतम् । रोमालिनालं नाभ्यब्ज कदाचिन्नोज्झितं श्रिया ॥८६॥ एष्यते केवलज्ञानसार्वभौमाय सज्जि-

तम । श्रीवत्सच्छद्मनो भद्रपीठं हृत्पाद्मणे प्रभोः ॥८७॥ प्रभोः पाणिद्वयीसंध्या तारैस्तारकितानखैः । पुण्येन्दोरुदयं
शिंस नखेन्दुगद्विराजिता ॥८८॥ दोर्दण्डौ तोरणस्तम्भौ विश्वैश्वर्यौकसि प्रभोः । अंसव्याजेन कल्याणकुम्भभाजौ विरे-
जतुः ॥८९॥ त्रैलोक्यजनचित्तानां मदा संचलतां मुदे । वर्त्मत्रयोपम रेखात्रयं कण्ठे बभौ प्रभोः ॥ ९० ॥ उल्लासकारी
पद्मानां दोषहारी भवाम्बुधेः । प्रभोर्मुखं तुषारांशुरपूर्वः कोऽपि दृश्यते ॥ ९१ ॥ विभोर्वक्त्रालये वाणी जिह्वादोला-
प्रखेलिनी । ओष्ठरत्नगवाक्षान्तर्वर्त्मना लक्षिता न कैः ॥ ९२ ॥ दन्तद्युतिसुधाधारासारैर्धीरतरध्वनिः । न कस्य तापं
निर्भेद प्रभुआनसुधाम्बुदः ॥९३॥ नासा विश्वप्रभोरन्तःश्वाससमीरभलिप्सया । दूरोन्नतापि पुरतो नताभून्मुखसंमुखी
॥९४॥ रेमौ पुरस्कृतौ न्यस्य कपोलच्छलतः प्रभोः । जेतुं धीरौ जगन्मोह नेत्रवीरौ किल स्थितौ ॥ ९५ ॥ स्वर्गापवर्ग-
द्वारस्थाः सतां कर्मकपाटिकाः । समुद्घाटयितुं दधे कुञ्चिकाभे भ्रुवौ विभुः ॥९६॥ त्रिलोकीकल्पवृक्षस्य कर्णपाशौ जिने-
शितुः । ध्यानशानत्रिगोर्लोठे दोठे इव विरेजतुः ॥९७॥ किं विभोः स्तौमि भालस्य शोभां यत्र निभालिते । निभा-
लितैव पूतासिंधुः सिद्धिशालागिन्दा ॥९८॥ प्रभोर्देहप्रभाविद्युन्मञ्जुला कुन्तलावलिः । दुःकर्मधर्मनिर्मन्थे सतामब्द-
निभा व्यभात् ॥९९॥ अश्रान्तपुण्यगन्धाम्बुदीर्घिकादीर्घकेलिभिः । मसौरभं विभुर्देहं दधौ स्वेदमलोज्झितम् ॥४००॥
नाप्यस्वध्यैन दुःकर्माभाधं न यदसेवत । तस्मात्तिरस्कृताशेषभोगैः रोगैर्न दूषितः ॥१॥ प्रभोः प्राच्यतपःशालैस्तथात्मा-
ऽजनि निर्मलः । यथा नभ्यमपेयामून्मांसे रक्तेऽपि शुभ्रता ॥२॥ कार्यं नो देहदुर्गन्धः स तु नेह भवेदिति । हियेवाहार-
नीहारौ विश्वादृशौ स्थितौ विभोः॥३॥ विभोर्वक्त्रेऽब्जमित्येत्य षट्पदाः श्वाससौरभैः । तृप्तिं प्रापुर्भ्रमेणापि जिनसेवा

न निष्फला ॥ ४ ॥ इत्यद्भुतसमुद्भूतरूपातिशयवैभवः । विभुर्बभूव वामभ्रुविलासरसजीवितम् ॥ ५ ॥ कदाचिदाचित-
स्वर्णोत्तानपट्टस्फुटप्रभाम् । श्रीकेलिकमलोद्गच्छत्परागच्छुरितामिव ॥६॥ उन्मीलन्नीलरत्नालिमालिताद्भुतकुम्भिकाम् ।
दृग्मृगानन्दकृद्दूर्वावणस्तम्बगणामिव ॥७॥ पद्मरागमयस्तम्भप्रभापूरपरिप्लुताम् । सदोद्यन्नृपतेजोऽर्कसंध्यारागश्रिता-
मिव ॥८॥ स्तम्भावष्टम्भपाञ्चालीविशालीकृतसंपदम् । सौन्दर्यविस्मयस्तब्धखेचरीनिचयामिव ॥९॥ स्फुरत्स्फटिकसंभार-
भारपट्टघटाद्भुताम् सुधर्मांविजयोद्दण्डयशःकाण्डकुलामिव ॥१०॥ मुक्तावचूलरोचिष्णुमेचकोल्लोचसंचयाम् । भानुत्रस्त-
सनक्षत्ररात्रिराजिश्रितामिव ॥ ११ ॥ अतुल्यमूल्यमाणिक्यकलशावलिशालिनीम् । स्वर्गश्रीकार्मणोत्क्षिप्तजपापुष्पोत्करा-
मिव ॥१२॥ द्वारस्फुरत्प्रतीहारहुंकारस्खलितप्रजाम् । आकृष्टासिलतारङ्गदङ्गरक्षकृताघृतिम् ॥१३॥ प्रचण्डमण्डलाधीशमण्ड-
लाखण्डमण्डनाम् । निरवद्यमहाविद्यविद्वद्वृन्दोदितद्युतिम् ॥१४॥ उदारसारशृङ्गारवारस्त्रीवारहारिणीम् । औचित्यर-
चनस्तुल्यजाल्यामालशतान्विताम् ।१५। व्यवहारकलाहारिव्यवहारिकुलाकुलाम् । पूर्यमाणमनोरङ्गतूर्यत्रिकविकस्वराम् ।१६।
स्वेच्छया सेव्यमानांह्रिः सपर्याचतुरैः सुरैः । भूषितां वसुपूज्येन प्रविवेश प्रभुः सभाम् ॥१७॥ द्वादशभिः कुलकम् ॥
सकङ्कणझणत्कारवारनारीकरोच्छ्रितैः । हार्दिहंसोपमैः सेव्यमुखाम्भोजस्य चामरैः ॥१८॥ चक्रिणं गुणचक्राणां विनयं
जनयन्विभुः । विश्ववन्द्यपदः पादपीठे पितुरुपाविशत् ॥१९॥ युग्मम् ॥ प्रभौ सभासदां दृष्टिर्लीना सत्यपि पार्थिवे ।
स्थितेऽपि पादपे भृङ्गी पुष्प एव निलीयते ॥ २० ॥ प्रेक्षिताः प्रभुणा सभ्याः शुभ्रश्यामलया दृशा । स्वं स्नातं मेनिरे
गङ्गायमुनासंगमाम्भसि ॥२१॥ गुरुभिर्ग्रन्थसंदोहैरुहैरप्यहताः सताम् । तदाऽभञ्जत्प्रभुर्भ्रान्तीर्वार्तालापैकलीलया ॥२२॥

तदा प्रज्ञातत्त्वोऽपि कवीन्द्राणां नवोक्तिभिः । अपूर्वाभिरिव स्वामी सविस्मय इवाभवत् ॥२३॥ प्रभुः कलानामालापै-र्मोहं विन्दन्सभासदाम् । नवेऽप्यमन्यत कापि मुद्रामपि पितुर्गिरम् ॥२४॥ निवार्य वेणुवीणादिवाद्यं स्वादविदस्तदा । कर्णाभ्यामनुपं गानमशृण्वन्नन्दनः प्रभोः ॥२५॥ विभोर्लावण्यपीयूषपायिभिः सम्भ्रमानुपैः । निर्निमेषतया चक्रे तदा स्वर्गनिभा सभा ॥ २६ ॥ निरीक्ष्य सुतमीदृक्षमत्र क्षत्रपतिस्तदा । तद्विवाहमहोत्साहचिन्तार्तहृदयोऽभवत् ॥ २७ ॥

तदा कक्षान्तरे क्षिप्त्वा वेत्रं वेत्रभृतां वरः । प्रणम्य पृथिवीजानिं जानुस्थानो व्यजिज्ञपत् ॥२८॥ मासः संप्रति भूपाल श्रीशालनगरेशितुः । दूतो लीलाविलासस्य सुवेगस्त्वां दिदृक्षते ॥ २९ ॥ भ्रूपल्लवलवोल्लाससंज्ञयाथ महीपतेः । भनुमुपदसुं तूर्णं संसदन्तः स दण्डभृत् ॥३०॥ चक्षुर्विशत एवास्य सभारत्नप्रभां पिबत् । देहद्युतिमलङ्कारैः कौमारैर्दूरतो हृतम् ॥३१॥ किं कान्तिपक्षमत्रेदमितरन्तजातिविस्मयः । चिरं निरूप्य पुंरूपनिश्चयाद्ध्यायति स्म सः ॥३२॥ किं दीपोऽयं न न कणारत्नेष्वेव स भास्वरः । किं मर्त्याङ्गप्रभोऽर्कोऽयं न न स क दृशां प्रियः ॥३३॥ किमिन्दुरेष चक्षुष्यो न न तस्याद्वि भाः कुतः । किमिन्द्रोऽयं सदोद्योती न न सोऽक्षिगणवर्णी ॥३४॥ अये ज्ञातं यदुर्वीन्दोः पादाग्रे विनयी स्थितः । तन्मन्ये वासुपूज्योऽयं कुमारोऽत्र यथा श्रुतः ॥३५ ॥ स एवं चिन्तयन्नेव तद्रूपहृतचेतनः । स्तम्भवत्संभवत्प्री-तिस्तम्भा पुरःस्थितोऽभूदरम् ॥३६॥ अथ कम्पयञ्छीर्षं हर्षाविष्टो जगाविति । मनोरथोऽप्ययं यस्य धन्य एव स भूपतिः ॥३७॥ श्रुत्वैवं वासुपूज्यस्तं संभ्रमादभ्यधादिति । कोऽसौ क्षितिपतिर्धन्यः को वा तस्य मनोरथः ॥ ३८ ॥ इत्युक्त्वा दृष्ट्वैनमसौ नत्वा दूतः पति सुतः । प्राग्नमस्कारविस्मारसज्जलज्जो व्यजिज्ञपत् ॥३९॥ लीलाविलासभूपस्य भवन्मित्रस्य

भूविभो। प्रिया मदनरेखास्ति रेखा मदनसंपदः ॥४०॥ भृङ्गीसंगीतसौरभ्यकीर्तिं कमलमालिकाम्। पृच्छन्ती स्वच्छ-पीयूषवृष्टिकृद्दृष्टिविभ्रमा ॥४१॥ देवी स्वप्नेऽन्यदादर्शि निशान्ते शान्तकान्तिभृत्। पद्मस्या पाणिपद्मात्तपद्मा पद्मावती तया ॥४२॥ युग्मम्। सा विनिद्रा नरेन्द्राय स्वप्नमेनं न्यवेदयत्। सोऽवदन्नन्दिनी विश्वनन्दिनी भाविनी तव ॥४३॥ इत्युक्त्या सा जगौ प्रीत्या सत्यमस्तु तवोदितम्। स्वामिन्सन्त्येव मे पुत्राः सत्पुत्रीं स्पृहयाम्यतः ॥४४॥ अत्रान्तरे बहिः प्रातस्तूर्यनादादनन्तरम्। कुण्ठकण्ठीरवरवोऽपठन्मङ्गलपाठकः ॥४५॥ पद्मिनी विक्रमलपद्ममुखी सौख्याय जायताम्। त्रैलोक्यलोचनभानुर्यत्पतित्वाय युज्यते ॥४६॥ प्रीतोऽथाह नृपः कान्तामुपश्रुत्यानया ध्रुवम्। त्वत्सुता भाविता देवि दयिता त्रिजगद्गुरोः ॥४७॥ इत्युक्तिप्रीतहृदया हृदयाधिपबोधिता। सा निनाय निशाशेषं विशेषपटुकार्जनैः ॥४८॥ ध्यायन्ती स्वप्नदृष्टायास्तद्देव्या वपुरद्भुतम्। ध्यानानुरूपं पुण्यैकगर्भं गर्भं बभार सा ॥४९॥ संपूर्णदोहदा पत्युः प्रीतिसंदोहदानतः। सौम्योच्चग्रहदृग्लग्ने सा लग्ने सुषुवे सुताम् ॥५०॥ ततोऽद्भुतोत्सवव्यूहैः पितृभ्यामह्नि भासुरे। दत्तं पद्मावतीत्यस्या नाम स्वप्नानुसारतः ॥५१॥

शरीरावयवस्पर्धावर्धमानकलावलिः। सा जाड्यविमुखी जज्ञे सुमुखी यौवनोन्मुखी ॥ ५२॥ अभितः शोभते यस्याः श्यामलाः कुन्तलावलिः। विधुभ्रमेण वक्त्रस्य रजनीवानुचारिणी ॥५३॥ यस्या निःसीमसौन्दर्यः सीमन्तः प्रतिभासते। जगज्जयकृतः कीर्तिस्तम्भो रतिपतेरिव ॥५४॥ यद्भाले भाति सीमन्तदण्डः पुष्पेषुभूपतेः। भूशिरीषस्फुरद्धारोऽर्धचन्द्र इव चास्पकः ॥ ५५ ॥ दृग्विश्वासमृगश्लिष्टौ धर्तुं युवमनोमृगान् ॥ यत्कर्णौ मृगयापाशौ कामदारनयोरिव

॥ ५६ ॥ कामकान्ताऽङ्गक्रीडासरसीसदृशोर्दृशोः । भातः पालीवनालीव यद्भ्रुवौ भुग्नमेचके ॥ ५७ ॥ रेजतुर्मञ्जुल-
श्रोत्रे निर्भरागारेण तद्दृशोः । मृणालपाविव शृङ्गारविलासरसपूरयोः ॥ ५८ ॥ कपोलयो रतिप्रीतिक्रीडाकुट्टिमयोरिव ।
यस्या नासा यद्दन्यतःसीमाभित्तिममानताम् ॥ ५९ ॥ कपोलयुगलं यस्या राजते राजमञ्जुलम् । विश्वदृग्वाहवाल्या-
लिबन्धवन्यविभ्रमम् ॥६०॥ यदन्तोष्ठयुगं यस्या द्युतिविद्रुतविद्रुमम् । नवीनोद्भिन्नरागद्रुपल्लवद्वयतुल्यताम् ॥६१॥ भ्रेजेऽनुमी-
यमानाया पिकश्रीमधुरस्वरैः । मुक्तावलीव भास्वत्ता यन्मुखे दशनावलिः ॥६२॥ यस्या मनसि संवासं कुरुते कुसुमायुधः ।
इतीवाद्भुतमौरव्यणाकः श्वसितमारुतः ॥६३॥ वीज्यमानस्य बिम्बेन लोचनाञ्चलचामरैः । यत्कण्ठो मुखराजस्य वेत्रा-
सनमिवेष्यते ॥ ६४ ॥ स्वर्गमानयोर्यस्याः प्रकामं कर्णपाशयोः । स्थानं दातुमिवाभूतामंसौ किंचिन्नताकृती ॥ ६५ ॥
यदाश्लिष्टपोर्लोल्यद्दशुन्नीपस्तवश्रियोः । नवांशुपुष्पयोः कश्चित्पुण्यात्मा लप्स्यते फलम् ॥६६॥ यदुरःस्थायिनः कामभू-
पस्योपायनीकृतम् । यौवनेनेव यद्वक्षोजबीजपूरफलद्वयम् ॥६७॥ अतीव कृशतां बिभ्रच्छुभ्रमतिपदिन्दुवत् । यन्मध्यदेशो
मोहेन स्तुत एव न वीक्षितः ॥६८॥ रतिप्रीतिस्मरैर्गन्तुं यन्मध्याध्वनि संकटे । हस्तालम्बनदण्डाभं सञ्जीचक्रे वलित्र-
यम् ॥६९॥ स्तनाद्रिकणिमरुग्गलद्रोमलिकालिनी । यस्या लावण्यपीयूषकुण्डाभा नाभिरबभौ ॥७०॥ मनोभूमत्तमात-
ङ्गावगमसरसैकतम् । राजते जघनं यस्या रोमालीमदरेखया ॥७१॥ यस्याः किं वर्ण्यते तन्व्या नितम्बस्तम्भडम्बरः । यस्या-
शाविर्भवायुधैः स्फारः शृङ्गारभूरुहः ॥७२॥ मकरध्वजसाम्राज्यातुल्यमङ्गल्यकारणम् । राजदूरुयुगं यस्या रम्भास्तम्भद-
र्पापहम् ॥७३॥ यस्या जङ्घे मिथो वीक्ष्य मन्यमाने स्वमद्भुतम् । हर्षेण हसतः कूजन्मुक्तामञ्जीरकान्तिभिः ॥७४॥ किंचि-

त्कर्मोन्नतौ यस्याश्चरणौ वरलागतेः मुखेन्दुभयतः पद्मे बद्धकोशे इव स्थिते ॥७५॥ लीलाधःकृतजेतव्यकिङ्किङ्किसल-
द्युती। द्योतेते यत्करौ बद्धमाणिक्यमुकुटौ नखैः॥७६॥ याग्रहीज्झितयोर्यानशोभया कुम्भिहंसयोः। कुचाभ्यां कुम्भसौ-
भाग्यं नूपुराभ्यां रवश्रियम् ॥७७॥ जितं त्रिभुवनस्त्रैणमनयेति स्मरो नृपः। जैत्रपत्रं ददौ यस्याः कबरीदण्डदम्भतः
॥७८॥ सा कृतस्फारशृङ्गारा शृङ्गाररसजीवितम्। कदाचित्पितुरुत्सङ्गमङ्गीचक्रे सभाजुषः ॥ ७९ ॥ अस्या भविष्यति
पतिः को नाम त्रिजगद्गुरुः। इति चिन्ताचयाचान्तस्वान्तो यावदभून्नृपः ॥८०॥ पुरा परिचितं किंचित्पिश्रोत्थापित-
स्वरम्। तावद्दिवः सभागर्भमभ्यगात्किन्नरद्वयम् ॥ ८१ ॥ युग्मम् ॥ अहो आगम्यतामागम्यतां कुशलिनौ युवाम्। किं
चिराभ्यागतौ भूपस्तावित्याह ससंभ्रमम् ॥८२॥ तावूचतुश्चतुःसिन्धुपूतभूतलभूषणः। लोकोत्तरगुणग्रामो विश्वव्यामोह-
मोहनः॥८३॥रूपश्रीसततान्हूतपुरुहूतपुरन्ध्रिदृक्। भानोः प्रभातशीलाभिः प्रभाभिरिव निर्मितः ॥८४॥गुणागुणविशेष-
ज्ञोऽनन्यसामान्यदानकृत्। आवाभ्यां सेव्यते भूप चंपाभूपसुतोऽधुना ॥८५॥ त्रिभिर्विशेषकम् ॥ गेयः स एव तस्याग्र
एवेदग्निश्चयश्च नौ किं याति वारिजातेषु पारिजातमधुव्रतः ॥ ८६ ॥ चिरं परिचयोत्कर्षचशावदहृदौ पुनः। भवन्मन-
न्तःकरणप्रीत्यैव द्रष्टुमागतौ ॥ ८७ ॥ अथ भूपोऽभ्यधादेवं यदि तस्याग्र एव वाम्। क तन्मे कर्णयोर्युष्मद्गीतपीयूषपा-
रणम् ॥८८॥ अवोचतां च तौ भक्त्याभ्यर्थिताप्सरसां वरा। चित्रलेखा पटे न्यस्य प्रभोः रूपमदत्त नौ ॥८९॥ वहा-
वहे सदावां तद्विश्वस्वैरविहारिणौ। गायावो यत्र तत्रापि तत्पुरस्कृत्य कौतुकात् ॥९०॥ ततोऽस्मद्गीतशुश्रूषा यदि पीठं
विमुञ्च तत्। इहारोप्य भूपाल रूपचित्रपटं विभोः ॥९१॥ इत्युक्ते कौतुकी भूपः प्रभुरूपनिरूपणे। भद्रासनपरीहारमे-

गोत्रामवृत्त सः ॥९३॥ तौ मुदाकृष्य धम्मिल्लादिव्यमालार्चितं नतः । न्यस्य सिंहासने चित्रपटं भर्तुरगायताम् ॥९३॥ सभामध्ये प्रभो रूपं पश्यतां शृण्वतां गुणान् । एहिरेयाहिरांचक्रे चित्तं चक्षुःश्रवोन्तरे ॥ ९४ ॥ मुक्तापरेन्द्रियग्रामं स्वामिन्यादिरक्षणा । वेगादक्षिगवाक्षेऽगात्पश्चावल्या मनः पुनः ॥९५॥ त्रैलोक्यकल्पनाकल्पद्रुमस्त्वमभिगीयसे । तन्मे स्वर्दृष्टिदानैरसंकल्पं पूरय प्रभो ॥९६॥ इति ध्यानमयाम्भोधिमध्यमज्जितमानसा । प्रभुरूपातिरेकश्रीलीननेत्रैव सा स्थिता ॥ ९७ ॥ युग्मम् ॥ कारयन्प्रभुरूपाब्धौ जलकेलिमिवाक्षिणी । लोलयन्मौलिमुर्वीन्द्रुरिति सभ्यांस्तदाभ्यधात् ॥९८॥ सन्मार्च्यः कल्पितं पुण्यैर्दृष्टश्चित्रेऽपि यत्प्रभुः । फलत्विदानीं तद्दीक्षापुण्यं तन्मूर्तिदर्शनात् ॥ ९९ ॥ इमां पुण्यद्रुमफलं शीघ्रीकृत्य कन्यकाम् । श्रीवासुपूज्यं पश्यामो यामश्चम्पापुरीं द्रुतम् ॥५००॥ अथ सभ्यैरनुमतः प्रहृष्टैर्हृष्टरोमभिः सैन्यावृत्यमहीकम्पश्चम्पायै प्राचलन्नृपः ॥१॥ भवद्भ्यां चित्रलेख्यातश्चित्रमीदृग्विधाप्यताम् अयं मे दीयतां दृष्टिहृत्माणाल्म्बनं पटः ॥ २ ॥ इत्यर्थितौ पितुस्तस्थं कन्यायै किंनरौ पटम् । प्रदाय चित्रलेखार्थं जग्मतुर्नृपसत्कृतौ ॥ ३ ॥ ॥ युग्मम् ॥ कन्यानुरोन्दुविच्छायमार्गेनवाम्बुजव्रजः । त्वन्मित्रं त्वामथं स्वामिन्नृपः सत्वरमेति सः ॥ ४ ॥ श्रीचम्पेशनरेशाभीमानं मनुपेयुषा । तेनाहं महितस्तुभ्यमिति ज्ञापयितुं पुरः ॥ ५ ॥

अथ श्रीवसुपूज्योऽस्मत्वं भूपणमद्भुतम् । ददौ मुदा सुवेगाय निःशेषं शेखरं विना ॥६॥ मद्भूत्वनुतलाश्यचन्दनान्प्रमाशेमिन्दुना दृशाः । अन्यथाय सुबुद्धयादीन्सचिवान्नृपतीवरः ॥७॥ अहो श्रीवासुपूज्यस्योद्वाहचिन्ता च मेऽभवत् । कन्यायाममिहायातं सुवेगश्च न्यवेदयत् ॥८॥ कार्यारम्भेऽनुकूलार्थसंपत्तिः शकुनं महत् । इत्थं मन्यार्थं पश्चायमुत्साहयति

क्षतैर्विभोः । चक्रे सा मङ्गलं यस्माल्लोकस्याचरणं महत् ॥६२॥ अथोत्तरीयकौसुम्भांशुकच्छन्नमुखेन सा । त्रिः पस्पर्श
विभोर्भालं मथा न मुसलेन च ॥ ६३ ॥ त्रटत्रटिति तच्चार्न लवणानलपूरितम् । शरावसंपुटं चाग्रे विभोरुत्तार्य सामु-
चत् ॥६४॥ सपादुकेन वामेन तद्भङ्क्त्वांघ्रिणा प्रभुः । जगत्प्राणस्य का लज्जा भवेद्बुद्बुदभञ्जने ॥ ६५ ॥ कौसुम्भवसनं
कण्ठे क्षिप्त्वा मदनरेखया । आकृष्य प्रापितो मातृगृहं स्वामी तया रयात् ॥६६॥ मितवस्त्रावृताङ्गोऽथ । मातॄणामग्रतः
प्रभुः । निषसादासने हैमे हंसः स्वर्णाम्बुजे यथा ॥ ६७ ॥ कन्दर्पराट्श्रीकरणमुद्राभमदनान्वितम् । वरवध्वोर्बबन्धेन्द्रः
कङ्कणं दक्षिणे करे ॥ ६८ ॥ उत्तानस्वच्छवस्त्रोर्मिस्फुटीभूतमुखाब्जयोः । तयोर्दर्शनमन्योन्यं वरवध्वोरभूत्तनः ॥ ६९ ॥
एकत्रोद्धृतयोः पिष्ट्वा शमीपिप्पलयोस्त्वचौ । हस्तालेपं वधूहस्ते विदधुः सधवाः स्त्रियः ॥ ७० ॥ लग्नसाम्यर्णभावेन
तुमुले विनिवारिते । समयः समयोऽस्तीति मौचैरुच्चरिते नरैः ॥७१॥ वधूहस्तं स्वहस्तेन शुभलग्नेऽग्रहीद्विभुः । उर्मिकां
चात्र सुत्रामा निक्षेप करसंपुटे ॥ ७२ ॥ युग्मम ॥

वन्दिचारकुलवृद्धाशीस्तूर्यमङ्गलगीतिभिः । हर्षकोलाहलैर्भूरि तदापूरि जगत्त्रयम् ॥७३॥ तारामेलोऽथ तत्स्वान्त-
गुणर्द्विपटयोः स्फुटम् । सकलः स्यूततां चक्रे दृग्ज्योत्स्नाहीरतन्तुभिः ॥ ७४ ॥ तया विश्वपतिर्युक्तो विश्वालङ्कनरूपया ।
प्रकामं कमनीयोऽभूत्क्षमयेव तपोगुणः ॥ ७५ ॥ भक्त्यारोप्य विभुं कट्यां शक्रो वेदिगृहं प्रति । चचालैवं च पौलोमी
वधूमुत्पाट्य तत्क्षणम् ॥ ७६ ॥ अवियुक्तकरं पद्माञ्चलमेतद्वधूवरम् । मिलितं चलदानन्दि कीर्तिदानोपमं बभौ ॥७७॥
पूर्वद्वारेण तत्रेशः प्रवेश्याथ तथास्थितः । गीतेषु मङ्गलेषूच्चैर्मुमुचे नमुचिद्विषा ॥ ७८ ॥ ज्वलनं मञ्जुलज्वालमभितः

प्यागन्ती हृदि निश्चेशं योगिनीव व्यराजत ॥ २७ ॥ वर्णकस्य विवादीव तस्या उद्वर्णकः कृतः । ताभिस्तथाविधानां
मङ्गिनीनामनुरागकृत् ॥२८॥ रत्नांशममणिस्यभृंगारस्पर्शिभिर्जलैः । हृष्यन्त्यः स्नपयामासुस्तास्तां न्यस्यासनान्तरे
॥ २९ ॥ पूर्तिनामहनुमैर्भूरीरामगन्धाननान्तरे । तथानपीरनिर्नीरशरीरचिकुरां च ताम् ॥ ३० ॥ रागस्तत्पादयोस्ताभि-
र्भगिनोऽस्तरलक्तकन्यात् । वीतरागेऽप्यहं योज्योऽनयेति विनयीव सः ॥३१॥ सा ताभिश्चन्दनश्वेतचीरमौक्तिकभूषणैः ।
स्वामिमालिन्कुटीनूनैरिव भाग्यैरलंकृता ॥ ३२ ॥ ताभिर्निदधिरे तस्याः केशेषु कुसुमस्रजः । प्रभुमीला स्मरेणेव
गोपगामामिरे शराः ॥ ३३ ॥ इत्थं विहितशृंगारा ताभिरुत्पाट्य सा रमात् । अन्तर्मातृगृहं नीत्वा हेमपीठे न्यवेशयत
॥ ३४ ॥ तत्रान्तरेऽथ जातिरा प्रभोर्व्याहमंगलम् । आययौ सपरीवारः कालज्ञा हि सुसेवकाः ॥ ३५ ॥ वसुपूज्यं
पुरस्कृत्य तेन गान्धोरभीरुणा । विवाहमंगलकृते कृतिनाभ्यर्थितः प्रभुः ॥ ३६ ॥ मोक्षाध्वरोधि भोक्तव्यं कर्म भेत्तुं
जिनोऽप्यथ । कामं जित्वा तदस्त्रं स्त्रीं पाणौ कर्तुं मनो दधे ॥ ३७ ॥ मलस्वेदादिमुक्तोऽपि विधिज्ञेन विडौजसा ।
अन्यपान मुदा रत्नप्रतिमास्थ इव प्रभुः ॥ ३८ ॥ सर्वांगीणं विभुर्भोगफलकर्मंजयोन्मुखः । दधौ धर्ममयं वर्म चन्दना-
नुलेपनम् ॥ ३९ ॥ नातृप्यमेव विभ्रद्भिरलच्छजलजोचितैः । न मुक्ताभरणैर्भर्तुः पिहिता देहदीधितिः ॥ ४० ॥
अन्तर्मुनगुणैः स्वामी वृतस्वच्छसितांशुकः । ज्योत्स्नावलितमाणिक्यशैलशृंगनिभो बभौ ॥४१॥ आरूढ मधुराराव-
मैरावणमथ प्रभुः । क्षीराब्धिवीचौ बालार्कप्रतिबिम्ब इवाचलत् ॥ ४२ ॥ करौघं चामरीकृत्य छत्रीकृत्य च मण्डलम् ।
महेन्द्राङ्गनं मेरुमिव देवमसेवत ॥४३॥ मुहूर्मंगल्यकलशः कलितः कुलनालया । प्रभोर्मुखाग्रे बभ्राम शोभाभिक्षु-

रिवोडुपः ॥ ४४ ॥ परीक्षादक्षयेन्द्राण्या लावण्यैकनिधेर्विभोः । मुहुरुत्तारणीकृत्य लवणं तत्यजेऽभितः ॥ ४५ ॥ मूढस्य गूढं तीर्थेशवरभावमजानतः । गलगर्जिभवस्येव तदा तूर्यस्वनोऽजनि ॥ ४६ ॥ पुरः सुरस्त्रियोऽनृत्यन्ध्वनद्धवलमंगलाः । प्रभुस्तासां प्रमोदाय दधौ हृष्टमिवाननम् ॥ ४७ ॥ मुहुर्मुहुः स्वपुत्रास्यं पश्यन्ती नृविमानगा । जगौ वृता सखीवृन्दै-र्जया धवलमंगलान् ॥ ४८ ॥ वसुपूज्यो नृसंघट्टस्पर्धावर्धिष्णुसंमदः । वृतः शक्रादिभिर्देवैर्दिव्ययानः पुरोऽचलत् ॥४९॥ इत्थं कृतार्थयन्नाथो जनाक्षीण्यमृतप्लवैः । आसदन्मण्डपद्वारं पूर्वाद्रिमिवोडुपः ॥ ५० ॥ मुक्तयानः स्थितस्तत्र शक्र-हस्तावलम्बनः । लग्नकूलो मुनेरात्मा ध्येयलग्न इव प्रभुः ॥ ५१ ॥ तदा मदनरेखा तु तत्तत्कृत्योत्कराकुला । अन्त-रन्तःपुरनारीरादिदेशेति योषितः ॥ ५२ ॥ हंसि धेहि मणिस्थालं चम्पिके चन्दनं नय । आलि शालिकणान् मुञ्च दधि धारय धारिणि ॥५३॥ तरले सरलं वासः कौसुम्भं प्रगुणीकुरु । तिलकं स्थापय स्थाने मदने वदने मम ॥५४॥ मुखरे शेखरं यच्छ स्रजः सज्जय सज्जने । कर्पूरे देहि कर्पूरं मृगनाभिं मृगि स्मर ॥५५॥ किमेवं मन्दचारिण्यो यूयं किं नात्र पश्यत । नन्वयं वीक्ष्यते द्वारि वरस्त्रिजगतीवरः ॥५६॥ पञ्चभिः कुलकम् ॥ प्रभुलावण्यदेहार्चिस्पर्धिनौ द्वारि काप्यथ । शरावसंपुटे क्षिप्त्वा मुमोच लवणानलौ ॥५७॥ दूर्वादधिशुभं स्थालं दधौ कापि प्रभूत्सवे । संक्षिप्तागतनी-लाब्जफेनभून्मानसोपमम् ॥५८॥ मन्थानं मुसलं काचित्पाणौ कृत्वा पुरः स्थिता । कर्माणि मथितुं भक्तुं प्रभोः शक्ति-रिवाङ्गिनी ॥५९॥ चक्रेऽथ चान्दनान्स्थूः श्रीविभोस्तिलकानिव । अङ्गेषु सोत्तमाङ्गेषु निधिश्रीदर्पणानिव ॥६०॥ अर्घ देवार्घदेऽर्घ्योय वरायेति गुरुस्वरैः । धवले गीयमाने सा प्रभोरर्घं ददाविति ॥६१॥ जगतां मङ्गलस्यापि दूर्वादध्य-

मामिव ॥९॥ नयुक्तं संप्रति गन्तुमिदानीं तस्य भूपतेः । युक्तमेवेत्यमालोच्य सोऽचलत्सपरिच्छदः ॥१०॥ अमन्दानन्द-महिमाविभावभिन्नां नृपौ । पुरूपदिष्टनत्वार्थश्रोतृश्रद्धारमाविव ॥११॥ आश्लेषकुशलप्रश्नप्रीतिवाक्यप्रमोदिनौ । एक-स्यन्दनमारूढौ तौ पुरान्तमुपेयतुः ॥१२॥ लीलाविलासमध्यास्य तत्रावासे महीयसि । यथोचितं च सत्कृत्य वसुपूज्यो-ऽविशत्पुरीम् ॥१३॥ अन्तः संततसंचारैः सचिवैः शुचिवाचकैः । प्रवर्तयांचक्रतुस्तौ च वरकन्याकरग्रहम् ॥१४॥ ददौ कृत्यविधानाय तद्दिनात्सप्तमेऽहनि । उभाभ्यां मत्कृतः शुद्धं लग्नं ज्योतिर्विदां वरः ॥१५॥ पादौ प्रक्षाल्य कल्याणप्रदौ कल्याणदायकान् । नृपः श्रीवासुपूज्याय कन्यां स प्रददौ मुदा ॥ १६ ॥ शुभेऽहनि जयादेव्या तया मदनरेखया । पत्रे कर्म वेषाणां गानैर्मङ्गलमङ्गलैः ॥ १७ ॥ संमर्दचकिता विद्यादेवता इव षोडश । स्तम्भाग्रण्यमजन्नाथमीक्षितुं शालभञ्जिकाः ॥ १८ ॥ समुत्कायन्मयुक्ताश्मशीलचन्द्रोदयच्छलात् । चन्द्रपूर्णे विमूढाहे प्रासमिन्द्रद्रुमद्रुनभः ॥ १९ ॥ दिग्मुखानीव चत्वारि सोत्कण्ठानीक्षितुं विभुम् । चलचन्दनमालाभ्रूभाञ्जि स्तम्भान्तराण्यभुः ॥२०॥ नवाङ्कवेदिकाद्-म्यनिशिकुम्भोपलक्षिताः । तस्थुः स्वामिसेवार्थे त्रिपथगामिणां दिशाम् ॥२१॥ अपि श्रीवासुपूज्यस्य विवाहोपकृतौ नगम् । इति रोमाञ्चिता येषां पशुर्यद्वैर्यवाङ्कुरैः ॥ २२ ॥ इतश्च तेतुरभ्यङ्गमङ्गनाः कृतमंगलाः । स्वर्णासनजुषः प्रभा-सुगन्धिभिः सुगन्धिभिः ॥ २३ ॥ उद्वर्तयांचभूवुस्ता हृष्टाः पिष्टातकैरिमाम् । अन्या मन इव स्वामिगुणालीगानमङ्गलैः ॥२४॥ अङ्गेषु नयनु न्यन्तमङ्गन्यतिलका प्रभुः । तस्यां नवगृहीतोपा इव स्वामिकरग्रहे ॥ २५ ॥ नदङ्गं भाग्यसौधं शान्त्यमितिकान्तमभूषयत् । तत्कुसुम्भसूत्रेणास्पृशन्मध्यापमध्ययोः ॥२६॥ वर्णकैर्निर्मिता सेयं ताभिः संलब्धचापला ।

कान्तया सह । स्वाम्यभ्राम्यद्यथा मेरुं दिनाधीशो दिनश्रिया ॥ ७९ ॥ लीलाविलासादेशेन मन्त्रीशस्त्रिजगद्विभोः ।
सुलक्षणान्परोलक्षांस्तुरङ्गांस्तुरगान्ददौ ॥ ८० ॥ अथैवं वर्तिते मन्त्री द्वितीये मङ्गले विभोः । परःसहस्रान्करिणः
प्रमोदादुन्मदानदात् ॥८१॥ तृतीये मङ्गले जाते सचिवः स्वामिने ददे । कोटिमूल्यानलंकारसमुदायान्परःशतान् ॥८२॥
चतुर्थे मङ्गले पूर्णे प्रभौ मन्त्री वितीर्णवान् । स्वर्णमौक्तिकमाणिक्योत्कराञ्श्रीकेलिपर्वतान् ॥ ८३ ॥ चतुर्थे मङ्गले पुत्री
परकीयेति निष्ठुरे । गीते हर्षाश्रु वध्वम्बा तस्मै जाड्यभिदे ददौ ॥ ८४ ॥ कौतुकमङ्गलोद्धानमथ चक्रे मिथस्तदा । वर-
वध्वाश्चर्यैर्योषिज्जनैर्जनितसंमदैः ॥ ८५ ॥ दानैर्मनोरथातीतैरर्थिनोऽथ कृतार्थयन् । वरवध्वोर्व्यधादिन्द्रः कराञ्चलविमो-
चनम् ॥८६॥ कोटिद्रव्यप्रदं देशं पाणिमोक्षणपर्वणि । दत्तवान्स्वामिनोऽमात्यः प्रणिपत्य प्रमोदनः ॥ ८७ ॥ हावभाव-
भवद्भङ्गीसंगीतप्रभुकीर्तयः । स्वस्वहर्षैरथानृत्यन्सुरासुरनरस्त्रियः ॥ ८८ ॥ विहितातुल्यमङ्गल्यः पत्न्या सह महोत्सवैः ।
आरुह्यैरावणं नाथः स्वस्थानार्थमथाचलत ॥८९॥ एति पञ्चमहाशब्दैः सप्रियः प्रभुरित्यथ । औत्सुक्यापूर्णशृङ्गारा दधा-
वुर्नागराङ्गनाः ॥ ९० ॥ उत्तरीयं करे कापि कुर्वती सत्वरागमत् । स्वामिनो न्युञ्छनं कर्तुमिवाद्भुतवपुःश्रियः ॥ ९१ ॥
अताडङ्कोऽथ ताडङ्की रम्यः कर्ण इति प्रभुम् । सुकर्णी मण्डुकामेव काप्यागादेककुण्डला ॥९२॥ कस्तूर्यालिप्य काप्या-
स्यं रभसा चन्दनैः शिरः । शृंगारोऽधः शमस्तूच्चैरिनीवेष्टं विभोर्व्यधात् ॥९३॥ नार्हतः प्रतिमः कोऽपीत्यर्थे काप्यभि-
मानिनी । कुष्टसपंकरेवागाद्वेणीगुम्फनतत्परा॥९४॥ ओमुक्याद्यावकभ्रान्त्या काप्यधादधरेऽञ्जनम् । ज्ञापयन्तीव शृङ्गार-
रसपूरावधिं विभोः ॥९५॥ कापि कण्ठोचिते माल्ये त्वरावेशात्करस्थिते । आगादाज्ञेव पुष्पेपोरस्त्रपाणिः पुरः प्रभोः

॥९६॥ स्वरविस्मृताकारापि वैरूप्यं कापि नाप यत्। तच्चित्रं सुदती स्वामिवीक्षाहर्षस्मितैर्दृशो ॥९७॥ इत्थमानन्दमंदिरे पुरे विभ्रदय प्रभुः। सप्रियः प्राविशत्सौधं योगी शुद्धं लयं यथा ॥९८॥ प्रभुं प्रणम्य रम्यास्यां जगामापृच्छ्य भक्तितः। परिरम्भकृतोल्लासः शक्रः स्वाश्रममासदत् ॥९९॥ सुवर्णवस्त्रमाणिक्यमौक्तिकालंकृतीः पराः। पद्मावत्यै ददौ संख्यातीताः प्रभुपिता ततः ॥३००॥ अशनांशुकताम्बूलालंकारादिप्रदानतः। विवाहोऽभूत्तथान्योन्यं नोपमापि यथा जने ॥१॥ लीलाविलासभूपालः स्वर्णाश्वेभरथांशुकैः। सन्मान्य वसुपूज्येन स्वदेशाय व्यसृज्यत ॥२॥

ततः श्रीवासुपूज्योऽसौ ज्ञानत्रितयदृष्टिभिः। दृष्टभूतभवद्भाविभावोऽप्यभ्रान्तिभागपि॥३॥भवाब्धेर्जनमुद्धर्तुमातन्वानोऽपि चेतसा। मोक्षलक्ष्मीपरीरम्भारम्भे संरम्भवानपि ॥४॥ परं भोगफलं कर्म भोक्तव्यमिति निश्चयात्। किंचित्कारं संसारव्यापारकरणं मनः॥५॥त्रिभिर्विशेषकम्॥ कदाचिद्दद्भुतारामे कदाचित्सिन्धुरोधसि। कदाचित्केलिशैलेषु कदाचित्सिन्धुसु ॥ ६ ॥ कदाचिद्वनितोल्लासवल्लीमकविलोकने। कदाचित्किन्नरीतारगीताकर्णनकौतुके ॥ ७ ॥ कदाचिन्मघवादिष्टसुरीघटितनाटके। स्वामी विनिर्ममे कर्मनिर्जरां निर्जरैर्नुतः ॥ ८ ॥ त्रिभिर्विशेषकम् ॥ जगन्मित्रस्य मित्राणि विश्वसेव्यस्य सेवकाः। विशेषज्ञा विशेषेणाभवन्भूपाः शतानि षट् ॥९॥ आसने क्रीडने यानेऽवस्थाने शयनेऽशने। पार्श्वं पप्राहितस्तेऽस्फुरंगानि भविनो यथा ॥१०॥ ते निर्मलगुणाः स्वाम्यासत्तेजाताः सुदर्शनाः। स्वर्णकेनकसांगत्यापायमोदोद्भवाः पराः ॥११॥ एतानद्भुतसत्त्वांश्च प्रभुस्तत्त्वानि बोधयन्। सुखेन गमयामास वासरान्प्रीतिभासुरान् ॥१२॥ अन्यदा संमदापेशो मातापित्रोर्जनस्य च। लीलारामं समित्रोऽगाद्वसन्तोत्सवमीक्षितुम् ॥ १३ ॥ वलगत्तिलक-

किंजल्कद्रवोर्वीसेककर्मभिः । सिन्धुवारसुमस्फारमुक्तास्वस्तिकराजिभिः ॥१४॥ उड्डीनाम्रपरागोर्मिप्रसरद्गन्धमुष्टिभिः । क्रीडाद्रिनिर्झरोद्गारतूर्यतारस्वनैः ॥ १५ ॥ मरुत्कम्पितकंकेल्लिवल्लीपल्लवनर्तनैः । बकुलामोदमत्तालिश्रेणिवेणुमृदुस्वनैः ॥ १६ ॥ कलकण्ठीकुहूकारपञ्चमोच्चारगीतिभिः । कूजत्कीरमहावन्दिसंदोहजयघोषणैः ॥ १७ ॥ चानम्रफलविस्मेरपुष्पारात्रिकमङ्गलैः । मलयानिलसंश्लिष्टपाटलाञ्चलवीजनैः ॥ १८ ॥ किंशुकांजनवासन्तीविचित्रन्युञ्छनांशुकैः । विशतो विश्वनाथस्योद्यानश्रीरुत्सवं व्यधात् ॥१९॥ षड्भिः कुलकम् ॥ लीलारामे प्रसर्पन्ती स्वभावतरला विभोः । प्रसादविशदा दृष्टिः सुधावृष्टिरिवाऽरभौ ॥ २० ॥ अथासीन प्रभुः पीठे रक्ताशोकतरोस्तले । स्वकायकान्तिभिस्तन्वन्ना स्तम्भोऽस्य पल्लवान् ॥२१॥ कुसुमाभरणैर्भूरि । भूषितोऽभाद्विभुस्तदा । अदीनशारदीनाभ्रश्रेणिर्मगिगिरिर्यथा ॥२२॥ आन्दोलनजलक्रीडाशृंगारोद्गारिगीतिभिः । प्रमादिनं जनं वीक्ष्य विभुरेवं व्यचिन्तयत् ॥२३॥ अहो मोहः कियानेष निःशेषज्ञानहानिकृत् । यत्प्रभावादसद्भावाः सद्भावा भविनां हृदि ॥ २४ ॥ नारीं पश्यन्ति दोलास्थां विमानान्तः सुरीमिव । न धैर्यध्वंसिनीमन्धाः पाशबद्धां शिलामिमाम् ॥२५॥ स्वं दोलान्दोलितं वेत्ति न पुनर्मुग्धधीर्जनः । किं कर्माय गतौ नेयः पचेति धात्रा तुलाधृतम् ॥२६॥ जानन्नम्भोऽकर्णं रागाब्धिवीचीति प्रियेक्षणम् । न प्रमादाग्निदग्धस्य ज्वालां पुण्यौकसो जडाः ॥२७॥ क्रीडाजलकणान्मुक्ताः स्वतनौ मनुते जनः । श्रेयोऽङ्गे विषयैस्तप्ते नैतत्विटरूपकम् ॥२८॥ गीतं कामास्त्रझङ्कार इत्यागच्छति जनोऽल्पधीः । न त्वेवं दुर्गतिद्वारकपाटोद्घाटनध्वनिः ॥२९॥ गीतगाने शिरःकम्पः श्लाघायां तन्यते जडैः । महाप्रमादोऽयमिति निषेधे ज्ञायते न किम् ॥३०॥ विश्वत्रयसमृद्ध्यापि नाप्यते जन्म मानुषम् । तदित्थं हार्यते व्यर्थमहो

॥९६॥ स्वरानिस्पन्दनाराषि वैकल्यं क्वापि नाप यत्। तच्चिद्रूपं सुदती स्वामिवीक्षाहर्षसितैर्दधौ ॥९७॥ इत्थमानन्दसंदर्भे पुरे पिथ्रवस् प्रभुः। सप्रियः प्राविशत्सौधं योगी शुद्धं लयं यथा ॥९८॥ प्रभुं प्रणम्य रम्यास्यां जगामापृच्छय नन्दिताः। परिस्पन्दहृतोल्लासः शक्रः स्वाधाममासदत् ॥९९॥ सुवर्णरत्नमाणिक्यमौक्तिकालंकृतीः पराः। पद्मावत्यै ददौ संगतातीताः प्रभुपिता ततः ॥२००॥ अशनांशुकताम्बूलालंकारादिप्रदानतः। विवाहोऽभूत्तथान्योन्यं नोपमापि यथा जने ॥१॥ लीलाविलासभूपालः स्वर्गांधिभरयांशुकैः। सन्मान्य वसुपूज्येन स्वदेशाय व्यसृज्यत ॥२॥

ततः श्रीवासुपूज्योऽसौ ज्ञानत्रितयदृष्टिभिः। दृष्टभूतभवद्भाविभावोऽप्यभ्रान्तिभागपि॥३। भवाब्धेर्जनमुद्धर्तुमातपस्योऽपि चेतसा। मोक्षलक्ष्मीरतीरम्भाम्भे संरम्भवानपि ॥४॥ परं भोगफलं कर्म भोक्तव्यमिति निश्चयात्। किंचित्कारं संसारव्यापारकरणं मनः॥५॥त्रिभिर्विशेषकम्॥ कदाचिदद्भुतारामे कदाचित्सिन्धुरोधसि। कदाचित्केलिशैलेषु कदापिविभ्रमसद्मसु ॥ ६ ॥ कदाचिद्वनितोल्लासहल्लीसकविलोकने। कदाचित्किन्नरीतारगीताकर्णनकौतुके ॥ ७ ॥ कदाचिन्मगधादिष्टपुरीघटितनाटके। स्वामी विनिर्ममे कर्मनिर्जरां निर्जरैर्नुतः ॥ ८ ॥ त्रिभिर्विशेषकम्॥ जगन्मित्रस्य मित्राणि विश्वसेव्यस्य सेवकाः। विशेषज्ञा विशेषेणाभवन्भूपाः शतानि षट् ॥९॥ आसने क्रीडने यानेऽवस्थाने शयनेऽशने। पार्श्वं एवार्हतस्तेऽस्युरंगानि भविनो यथा ॥१०॥ ते निर्मलगुणाः स्वाम्यास्यसरोजाताः सुदर्शनाः। स्वर्णकेतकमागन्धायधानोदोद्ध्याः षदाः ॥११॥ एतानद्भुततत्त्वांश्च प्रभुस्तत्त्वानि बोधयन्। सुखेन गमयामास वासरान्प्रीनिभासुरान् ॥१२॥ अन्यदा मदनापेतो मातापित्रोर्जनस्य च। लीलारामं समित्रोऽगाद्वसन्तोत्सवमीक्षितुम् ॥ १३ ॥ वलत्तिलक-

किंजल्कद्रवोर्वीसेककर्मभिः । सिन्धुवारसुमस्फारमुक्तास्वस्तिकराजिभिः ॥१४॥ उड्डीनाभ्ररागोर्मिप्रसरद्गन्धमुष्टिभिः ।
क्रीडाद्रिनिर्झरोद्गारतूर्यतारस्वनैः ॥ १५ ॥ मस्तकम्पितकंकेल्लिवल्लीपल्लवनर्तनैः । वकुलामोदमत्तालिश्रेणिवेणुमृदुस्वनैः
॥ १६ ॥ कलकण्ठीकुहूकारपञ्चमोच्चारगीतिभिः । कूजत्कीरमहावन्दिसंदोहजयघोषणैः ॥ १७ ॥ चारुचम्पकविस्मेरपुष्पा-
रात्रिकमङ्गलैः । मलयानिलसंश्लिष्टपाटलाञ्चलवीजनैः ॥ १८ ॥ किंशुकांजनवासन्तीविचित्रन्युञ्छनांशुकैः । विशतो
विश्वनाथस्योद्यानश्रीरुत्सवं व्यधात् ॥१९॥ षड्भिः कुलकम् ॥ लीलारामे प्रसर्पन्ती स्वभावतरला विभोः । प्रसादविशदा
दृष्टिः सुधावृष्टिरिवाबभौ ॥ २० ॥ अथासीन प्रभुः पीठे रक्ताशोकतरोस्तले । स्वकायकान्तिभिस्तन्वन् स्तम्भात्तस्य
पल्लवान् ॥२१॥ कुसुमाभरणैर्भूरि । भूषितोऽभाद्विभुस्तदा । अदीनशारदीनाभ्रश्रेणिर्मणिगिरिर्यथा ॥२२॥ आन्दोलन-
जलक्रीडाशृंगारोद्गारिगीतिभिः । प्रमादिनं जनं वीक्ष्य विभुरेवं व्यचिन्तयत् ॥२३॥ अहो मोहः कियानेष निःशेषज्ञान-
हानिकृत् । यत्प्रभावादसद्भावाः सद्भावा भविनां हृदि ॥ २४ ॥ नारीं पश्यन्ति दोलास्थां विमानान्तः सुरीमिव । न
धैर्यध्वंसिनीमन्धाः पाशबद्धां शिलामिमाम् ॥२५॥ स्वं दोलान्दोलितं वेत्ति न पुनर्मुग्धधीर्जनः । किंकर्माय गतौ नेयः
क्वेति धात्रा तुलावृतम् ॥२६॥ जानन्नम्भोऽरुणं रागाब्धिवीचीति प्रियेक्षणम् । न प्रमादाग्निदग्धस्य ज्वालां पुण्यौकसो
जडाः ॥२७॥ क्रीडाजलकणान्मुक्ताः स्वतनौ मनुते जनः । श्रेयोंऽगे विपयैस्तप्ते नैतत्विदरूपेकम् ॥२८॥ गीतं कामास्त्रझंकार
इत्याख्याति जनोऽल्पधीः । न त्वेवं दुर्गतिद्वारकपाटोद्घाटनध्वनिः ॥२९॥ गीतगाने शिरःकम्पः शंसायां तन्यते जडैः ।
महाप्रमादोऽयमिति निषेधे ज्ञायते न किम् ॥३०॥ विश्वत्रयसमृद्ध्यापि नाप्यते जन्म मानुषम् । तदित्थं हार्यते व्यर्थमहो

मोहो महानिह ॥३१॥ तदेवं सर्वथा मूढजनमौढीकृतो भवः । उचितस्त्वकुमैवायं महतामहतात्मनाम् ॥३२॥ तदद्यापि
किपन्नोगफलं कर्मेदमस्ति मे । इति तत्रावगिज्ञानं प्रभुः प्रथितवांस्ततः ॥३३॥ जन्मतो वर्षलक्षेषु गतेष्वष्टादशस्वथ ।
कर्मभोगफलं मुक्तमिति मत्वावधेस्तदा॥३४॥उच्चैर्निःश्रेयसस्थानारोहणैकाधिरोहिणीम् । दीक्षां ग्रहीतुकामोऽभूज्जितकामो
जयांगजः ॥ ३५ ॥ युग्मम् ॥ अस्मिन्नवसरे ब्रह्मलोकात्पञ्चमकल्पतः । लोकान्तिकाख्याः सम्यक्त्वपरिणामा महर्द्धिकाः
॥३६॥ स्वस्वासनप्रकम्पेन प्रयुक्तावधयः क्षणात् । ज्ञातद्वादशतीर्थेशव्रतकालाः, क्रियाविदः॥३७॥सारस्वरता अथादित्या
वह्नयो वरुणास्तथा । गर्दतोयाश्च तुषिता अव्याबाधाभिधा अपि॥३८॥मरुतोऽरिष्टसंज्ञाश्च नवैते निर्जरव्रजाः । आगत्य
स्वामिनं भक्त्या प्रणिपत्य व्यजिज्ञपन्॥३९॥चतुर्भिः कलापकम् ॥ जीवान्भवाम्बुधौ मग्नानुद्धर्तुमर्हतं परैः । शुद्धधर्ममयं
तीर्थं तीर्थनाथ प्रवर्तय ॥४०॥ अथैवं विज्ञपय्यैते ज्ञातकृत्यमपि प्रभुम् । प्रणिपत्य यथास्थानं जग्मुर्मुदितमानसाः ॥४१॥
लीलारामादथ स्वामी कामी दीक्षापरिग्रहे । आगत्य स्वालयं मातापित्रोः पार्श्वेऽभ्यधादिति ॥ ४२ ॥ मानस्तात न मे
स्वान्तं लीलारामे धृतिं दधौ । ततो मामनुजानीतमात्मारामाय संप्रति ॥४३॥नाचार्जवोज्ज्वलस्वान्तावूचतुः सर्ववेदिनम् ।
कस्मान्मीगः क आरामो यत्र ते रमते मनः॥४४॥मानस्तात न भापेऽहं स्वं कंचिद्भूरुहां चयम् । यद्भवेत् स्वो न कायोऽपि
का कथा दोरवस्तुषु ॥४५॥ आत्मारामममुं वच्मि कषायविषयोज्झितम् । इष्टानिष्टे समं शुद्धध्येयचद्धलयं मनः॥४६॥
तत्रामेतं मम स्वान्तं प्राप्यते तत्तु दीक्षया । ततो मामनुमन्येथामस्यै यथास्मि वल्लभः ॥४७॥ आकर्ण्य कर्णकटुकं पटुकं
मवचः प्रभोः । जननीजनकौ जातमूर्छापतनौ क्षितौ ॥४८॥ मतः शीतोपचारेण चिरेणाश्रितचेतनौ । कल्पितानेकसं-

कल्पावनल्पं तावजल्पताम् ॥ ४९ ॥ त्वन्नः सर्वजनीनात्किं दुःसहास्मासु वागभूत् । यद्वा वत्स कदाप्यब्दादग्निः क्वापि
पतेत्तडित् ॥५०॥ नवे वयसि दीक्षार्थमित्थं जल्पन्भवानभूत् । प्रातर्वैकालिकं याचन्निव मुग्धास्य हास्यकृत् ॥ ५१ ॥
एकादशभिरर्हद्भिः श्रीनाभेयपुरःसरैः । राज्यं विधाय जगृहे व्रतं तेऽपि शिवं ययुः॥५२॥त्वं जिनो द्वादशस्तावद्गमिष्यसि
शिवं ध्रुवम् । तदूर्ध्वं तु गतिर्नेति राज्य प्राज्यसुखं भज ॥५३॥ अथ दन्तांशुमुक्ताखग्भूषिता भारती परा । वितेने श्री-
जिनेन्द्रेण मातापित्रोः प्रबोधिनी॥५४॥सत्यं यदुःसहा मद्वाक् परं मोहवृतात्मनाम् । यथा क्वथाकरी विश्वे नेत्ररुग्नेत्ररो-
गिणाम् ॥ ५५ ॥ नवे वयसि या दीक्षा नैव हास्याय सा सताम् । न हि पीयूषपानेऽपि प्रस्तावः प्रेक्ष्यते बुधैः ॥ ५६ ॥
भोक्तुं भोगफलं कर्म राज्यं चक्रे जिनैः पुरा । तदेवमेव मे छिन्नं तद्राज्ये कृते फलम्॥५७॥राज्येऽपि न सुखं यस्माद्दुः-
खमैश्वर्यमानतः । रसाधिक्यानुमानेन व्याधयः पीडयन्ति यत् ॥५८॥ तस्मान्मोहं परित्यज्य पूज्यौ सज्जं व्रताय माम् ।
सर्वथैवानुमन्येथामिहार्थेऽस्मि कृताञ्जलिः ॥५९॥ इति श्रुत्वा गलत्सत्त्वा त्रपां त्यक्त्वा जया रयात् । तथारोदीद्यथा
लोकांश्चित्रस्थानप्यरोदयत् ॥६०॥ उत्सङ्गसङ्गिनं कृत्वा स्पृशन्ती पाणिना प्रभुम् । बभाषे बाष्पसंरुद्धकण्ठा कुण्ठगिरा
जया ॥६१॥ हा वत्स मयि वात्सल्यं तवेदं क्व नु गतं क्षणात् । यत्त्वं मे दारयस्येवं हृदयं व्रतवार्तया ॥६२॥ मालतीमुकुले
युक्तं किं कुकूलाग्निमोचनम् । योग्यं वा नलिनीनाले क्वचित्क्रकचदारणम् ॥६३॥ वरं क्षौमाम्बरे किं स्यात्कर्करोत्करबन्ध-
नम् । उचैर्मरिचचूर्णस्योचितः क्षेपः किमीक्षणे ॥६४॥ काचकुम्भे किमु श्रेष्ठं हठान्मुद्गरताडनम् । किं रम्भास्तम्भगर्भेऽसि-
घातपातः सतां मतः ॥६५॥ अस्मिञ्शिरीषपुष्पाग्रसुकुमारे कुमार किम् । केशोन्मूलनमुख्यानि कष्टानीष्टानि

मोहो महानिह ॥३१॥ तदेवं सर्वथा मूढजनमोहीकृतो भवः । उचितस्त्वत्रुमेयायं महतामहतात्मनाम् ॥३२॥ तदद्यापि किंयद्भोगफलं कर्मेदमस्ति मे । इति तत्रावधिज्ञानं प्रभुः प्रथितवांस्ततः ॥३३॥ जन्मतो वर्षलक्षेषु गतेष्वष्टादशस्वथ । कर्मभोगफलं भुक्तमिति मत्वावधेस्तदा॥३४॥उच्चैर्निःश्रेयसस्थानारोहणैकाधिरोहिणीम् । दीक्षां ग्रहीतुकामोऽभूज्जितकामो जयांगजः ॥ ३५ ॥ युग्मम् ॥ अस्मिन्नवसरे ब्रह्मलोकात्पञ्चमकल्पतः । लोकान्तिकाख्याः सम्यक्त्वपरिणामा महर्द्धिकाः ॥३६॥ स्वस्वासनप्रकम्पेन प्रयुक्तावधयः क्षणात् । ज्ञातद्वादशतीर्थेशव्रतकालाः क्रियाविदः॥३७॥सारस्वता अथादित्या वह्नयो वरुणास्तथा । गर्दतोयाश्च तुषिता अव्याबाधाभिधा अपि॥३८॥मरुतोऽरिष्टसंज्ञाश्च नवैते निर्जरव्रजाः । आगत्य स्वामिनं भक्त्या प्रणिपत्य व्यजिज्ञपन्॥३९॥चतुर्भिः कलापकम् ॥ जीवान्भवाम्बुधौ मग्नानुद्धर्तुमरतं परैः । शुद्धधर्ममयं तीर्थं तीर्थनाथ प्रवर्तय ॥४०॥ अथैवं विज्ञपय्यैते ज्ञातकृत्यमपि प्रभुम् । प्रणिपत्य यथास्थानं जग्मुर्मुदितमानसाः ॥४१॥ लीलारामादथ स्वामी कामी दीक्षापरिग्रहे । आगत्य स्वालयं मातापित्रोः पार्श्वेऽभ्यभादिति ॥ ४२ ॥ मातस्तात न मे स्वान्तं लीलारामे धृतिं दधौ । ततो मामनुजानीतमात्मारामाय संप्रति ॥४३॥तावार्जवोज्ज्वलस्वान्तावूचतुः सर्ववेदिनम् । वत्सात्मीयः क आरामो यत्र ते रमते मनः॥४४॥मातस्तात न भाषेऽहं स्वं कंचिद्भूरुहां चयम् । यद्भवेत् स्वो न कायोऽपि का कथा शेषवस्तुषु ॥४५॥ आत्मारामममुं वच्मि कषायविषयोज्झितम् । इष्टानिष्टे समं शुद्धध्येयवल्लयं मनः॥४६॥ तत्रासक्तं मम स्वान्तं प्राप्यते तच्च दीक्षया । ततो मामनुमन्येथामस्मै यत्नमि वल्लभः ॥४७॥ आकर्ण्य कर्णकटुकं यद्वचः तद्वचः प्रभोः । जननीजनकौ जातमूर्छावपतनां क्षितौ ॥४८॥ ततः शीतोपचारेण चिरेणाश्रितचेतनौ । कल्पितानेकसं-

कल्पावनल्पं तावजल्पताम् ॥ ४९ ॥ त्वत्तः सर्वजनीनात्किं दुःसहास्मासु वागभूत् । यद्वा वत्स कदाप्यब्दादपि क्वापि
पतेत्तडित् ॥५०॥ नवे वयसि दीक्षार्थमित्थं जल्पन्भवानभूत् । प्रातर्वैकालिकं याचन्निव मुग्धास्य हास्यकृत् ॥ ५१ ॥
एकादशभिरर्हद्भिः श्रीनाभेयपुरःसरैः । राज्यं विधाय जगृहे व्रतं तेऽपि शिवं ययुः॥५२॥त्वं जिनो द्वादशस्तावद्गमिष्यसि
शिवं ध्रुवम् । तदूर्ध्वं तु गतिर्नेति राज्य प्राज्यसुखं भज ॥५३॥ अथ दन्तांशुमुक्तास्रग्भूषिता भारती परा । वितेने श्री-
जिनेन्द्रेण मातापित्रोः प्रबोधिनी॥५४॥सत्यं यद्दुःसहा मद्वाक् परं मोहवृतात्मनाम् । यथा व्यथाकरी विश्वे नेत्ररुग्नेत्ररो-
गिणाम् ॥ ५५ ॥ नवे वयसि या दीक्षा नैव हास्याय सा सताम् । न हि पीयूषपानेऽपि प्रस्तावः प्रेक्ष्यते बुधैः ॥ ५६ ॥
भोक्तुं भोगफलं कर्म राज्यं चक्रे जिनैः पुरा । तदेवमेव मे छिन्नं तन्न राज्ये कृते फलम्॥५७॥राज्येऽपि न सुखं यस्माद्दुः-
खमैश्वर्यमानतः । रसाधिक्यानुमानेन व्याधयः पीडयन्ति यत् ॥५८॥ तस्मान्मोहं परित्यज्य पूज्यौ सज्जं व्रताय माम् ।
सर्वथैवानुमन्येथामिहार्थेऽस्मि कृताञ्जलिः ॥५९॥ इति श्रुत्वा गलत्सत्त्वा त्रपां त्यक्त्वा जया रयात् । तथारोदीद्यथा
लोकांश्चित्रस्थानप्यरोदयत् ॥६०॥ उत्सङ्गसङ्गिनं कृत्वा स्पृशन्ती पाणिना प्रभुम् । बभाषे बाष्पसंरुद्धकण्ठा कुण्ठगिरा
जया ॥६१॥ हा वत्स मयि वात्सल्यं तत्ते क्व नु गतं क्षणात् । यत्त्वं मे दारयस्येवं हृदयं व्रतवार्तया ॥६२॥ मालतीमुकुले
युक्तं किं कुकूलाग्निमोचनम् । योग्यं वा नलिनीनाले क्वचित्क्रकचदारणम् ॥६३॥ वरं क्षौमाम्बरे किं स्यात्कर्करोत्करबन्ध-
नम् । उच्चैर्मरिचचूर्णस्योचितः क्षेपः किमीक्षणे ॥६४॥ काचकुम्भे किमु श्रेष्ठं हठान्मुद्गरताडनम् । किं रम्भास्तम्भगर्भेऽसि-
घातपातः सतां मतः ॥६५॥ अपि शिरीषपुष्पाग्रसुकुमारे कुमार किम् । केशोन्मूलनमुख्यानि कष्टानीष्टानि

तेऽङ्के॥६६॥चतुर्भिःकलापकम्॥अथाहार्हन्सुधासारं विश्वतापहरं वचः। अहद्यैः खिद्यसे मातः किमेभिः कुविकल्पनैः॥६७॥
सौकुमार्यं बहिःस्पर्शे सारत्वं चान्तरं स्थिरम्। अर्हतां जायतेऽङ्गेषु वज्रेष्विव जनोत्तरम् ॥ ६८ ॥ इति श्रुत्वा व्रतार्थित्वे
मत्वा नाथस्य निश्चयम्। जगाद भगवत्पूज्यां वसुपूज्यनृपो जयाम्॥६९॥धन्यां मन्यामहे देवि त्वामेव भुवनत्रये। सुरा-
सुरनरेन्द्रार्च्यः सूनुर्यस्या जिनोऽजनि॥७०॥ततः स्वकीयपुण्यैकप्रासादस्याधुनाद्भुतम्। अर्हद्दीक्षानुमत्या त्वं कलशारोपणं
कुरु॥७१॥एवमुक्तावदन्मुक्ताकान्तिकान्तान्वया जया। मत्सुतस्य भवत्विष्टं हृष्टास्म्येतावताप्यहम्॥७२॥ततः कृताञ्जलिः
स्वामी तावापृच्छ्य प्रमोदतः। सांवत्सरिकमारेभे दानं सर्वार्हतां मतम् ॥ ७३ ॥ आसमुद्रमसुद्रं तद्दानं दातुमिलातले।
जिनो जङ्गमकल्पद्रूश्चकार क न किंकरान् ॥ ७४ ॥ यस्मै यद्रोचते तेन तद्ग्राह्यमिति गर्जितः। जातस्ताम्बुदाः स्वामि-
मन्त्रिणो वव्रुर्भुवि ॥ ७५ ॥ क्षीणस्वामीनि नष्टानि प्रभ्रष्टानि चिरादपि। क्षेत्रश्मशानवेश्मादिक्षितिखातगतान्यपि
॥ ७६ ॥ पुञ्जितान्यद्रिकुञ्जेषु यत्र तत्र स्थितानि वा। अतिप्रलीनसेतूनि च्युतकेतूनि सर्वथा ॥ ७७ ॥ शक्रादिष्टधना
धीशनियुक्ता जृम्भकामराः। सुवर्णरत्नवित्तानि दाने भर्तुरपूरयन् ॥७८॥ त्रिभिर्विशेषकम् ॥ साष्टलक्षां प्रभुः स्वर्णको-
टीमेकां दिने दिने। ददावाभोजनारम्भमारभ्य दिवसोदयात् ॥७९॥ इत्यष्टाशीतिकोटीभिर्युतं कोटीशतत्रयम्। लक्षा-
शीतिं च वर्षेण स्वामी चामीकरं ददौ ॥८०॥ उत्सवेनोत्सुकतमाः समागत्य प्रतेनिरे। तद्दानान्ते विभोर्दीक्षाभिषेकममर-
रेश्वराः ॥८१॥ अम्भोभिरभ्यषिञ्चन्त सर्वतीर्थाहृतैः प्रभुम्। चित्रं पवित्रयामासुरात्मानं वृत्रशत्रवः ॥८२॥ आनीतानि
मनोभक्तिभासुराणि बलारिणा। पर्यधत्त प्रभुर्दिव्यवस्त्रालंकरणान्यथ ॥८३॥ तदैव पृथिवीं नाम धामपूनरविच्छविम्।

माणिक्यशिबिकां चक्रे शक्रः स्फुरदुपक्रमः ॥८४॥ अनन्यद्युतिहृद्यामथ त्रिजगतीपतिः । भवाम्भोधितटस्थल्यामिव
तस्यां ददौ पदम् ॥ ८५ ॥ सिंहासनमथारोहद्विश्वपातकघातकः । विवेकमिव तीर्थेशधर्मः सहजनिर्मलः ॥ ८६ ॥
अथोत्क्षिप्ता नरैः सारशृङ्गारैः सुकुलोद्भवैः । मुख्यैः सहस्रसंख्यैः सा शिबिका भक्तिभासुरैः ॥८७॥ पूर्वस्मिन्नमरास्तस्या-
मसुरा दक्षिणे क्षणात् । पश्चिमे गरुडाः पार्श्वेऽलगन्नागास्तथोत्तरे ॥ ८८ ॥ भम्भादुन्दुभिनिःस्वानभेरीशङ्खपुरःसरम् ।
वादयद्भिस्तदा कैश्चित्तूर्यं तारतरस्वरम् ॥८९॥ जितो जितो भावाभिख्य शत्रुरश्वेति संमदात् । कैश्चित्स्वस्वायुधोल्लासमला-
लम्भैरग्रयायिभिः ॥९०॥ कैश्चित्करेषु बिभ्रद्भिः शुभ्रां छत्रपरम्पराम् । दर्शयद्भिरिव स्वामिसेवया पुण्यवर्णिकाम् ॥९१॥
उद्दामचामरमरुत्पूरदूरप्रसर्पणैः । उत्कल्लोलं वितन्वद्भिः कैश्चित्पुण्यपयोर्णवम् ॥९२॥ उत्तालनालवृन्ताग्रजाग्रन्मारुतचारुभिः ।
प्रतापदीपं मोहस्य लुम्पद्भिरिव कैश्चन ॥९३॥ कैश्चित्कृष्णागुरुपातेन विश्वासजननीरिव । कलयद्भिः स्रजः पापव्रजानामिव
नागुराः ॥ ९४ ॥ आनन्दामृतगण्डूपनिभस्तवनलीलया । स्तुवद्भिः कैश्चनाप्युच्चैः सुरासुरनरैर्वृतः ॥ ९५ ॥ जीव नन्द
जयेत्याशीर्गिरा पौरजनैः स्तुतः विहारगृहनामानमारामममगमद्विभुः ॥९६॥ अष्टभिःकुलकम्॥ प्रभुर्यानादथोत्तीर्य सूर्यः
पूर्वाचलादिव । बाल्यरागमिवामोक्तुमारेभे भूषणव्रजम् ॥९७॥ नैकाकिनी वराकी मे युक्तं मोक्तुमलंकृतिः । इतीव मुमुचे
सेत्थं ससङ्गाग्रा तदार्हता ॥९८॥ पूर्वं मुमोच मुकुटं छत्रच्छायेच्छया सयम् । स्वामी धम्मिल्लपुष्पौघं युतं स्नानमनोरथैः ॥९९॥
तत्याज कुण्डलौ साकं चटुश्रुतिकुतूहलैः । ताम्बूलं च जिनः सद्यः सावद्यवचनान्वितम् ॥१००॥ हारमुत्तारयामास वन्धुस्नेह-
हृद्गतं विभुः । अङ्गदौ भुजदर्पेण सहामुञ्चन्मुमुक्षुराट् ॥१॥ जिनोऽमुञ्चत्कराकल्पान्सत्रा शस्त्रग्रहादरैः । मगतन्यूढमोहेन

नार्धं चांघ्रिविभूषणम् ॥२॥ इति भूषणमुक्तोऽपि भगवाञ्शुशुभेऽधिकम् । शोभां हन्त्येव रत्नस्य चन्दनादिविलेपनम् ॥ ३ ॥ लक्षपट्टांशुकोऽप्यर्हन्नभौ स्पष्टवपुः प्रभुः । प्रीणयन्विश्वनेत्राणि मेघमुक्त इवार्यमा ॥ ४ ॥ रहस्यं सुकृतस्येव सूक्ष्मं श्लक्ष्णसितं सकृत् । स्कन्धदेशे विभोर्देवदूष्यं देवपतिर्न्यधात् ॥ ५ ॥ जयां च वसुपूज्यं च सप्रश्रयमथ प्रभुः । आपृच्छ्यातुच्छयाप्याघरुद्ददृष्टि पङ्क्तिभिः ॥ ६ ॥ फाल्गुने वारुणे धिष्ण्ये पूर्वाह्णेऽथ कुहूतिथौ । स्वामी चतुर्थतपसा । षड्भिर्मित्रशतैः सह ॥ ७ ॥ मूलादुन्मूलयामास पञ्चभिर्मुष्टिभिः कचान् । विषयक्ष्मारुहां दुःखफलदानामिवांकुरान् ॥ ८ ॥ त्रिभिर्विशेषकम् ॥ सुधर्मेशः प्रभोः केशजालमालम्ब्य वाससा । चिक्षेप क्षीरजलधौ नीत्वा तीर्थत्वकारणम् ॥ ९ ॥ दृग्निमेषोन्मेषसहकृद्गमागमरंहसा । शक्रेण प्रतिषिद्धेऽथ तुमुले तनुशालिनाम् ॥ १० ॥ योगं समग्रसावद्यप्रत्याख्यामीति गीतगीः । प्रपेदे चारुचारित्रं कृतसिद्धनमस्कृतिः ॥ ११ ॥ युग्मम् ॥ नारकैरपि लेभेऽर्हद्दीक्षणेन क्षणं सुखम् । ग्रजनैकभ्रमिभुवा वायुनेव श्रमातुरैः ॥१२॥ ज्ञानं जज्ञे नरक्षेत्रमनोद्रव्यप्रकाशकम् । मनःपर्यायमीशस्य सस्पर्धमिव दीक्षया ॥१३॥ रचिताञ्जलयः शक्रादयः सुरवरास्ततः । आनम्य नाथं जगतामिति स्तुतिमतन्वत ॥१४॥ जय लोकत्रयीनाथ जय लोकत्रयीगुरो । जय लोकत्रयीध्येय जय लोकत्रयीप्रिय ॥१५॥ पापपङ्कावलीनज्जज्जन्तुजातोद्धृतिक्षमम् । मज्जन्तं कालजम्बाले धर्ममुद्धृतवान्भवान् ॥१६॥ स्वामिनामपि यः स्वामी गुरूणामपि यो गुरुः । देवानामपि यो देवस्तस्मै तुभ्यं नमो नमः ॥१७॥ स्मिताभिर्दृष्टिभिः स्वामिन्प्रसादामृतवृष्टिभिः । ज्वलद्भवदवज्वालादाहिनः पाहि पाहि नः ।१८। इति स्तुत्वा जगत्पूज्यं वासुपूज्यं सुरोत्तमाः । अम्याताती विभोर्लोकान्संयोग्य मुमुचुः पुरे ।१९। जन्माभिषेक-

वत्स्यद्गुहनन्दीश्वरवरोत्सवाः। प्रापुर्निजं निजं धाम तेऽथ स्वर्धामशेश्वराः ॥२०॥ वर्त्मना दृष्टिपूतेनापरेऽह्नि परमेश्वरः। पुरं महापुरं नाम पारणाय प्रयातवान् ॥२१॥ निभाल्य प्रभुमायान्तमुद्यन्तमिव भास्करम्। पौरास्तुमुलिनः प्रीत्या समुत्पेतुः खगा इव ॥२२॥ तद्विभाव्य च सानन्दः सुनन्दो मेदिनीपतिः। मुक्तच्छत्रपदत्राणस्त्वरमाणोऽभ्यगात्प्रभुम् ॥२३॥ सुकृती सुकृताम्भोधिस्नातः प्रभुनिभालनात्। केशान्सुरमयामास प्रभुपादाब्जमार्जनैः ॥२४॥ तेनाथ कृतकृत्योऽस्मि धन्योऽसीति च वादिना। कारितः परमान्नेन पारणं परमेश्वरः ॥२५॥ पाणिभ्यां पायसं स्वामी कलयन्निन्दुनिर्मलम्। अदर्शयत्सुनन्दाय कन्दं पुण्यतरोरिव ॥२६॥ नेदुर्मेदुरसंनादा दिवि दुन्दुभयस्तदा सुनन्दामन्दपुण्याब्धिकल्लोलरवचारवः ॥२७॥ सुनन्दमन्दिरे रत्नवृष्टिः काप्यभवद्दिवः। तदुत्सवोच्छलत्स्वर्गिभ्रष्टभूषणभूरिव ॥२८॥ पुष्पवृष्टिरभूद्व्योम्नस्तं दातारं तदाद्भुतम्। अर्चितुं कल्पवृक्षाधिदैवतैरिव कल्पिता ॥२९॥ सुनन्दकीर्तिधुतानां सुरद्रुकुसुमस्रजाम्। मकरन्दैरिव दिवो वृष्टिर्गन्धोदकैरभूत् ॥३०॥ श्रीसुनन्दयशोवीचीवरचीरयसंचयः। शार्न चरम्‌सैर्देवैस्त्क्षिप्तः खे चलाचलः ॥३१॥ इत्युत्सवेन महता मुनिर्विहितपारणः। जगाम काममन्यत्र भुवनत्रयनायकः॥३२॥अमेयमहिमा मर्त्यमेयमुल्लङ्घ्य गतामिति। पारणोर्व्यां प्रभोर्भूपो रत्नपीठमकारयत् ॥ ३३ ॥ ते मित्रमुनयोऽन्यत्र स्वलब्ध्या कृतपारणाः। अनुजग्मुर्विभुं ब्रह्मव्रतं साधुगुणा यथा ॥३४॥ जिनेन्द्रोऽपि जयं कर्तुं कर्मारीणां क्षमाचरः। विजहारासिधारावत्तपस्तीव्रं दधद्भुवि ॥ ३५ ॥

इतश्चारितृणस्तोमे वेगं पवनवद्दहन्। नाम्ना पवनवेगोऽभूद्भूपः पृथ्वीपुरे पुरे॥३६॥अखण्डसुकृतः खण्डमिलायाः परिपालयन्। मित्राणामप्यमित्राणामप्यानन्दमदत्त सः॥३७॥समये व्रतमादाय मुनेः श्रमणसिंहतः। तप्त्वा तीव्रं तपः

प्राप स विमानमनुत्तरम्॥३८॥ इतश्च निश्चलश्रीके जम्बूद्वीपदिभूपणे। दक्षिणे भरतार्धेऽस्मिन्नस्ति विन्ध्यपुरं पुरम्॥३९॥
अवन्ध्यशक्तिस्तत्राभूद्विन्ध्यशक्तिरिति प्रभुः। चापं यस्मिन्विशद्विश्वजयश्रीद्वारतां दधौ॥४०॥ गम्भीरनीरभ्रमतो यत्प्र-
तापभरातुराः। उपेत्य यत्कृपाणान्तर्नृपाणां ततयोऽरतन्॥४१॥ रणनद्यद्रिथेणित्वराभरतिरस्कृतैः। व्यराजि वाजि-
भिर्यस्य द्विपैव विनमन्मुखैः॥४२॥ अमुं कदाचिदास्थानीस्थितं वेत्रिनिवेदितः। समुपेत्य चरः कश्चिन्नरनाथमजिज्ञपत्
॥ ४३ ॥ इहैव भरतार्धेऽस्ति नाथ जानासि विश्रुतम्। जातं भूपुण्यपाकेन साकेतमिति पत्तनम्॥ ४४ ॥ तत्रास्ति
राजा शौर्यश्रीकेलिजङ्गमपर्वतः। पर्वतो नाम संग्रामयशःप्रसरनिर्झरः॥४५॥यमभूत्मृत्युत्रयीधारः कालो यत्खड्गतां दधत्।
स्वेच्छया हन्त हन्त्येव हन्तव्यानहतोदयः॥४६॥ रजोभिरश्वपादोत्थैर्गजोत्थैश्च मदाम्बुभिः। यत्सेना भाति संहारसृष्टि-
कृद्वारिधेरपि॥ ४७ ॥ राज्यश्रीभाग्यसारं तं दृष्टैव भृशमीदृशम्। दीनयन्ती प्रिया तस्य वेश्यास्ति गुणमञ्जरी॥ ४८ ॥
यां विधाय विधिः पाणी क्षालयामास वारिधौ। तन्मलं तत्र जानामि नानामणिगणच्छलात्॥ ४९ ॥ ईहन्ते हन्त
यत्कान्तिविलोकस्मितविस्मयाः। अपि दिक्पतयः सर्वे पर्वतीभावमात्मनि॥५०॥निर्दम्भतत्परीरम्भसंभवत्पुलका मुदम्।
तदलंकारनारोपितानदेव्योऽपि बिभ्रति॥५१॥ तयैव कान्तया देव त्वत्तः पर्वतकोऽधिकः। श्रिया सैन्येन रूपाद्यैर्गुणैस्तु
त्वं ततोऽधिकः॥५२॥ तयातीव भवान्भाति भवतातीव भाति सा। पृथग्भावेन भवतोर्न श्रीरिन्दुनिशोरिव॥ ५३ ॥
नरेन्द्रवृन्दवन्द्योऽसि स्वामिन्शक्त्या कयापि तत्। सर्पादिव मणिं तस्मात्तां ग्रहीतुं भवोद्यतः॥५४॥ इति श्रुत्वाथ हृष्टेन
तं सन्मान्य महीभुजा। दौत्याय प्रहितो मन्त्री सभान्तः पर्वतं जगौ॥५५॥ कालकूटममिश्राणां मिश्रणां तु सुधारसः।

विन्ध्यशक्तिर्ब्रवीति त्वां मन्मुखेन सखा तव ॥५६॥ यस्ते वैरी स मे वैरी यः सुहृन्मे स ते सुहृत् । या ते श्रीः सा ममापि
श्रीर्या मे भूः स तवापि भूः॥५७॥एवं सौहार्दसंबन्धभासमानैकभावयोः । नैव श्रियि स्त्रियां वा विभेदो भूशमावयोः॥५८
भेदं यदि न देहेऽपि धत्से तच्छेमुषीप्रिय । मह्यं प्रेषय वेगेन गणिकां गुणमञ्जरीम्॥५९॥इत्यस्य वचसा दीप्तः पवनेनेव
पावकः । ततान पर्वतस्तीव्रमक्षराणि स्फुलिङ्गवत्॥६०॥साधु सख्यं चिरादद्य दर्शितं विन्ध्यशक्तिना । याचितं जीवितव्यं
मे यदसौ गुणमञ्जरी ॥ ६१ ॥ स्वमुखेनैव यद्येतद् भणिष्यत्स मे पुरः । अदास्यमुत्तरं तस्य स्वकृपाणमुखेन तत् ॥ ६२॥
क्रोधाग्निर्वर्धमानो मे धक्ष्यति त्वामपि ध्रुवम् । तत्तूर्णं गच्छ मा यच्छ दूतदारणदुर्यशः ॥ ६३ ॥ इति कोपिनी भूपेऽसौ
चण्डैः कण्ठे धृतः पुमान् । अपमानात्समधिकं गत्वाख्यद्विन्ध्यशक्तये॥६४॥तदैव दैवमप्याशु दुर्वलं गणयन्बलात् । चक्रे
प्रयाणं राजासौ रजःसावयवाम्बरम्॥६५॥पर्वतोऽपि चमूचारचूर्णीभूताम्बपर्वतः । प्रतिप्रयाणमकरोद्वैर्यौद्धिमकरो रयात्
॥ ६६ ॥ चलद्भिः केतुचीराग्रैस्तर्जयन्तौ मिथोऽप्यथ । योद्धुमुत्सङ्गितोत्साहौ तौ सैन्याब्धी समीयतुः ॥ ६७ ॥ अजातज-
यभङ्गानि क्षणं क्षोणिपयोस्तयोः । अश्वेभरथपत्तीनां द्वन्द्वयुद्धानि जज्ञिरे॥६८॥चिरेप्सितायां समरश्रियि संजातसंगतौ ।
अदर्शि क्षतजं वीरैश्चिरसञ्चितरागवत्॥६९॥शरीरैर्वीरवाराणामभ्युत्पत्य मुहुर्मुहुः । प्रहाराणां गणः काममापतन्कवली कृतः
॥७०॥ अन्येष्वपि द्विपद्वारप्रहारान्परिपातिनः । स्वस्मिन्नेव भटा ऐच्छँल्लुब्धा इव धनोच्चयान्॥७१॥ अपसृत्यापसृत्याशु
प्रधावद्भिर्विरोधिषु । वीरैर्जयश्रियोऽपूरि दोलाकेलिकुतूहलम्॥७२॥तुल्य एव प्रबलयोरिलभृद्बलयोर्जयः॥ बाह्वोर्बाहुधनस्येव
मिथः सङ्कूल्य कर्षतो ॥७३॥ गर्वात्सर्वाभिसारेण प्रतेने पर्वतस्ततः । उत्तिष्ठमानो मानोर्मिमुक्तमेवारिवारिधिम् ॥७४॥

रेजेऽस्त्रैः खण्डशः कुर्वन्वैरिवीरान्पशूनिव । तेजोग्नि ज्वालयन्कालः स्वयंपाकव्रतीव सः॥७५॥कुर्वन्संकीर्णकीनाशवदनं
कदनं द्विषाम् । अधावत ततः क्रुद्धो युद्धोर्व्यां विन्ध्यराडपि ॥ ७६ ॥ मिथः प्रमथिताशेषबलौ प्रबलदोर्बलौ । तर्जयन्तौ
युवैवैतौ गर्जन्तावभिजग्मतुः॥७७॥ रथसारथिरथ्यानां मिथो मन्थममन्थरम् । प्रथयित्वा स्थितौ पृथ्व्यां पृथू पृथ्वीधरौ
यथा ॥ ७८ ॥ रथान्तरपरिस्पन्दावमन्दानन्दविक्रमौ । युयुधाते क्रुधा तेजस्तेजयन्तौ जयाय तौ ॥ ७९ ॥ शुल्कं पर्वतको
विन्ध्यशक्तिना युधि निर्जितः । चित्रं पलायमानोऽपि स जिगाय प्रभञ्जनम्॥८०॥जगृहेऽथ महाकुम्भिकुम्भकान्तकुचो-
ज्ज्वला । तस्य श्रीरिव सा विन्ध्यशक्तिना गुणमंजरी॥८१॥सर्वतः पर्वतः सोऽथ गर्वतः प्रच्युतः कृती। भेजे संभवसू-
रिभ्यो भयमौरभ्यमुग्रतम्।८२।विन्ध्यशक्तिवधे शक्तिर्भवतान्मे भवान्तरे । ईदृग्निदानध्यानेन तेने तेनातुलं तपः॥८३॥
एवं तपः स विक्रीय तस्मै कामगवीमिव । गृहीत्वानशनं मृत्वा प्रपेदे प्राणतं दिवम् ॥ ८४ ॥ विन्ध्यशक्तिरपि भ्राम्य-
न्भवाञ्जन्मनि कुत्रचित् । जिनलिङ्गधरो मृत्वा कल्पवृन्दारकोऽभवत ।८५। च्युत्वा च श्रीमतीकुक्षिजन्मा श्रीधरभूपभूः ।
पुरेऽभूद्विजयपुरे कुमारस्तारकाभिधः ॥८६॥ स सप्ततिधनुर्मात्रगात्रः पात्रं मषीत्विषाम् । द्विसप्तत्यब्दलक्षायुरभूदक्षाम-
पौरुषः ॥८७॥ अन्ते पितुः प्रतापश्रीताऽङ्कं चक्रमाप्य सः । प्रत्यर्धचक्री भूचक्रखण्डत्रयमसाधयत् ॥७८॥ इतश्चास्ति
चतुर्वर्गश्रीनिरर्गलनागरा । मध्येब्धि स्वर्गसौभाग्यदारिका द्वारिका पुरी ॥८९॥ या परैरपराभूता सुराष्ट्रमुखमण्डनम्।
पश्चिमाम्भोधिनीरेभनराश्वैरेव वेष्टयते ॥९०॥ अगोचरचरित्रश्रीर्ब्रह्मविब्रह्मसामपि । ब्रह्मचारी परस्त्रीषु ब्रह्माभूदिह
भूपतिः ॥९१॥ तस्याभूतां शुभे कान्ते सुभद्रोमे शुभगुनी । धारे इव कृपाणस्य सतीव्रतगुणाश्रिते ॥९२॥

ताभ्यां नरेन्द्रः कान्ताभ्यां शुशुभे मुमुदे च सः। रजनीश इव ज्योत्स्नारजनीभ्यां कलोज्ज्वलः॥९३॥ततश्चोत्तरतश्च्युत्वा सुभद्रागर्भमासदत्। जीवः पवनवेगस्य शृङ्गान्निर्झरो गुहामिव॥९४॥ द्विपसिंहवृषादित्या इति स्वप्नचतुष्टयम्। सुभद्रासौ तदाद्राक्षीद्रामजन्माभिसूचकम्॥९५॥सूते स्म समये सूनुमियमिन्दुममलद्युतिम्। शुक्तिर्मुक्ताकणमिव क्षितिभूषणतां गतम् ॥ ९६ ॥ कारामुक्त्यादिभिर्व्यक्तं द्विषामपि ददन्मुदम्। ब्रह्मा विजय इत्यस्य सुतस्य विदधेऽभिधाम् ॥ ९७ ॥ इन्द्रियश्रीभिरात्मेव पृथक्प्रथितकर्मभिः। धात्रीभिः पञ्चभिर्लाल्यमानोऽयं ववृधे श्रिया ॥ ९८ ॥ वर्धमानः क्रमादेष स्मितैः कुसुमसन्दिशः। वसन्तद्रुमनव्याङ्घ्र इव कस्य न तुष्टये ॥ ९९ ॥ अथोदरमुमादेव्याः प्राणतात्पर्वतश्च्युतः। अवाप पुण्यकृन्मुष्टिं चिन्तामणिरिवार्णवात्॥८००॥करी सिंहो वृषश्चन्द्रो भानुर्वैश्वानरोऽम्बुधिः। इति स्वप्नानुमापश्यदच्युतोत्पत्तिसूचकान् ॥ १ ॥ ततः सुतमसौ बालतमालदलदीधितिम्। विन्ध्यभूरिव भद्रेभं समये समजीजनत् ॥ २ ॥ सुतोत्पत्तिं कथयतां दानमानन्दितो ददत्। रचयामास न ब्रह्मा भेदमात्मान्तयोरपि॥३॥निद्योत्सवानपि सुरानुत्सवेनापि लोभयन् सूनोर्द्विपृष्ठ इत्याख्यां सत्तामदित भूपतिः ॥ ४ ॥ अवर्धत स धात्रीभिः पुष्यमाणो यथाक्रमम्। नमस्क्रियाभिर्धर्मो वा पञ्चभिः परमेष्ठिनाम्॥५॥ मध्ये दशानां धात्रीणां तौ क्रीडन्तौ विरेजतुः। दिशामिव निशाधीशदिनाधीशौ वरोदयौ ॥ ६ ॥ नीलपीताम्बरौ तालशार्ङ्गाङ्कौ तौ सितासितौ। धरित्रीजननेत्राणां मुदं चित्रेण चक्रतुः ॥ ७ ॥ दोर्भूषणं शस्त्रकलाः शास्त्राणि मुखभूषणम्। जगृहाते गुरुभ्यस्तौ मञ्जूषाभ्य इव स्वयम्॥८॥ एकपात्रदशायुग्मदीप्तौ दीपाविवोज्ज्वलौ। तौ दुःखसुखयोस्तुल्यौ तुल्यस्नेहौ विलेसतुः ॥९॥ तौ शस्त्रेणाधिकं शश्वत्क्रीडयैवार्धचक्रिणः अशस्त्र-

माज्ञामङ्गाग्र्यं वधं चाग्यस्य चक्रतुः॥१०॥परिज्ञाय तयोर्दूरादाज्ञातिक्रमविक्रमौ । स्पशो गत्वा त्वरातारस्तारकं प्रलदोऽवदत् ॥११॥ देव त्वत्सेवकस्यापि दारकौ द्वारिकापतेः । आज्ञां तव न मन्येते धुर्यौ रश्मिमिवोद्धतौ ॥ १२ ॥ गतः स कालस्तेजोऽस्तु तारकस्य क्व सम्प्रति । शूरौ यदुदितावेनाविल्लाहुः सेवकास्तयोः॥१३॥अग्र्यवंदोर्बलौ सर्वशस्त्रज्ञौ गर्वपर्वतौ । त्वां प्रति प्रतिमानस्तौ न शुभौ शोभनं कुरु॥१४॥इति शुश्रोद्धतक्रोधो यमयोधोऽधुरस्वरः। ऊचेऽर्धचक्री सेनान्यं सेनान्यभिनमागरः ॥ १५ ॥ सपुत्रकारिकाभीशवधप्रथनसंध्यया । प्रपञ्चय चमूवीथीर्नीचीकृतकुलाचलाः ॥ १६ ॥ न चाटुवचनैर्नाग्रेलुण्ठनैर्नाङ्घ्रिसेवनैः । न चाननतृणादानैरते मोक्तव्याः कथंचन ॥१७॥ अधुनैवाधिकोत्साहैर्वाहैः सज्जय मे रथम् । मास्तु कालविलम्बस्ते भम्भां संभावय द्रुतम्॥१८॥अथामात्यपतिर्भूपमजल्पश्रयकल्पवित् । देव सेवक एवाद्ययावदस्ति स ते नृपः ॥१९॥ निदेशवर्तिनं चैनं मानयोग्यं निगृह्णतः । परिवारेऽपि पुंनाग विरागस्ते भविष्यति ॥ २० ॥ तदुत्पादयितुं दोषं दूतस्तं प्रति युज्यताम् । मृत्युरप्यङ्गिनं हन्ति नात्मदोषादिना विना ॥ २१ ॥ दूतेनाश्वेभरत्नानि याच्योऽसौ चेन्न दास्यति । तद्दोषी दोषवान्सर्वो विभो हि च्छलवीक्षके॥२२॥राज्ञाथ तद्गिरि प्रीतिं वहता प्रहितश्वरः । पार्श्वस्थितसुनन्दं ब्राह्मणं स्माह संमदि ॥२३॥ भूप त्वां तारको वक्ति भक्तिमान्सेवकोऽसि मे । तत्पाल्योऽसि ममैव त्वं किं ते हस्तिहयादिना ॥ २४ ॥ यच्छ तत्सर्वमस्मभ्यं यत्र लभ्यं तवास्ति यत् । यद्वस्तु भरतार्धे स्याद्भरतार्धपतेर्हि तत् ॥ २५ ॥ जल्पन्तमित्यमुं कोपस्वल्पकल्पान्तपावकः । दूतं भूतन्तुतेजोभिर्दहन्निव जगौ हरिः ॥२६॥ कुलक्रमागते राज्ये वयं स्मः स न विद्यते । स चेन्न सेवकोऽस्माकं तत्किं तत्सेवका वयम्॥२७॥सोऽस्माकं पालको भूत्वा मूढो रत्नानि याचते । यद्रा

प्रत्युत याचिष्ये कस्तं पालयिता तदा ॥ २८ ॥ मयि स्थिते हरौ क्रोष्टा भरतार्धपतिः क्रमः । गच्छ तच्छिरसा मार्धं
रत्नान्यादातुमेम्यहम्॥२९॥इत्युक्त्वा विष्णुनोत्खात इव भूशिरयासनात् । स गत्वाशु चरः सर्वं स्वभर्त्रे तथ्यमभ्यधात्
॥ ३० ॥ क्रोधक्रौर्यत्रसत्कालस्तत्कालमथ तारकः । रिपुप्राणप्रयाणाय प्रयाणकमकारयत् ॥ ३१ ॥ जिताम्भोधरसंभारभ-
म्भारवनवश्रवात् । मनोमयूराः शूराणामखण्डं ताण्डवं व्यधुः ॥ ३२ ॥ अभूच्चतुर्भिः पूरैश्चतुरंगचमूद्गमः । चतुर्विधा-
युधोद्दामश्चतुर्भुजजयेच्छया ॥ ३३ ॥ मिलद्भिर्मन्त्रिधात्रीशदेशाधीशादिसैनिकैः । तच्चमूर्ववृधे यान्ती नदी नगन्तरैरिव
॥३४॥ प्रयाणैरप्रमाणैश्च मावेशः प्रतिकेशवः । प्रागलङ्घिष्ट मार्गार्धमलङ्घितपराक्रमः ॥३५॥ इतश्च तादृगुत्साहस्मारस्मा-
भोगभूपितः । हरिरप्येत्य मार्गार्धं रुद्धवान्मार्गमग्रतः॥३६॥ततः प्रततसंग्रामगुणग्रामग्रहोन्मुखाः । यमश्रुतिसुखां वार्तां
प्रतेनुरुभये भटाः ॥३७॥ एकैकजन्तुग्रासेनातृप्तमालस्यशायिनम् । यमं जागरयामासुर्युद्धतूर्यस्वना घनाः ॥३८॥ देहैः
प्रहृतिसस्नेहै रोमाञ्चोच्छ्वासवारितान् । सन्नाहान्सगृहुः कष्टं भटाः स्वामिजयेच्छया ॥३९॥ इष्टोऽत्र मृत्युरागच्छन्परि-
रब्धुं निरेप्सितः । पराङ्मुखो भून्मे मेति नागृह्णन्केऽपि कञ्चुकान् ॥४०॥ ततः पारापतत्पूत्कारा इव घनस्वराः ।
उभयेऽप्यमिलन्वीरा वपुर्नीरागचेतसः ॥४१॥ असयोऽन्तर्वसद्भर्तृप्रतापज्वलना इव । परस्पराभिपातेन स्फुलिङ्गान्मुमु-
चुर्मुहुः ॥४२॥ द्विपत्तेजोग्निमेघेषु गजेषु मदवर्षिषु । खद्योतकल्पैरद्योति स्फुलिङ्गैर्दन्तघातजैः ॥४३॥ सायकाः शाकिनी-
मन्त्रा इव स्यन्दनशालिनाम । अदृष्टा एव नष्टाङ्गप्रविष्टा रुधिरं पपुः ॥४४॥ वाहवद्भिर्मणिश्रेणिसन्नाहद्युतिवेणिभिः ।
नाबोधि रुधिरं निर्यत्सादकृशल्यप्रहारजम् ॥४५॥ सन्नाहशस्त्रदण्डास्थिखण्डानां त्रुट्यतां स्वनैः । घ्नतां घोषैश्च घोरोऽभू-

न्मूलोऽपि भिये क्षणः ॥ ४६ ॥ प्रकम्पितामयो हस्ता मौलयः सिंहनादिनः । अमर्षिणां छिन्नखड्गैरुत्क्षिप्ताः खेऽत्रासय-
न्सुरान्॥४७॥ युध्यमानमहावीरः क्षीणवीरगणः क्षणम् । व्यक्तोऽजनि रणः कामं कालकान्तादरस्मयः॥४८॥ क्षीणास्त्रो
यद्भटं स्मरवीकृत्य छिपत्कृतम् । चक्रे कश्चन पीठाब्जमागतायाः जयश्रियः ॥ ४९ ॥ छिन्नायुधभुजामौलिः कश्चिदु-
त्पत्य कोपनः । ऊर्ध्वदंशनन्येन छिपमाशु व्यसुं व्यधात् ॥५०॥ कोऽप्यभ्युत्थापयन्नज्ञान्याजिकण्डूभरच्छिदे । प्रहारान्ह-
र्षयामास रिपोर्मन्दप्रहारिणः ॥ ५१ ॥ दृक्पातेनैव निर्भग्ने परवीरगणेऽपरः । अपूर्णयुद्धाभिप्रायोऽभजत्प्रायोपवेशनम्
॥ ५२ ॥ तुल्यं दद्यां प्रहारं च दत्त्वा दधाच्युतायुधे । छिपि छिन्नपिण्डिते कोऽपि स्वं जघानानुतापतः ॥ ५३ ॥
स्यान्ने प्रहारमिच्छन्तौ द्वंद्वं कौचिन्महाभटौ । कुधान्यतोऽन्यतो यातौ दयामन्दप्रहारिणौ ॥ ५४ ॥ प्रतिघातमकुर्वन्तो
दत्तघातेषु शत्रुषु । पश्यन्तः महद्भं वीरं चिरं केऽप्यभ्रमन्भटाः ॥ ५५ ॥ छिपि प्रहारिण्यभ्यासाद्द्रनाश चकार यः ।
वीरास्तमप्यमन्यन्त कातरं जातरंहसः ॥ ५६ ॥ अविभ्यत्सुभटेभ्यस्तच्छत्रं शस्त्रेण योऽच्छिनत् मृत्युभीतो न वीरेषु
सोऽपि रेखामवाप्तवान् ॥ ५७ ॥ एवं तरन्तो युद्धाब्धिं दोर्भ्यामिवोभये भटाः । सकौतुकमलोक्यन्त हरजयेन जयश्रिया
॥ ५८ ॥ आकृष्य स्थं तल्पमिवाभीष्टं जयश्रियः । तत्कण्ठमिव वैकुण्ठः पाञ्चजन्यं मुदाग्रहीत् ॥५९॥ अस्त्राधिदैवता-
न्यस्त्रशस्त्राण्युसानि सत्वरम् । शौरिर्जागरयामास पाञ्चजन्यं प्रणादयन्॥६०॥तेन शङ्खस्य घोषेण सैन्यानि प्रतिशार्ङ्गिणः ।
तृणानि पवनेनेवोद्गमयामासिरेऽग्रतः॥६१॥संक्रुद्धस्तद्ध्वनेरद्दशब्दादिव मृगाधिपः । शैलशृङ्गमिवारोहद्रथं प्रतिरथाङ्ग-
भृत् ॥ ६२ । जयलक्ष्मीहठाकृष्टिसिद्धमन्त्राक्षरैरिव । सैन्यानि चापटङ्कारैः स्थिरयन्स हरिं ययौ ॥ ६३ ॥ क्रुद्धौ द्वयुद्ध-

वाग्युद्धपूर्वं सर्वायुधैः क्रमात् । परस्परेण संरब्धौ प्रारब्धौ योद्धुमेव तौ ॥६४॥ शिलीमुखा मिथश्छिन्नाः क्षोणीगतमुखा-स्तयोः । कबन्धैरिव पश्चार्धैर्नन्तुर्युद्धसूर्धनि ॥ ६५ ॥ छिन्नमध्या अपि शरा वहुवेगवलोद्धताः । तयोर्लक्ष्यं ययुः केऽपि कोपना इव पन्नगाः ॥ ६६ ॥ क्रुधाक्रान्ताबुभौ श्यामौ बाणपञ्जरमध्यगौ । जग्मतुः केलिकीरत्वं वाग्मिनौ तौ जयश्रियः ॥६७॥ तुल्योद्यमबलौ तुल्यकृतिप्रतिकृतिक्रमौ । तौ तुल्यलक्षणौ वीक्ष्य भग्नाशोऽभूत्पराजयः ॥ ६८ ॥ स्वयं जयश्रियै-कैकयाह्वनालिङ्गिताविव । केन केन महास्त्रेण चक्रतुर्विक्रमं न तौ ॥ ६९ ॥ अस्त्रान्तरेण मत्वाथ दुर्जयं विजयानुजम् । दुर्निरीक्षतरं चक्रे करं चक्रेण तारकः ॥७०॥ जीवितव्यमिवार्कस्य रहस्यमिव विद्युताम् । चक्रं चिह्नमिवाग्नेस्तज्ज्वलत्कः प्रेक्ष्य नात्रसत् ॥७१॥ तादृक् प्रभावभृच्चक्रं न किंचिदिति चिन्तयन् । पीतवान्नीलवासास्तद्युक्तारकान्तिवारिदः ॥७२॥ चक्रेण जितमेवेति मन्यमानस्तु तारकः । तर्जयन्निव दृष्ट्यैव प्रहसन्हरिमाह सः ॥७३॥ चिरसेवकस्तूनुमेस्तुमेभ्या इति यद्यपसे । मदाज्ञां श्रय भो डिम्भ भुंक्ष्व भोगान्निरयस्य मा ॥७४॥ हरिराह त्वदस्त्राणां प्रमाणं ददृशे मया । मुञ्च चक्रमथेदानीं पश्याम्यस्याप्यहं महः ॥ ७५ ॥ इत्युक्त्वा कुपितश्चक्रं भ्रमयित्वा रयेण खे । तं प्रति ग्रस्तचन्द्रार्कतारकं तारकोऽमुचत् ॥७६॥ स्नेहाज्जयश्रिया कर्णकुण्डलेनेव केशवः । नाभ्या हृदि हतस्तेन चक्रेण सुखमूर्छितः ॥ ७७ ॥ अभिज्वलदलेवाथ तत्प्रतापहुताशनम् । वीजितो व्यजनीकृत्य वासोऽन्तं विजयेन सः ॥७८॥ तदेव चक्रमुद्भ्रम्य मूर्छान्ते तं हरिर्जगौ । मुञ्चाग्रभागं मुञ्चामि जीवन्तं भुंक्ष्व भो सुखम् ॥ ७९ ॥ क्रुधा रक्तभ्रमच्चक्षुस्तारकस्तारकस्ततः । ऊचे तं दन्तपेषोत्थस्फु-लिङ्गावलिनीं गिरम् ॥८०॥ अरे रे मुञ्च मुञ्च द्रागममैवेदमनेन किं । हस्तात्तेन पुनर्यत्नान्मुक्तेन त्वच्छिरो हरे ॥ ८१ ॥

इति वाचार्दितः शार्ङ्गी चक्रमुद्भ्रम्य मूर्धनि । आगमुक्षत तच्छिन्नमपश्यच्च द्विषच्छिरः ॥ ८२ ॥ चिरं प्रतिहरिः प्रीतः संभुज्य विजयश्रियम् । सुष्वाप वीरशय्यायां यशश्चीरावगुण्ठनः ॥८३॥ स्वनामशत्रुसंहारसंप्रीतैरिव तारकैः । पुष्पवृष्टिश्रियागामि विष्णुं सेवितुमम्बरात्॥८४॥जिगाय गायनोद्गीतगुणग्रामो रणं हरिः । स केन जीयतां यस्यानुयायी विजयः स्वयम् ॥ ८५ ॥ चक्रं च राजचक्रं च तारकस्य तदद्भुतम् । लग्नं हस्ते च पादे च किं करोमीति शार्ङ्गिणः ॥ ८६ ॥ भरतार्धजयारम्भमसंरम्भहृदो हरेः । चक्रमेवाभवज्जेयदेशमार्गोपदेशकम् ॥८७॥ दक्षिणं भरतार्धं स सार्धं सैर्वैर्धराधवैः । तथैव यात्रया जैत्रः साधयामास माधवः॥८८॥जनचन्मागधाधीशं वरदामेश्वरं च सः । प्रभासप्रभुमप्येतान्देवान्सेवागिरोऽकरोत् ॥ ८९ ॥ आगमन्मगधान्यात्राविनिवृत्तोऽच्युतस्ततः । तत्र व्यलोकयत्कोटिनरोत्पाट्यां महाशिलाम् ॥ ९० ॥ दूरावलोककुतुकी नरः करमिवाच्युतः । लीलयोत्पाटयामास तां ललाटतटावधि ॥९१॥ स्थापयित्वा यथास्थानं तामथामरथांगभृत् । उत्तोरणपुरागारद्वारिकां द्वारिकां ययौ ॥९२॥ हरिः सिद्धामनेऽग्रस्य जनकेनाग्रजेन च । सर्वैरुर्वीधवैश्चार्धचक्रित्वे सोऽभ्यषिच्यत॥९३॥नीतिं वितत्य पृथ्वीं स पृथ्वीं पृथ्वीपुरन्दरः । अपालयद्वनीपाल इव वालद्रुमावलीम्॥९४॥

तदा च नागच्छद्मस्थावस्थाप्रस्थापिताशुभः । विहृत्य वर्षमासन्नकेवलोत्पत्तिरामरः॥९५॥श्रीवासुपूज्यो दृक्पूतावंधिभिः पावयन्महीम् । चम्पापुर्यां व्रताराऽमेगाद्विहारगृहाभिधे॥९६॥युग्मम्॥पाटलातरुमूलेऽथ श्रितचतुर्थतपाः प्रभुः । प्रतिमास्थो गुणस्थानमप्रमत्ताग्यमासदान्॥९७॥अपूर्वकरणारूढः प्रतिपेदे ततः प्रभुः । सविचारं सितध्यानं पृथक्त्वेन वितर्कयुक्॥९८॥ अनिवृत्तिं ततः सूक्ष्मसंपरायगुणं गुरुः । अधिगम्याध्यरोहच्च क्षणात्क्षीणकषायताम्॥९९॥शुक्लध्यानमवीचारमैक्यश्रुतमथ

॥२२७॥

प्रभुः। सोऽथान्तिमक्षणे क्षीणे द्वितीयं प्रत्यपद्यत॥१००॥पञ्चज्ञानावृतीरीशश्चतस्रो दर्शनावृतीः। अन्तरायांश्च पञ्चाथ घातिक-
र्माण्यनाशयत् ॥१॥ माघे सितद्वितीयायां चन्द्रे श्रवणसंयुजि। केवलज्ञानमुदभूद्विश्वोद्भासि प्रभोस्ततः ॥२॥ प्रस्ख-
लितो मेरुवद्धैर्यः सुरेशा वपुः। क्षणं तदा सुखं प्रादुर्भावं नारका अपि ॥ ३ ॥ चकम्पिरे सुरेन्द्राणामासनान्यथ
सर्वतः। शिरांसीव विमानानां विभुवैभवदीक्षणात्॥४॥ एतेन ज्ञात ज्ञातेशं नन्तुमिच्छादिशन्निव। स्वर्लोकानिन्द्रलोकेषु
महाघण्टाः स्फुरन्ति ॥५॥ सुधर्मेशस्य तीर्थेशं नन्तुमागन्तुमिच्छतः। ऐरावणः सुरः सद्यः करीभूय पुरोऽभवत् ॥६॥
लक्षयोजनमानांगः शुभश्रीरभ्रमूर्विभुः। रौप्याद्रिरिव हेमाद्रिस्पर्धया तुंगतां गतः॥७॥ जिनं प्रियानोल्लसद्योगैर्मदधारायुगच्छ-
लात्। पाप निकाचितं चानिकाचितं च गलद्भवौ ॥ ८ ॥ गर्जितैश्च महाघण्टाटणत्कारयुगैश्च सः। स्वराजत जिनं नन्तुं
त्रिलोकीमाह्वयन्निव ॥ ९ ॥ स्वर्णपट्टाष्टमालानि तस्याष्टौ वदनान्यभान्। प्रभुनामश्रवणोत्कण्ठाः प्रत्यक्षा इव धीगुणाः
॥१०॥ वदने वदने चाष्टौ दशनास्तस्य रेजिरे। चतुःषष्टिकलास्त्रीणां केलितल्पतला इव ॥ ११ ॥ दशने दशने चाभी
स्वादुस्वच्छहिमोदका। कीर्तिमूर्तिमतीवास्य वपुःसामसमप्रभा॥१२॥ अष्टाष्ट जलजन्मानि वाप्यां वाप्यां विरेजिरे। त्रिका-
लीयष्टदिक्कान्तावदनप्रतिबिम्बवत्॥१३॥ कमले कमलेऽष्टाष्ट दलानि दधिरे द्युतिम्। अत्युत्तुङ्गानि तीर्थेशाविलोककुतुका-
दिव ॥ १४ ॥ चतुर्भीमिनवाभिरसमभ्ररलीलया। शुभान्यभूवन्नष्टाष्ट नाटकानि दले दले ॥ १५ ॥ प्रभुभक्तिभरव्यक्ती-
भूतसत्त्वगुणान्यथ। नाटके नाटके पात्राण्यत्र द्वात्रिंशदस्फुरन् ॥ १६ ॥ इति चित्रीयमाणश्रीशालिनं गणमालिनम्।
करोत्पातेन कुर्वन्नमाकाश इव जाह्नवीम्॥१७॥ सुरभिश्यामदेहद्रुकुसुमस्रग्मदाम्बुभिः। त्रिधा ममौ गीतिभृद्वैर्गतिकीर्तिना-

भितः ॥१८॥ जगत्स्वामिनमस्कारमनोरथमिवोन्नतम् । आरोहकारणं वेगान्तुं हरिः सपरिच्छदः ॥१९॥ त्रिभिर्विशेषकम् ॥ स्कन्धबद्धासने जिष्णौ स सिन्धुरसुरस्ततः । स्वामिसेवोत्सुकमनास्त्वराकृष्ट इवाचलत् ॥२०॥ प्राक्पालक इवात्मानं संक्षिपन्स क्षणादपि । जगाम स्वामिपादाब्जपूतमुद्यानभूतलम् ॥२१॥ उत्ततार ततस्तारसारालंकारचारभृत् । सौधर्मस्वाम्यसौ धर्मस्वामिनं नन्तुमुद्यतः ॥२२॥ अहंप्रथमिकाध्यानवर्धमानतरत्वराः । अन्येऽपीन्द्राः समं देवैरीयुस्तत्राच्युतादयः ॥२३॥ भर्तुः समवसृत्यर्थं कुमारा मरुतस्ततः । अमृजञ्जगतीमेकयोजनां स्वमिव स्वयम् ॥२४॥ स्वपोज्यपादपस्तोमदत्तैः पुष्पद्रवैरिव । सिषिचुस्तां भुवं मेघकुमारा गन्धवारिभिः ॥२५॥ मुक्तामाणिक्यनिष्कैस्तां बबन्धुर्बन्धुरैर्धराम् । व्यन्तराः कर्मभिर्बद्धमात्मानं तु श्लथं व्यधुः ॥२६॥ उन्मुखान्याकिरन्पञ्चवर्णपुष्पाणि तत्र ते । सुगन्धीनि क्षितेरेवोद्गतानीव विना तरून् ॥२७॥ मुक्तासुवर्णमाणिक्यैस्ते चतुस्तोरणीमिह । चतुर्गतिकसंसारनिःसारद्वारवद्व्यधुः ॥२८॥ दिक्तोरणेषु तेपूचैरतिष्ठञ्शालभञ्जिकाः । साक्षान्नु तदधिष्ठानदेवताः सेवितुं विभुम् ॥२९॥ इन्द्रनीलमयास्तेषु मकरप्रकरा बभुः । प्रबुद्धाः सेवने मुक्ता भीतेनेव भवाब्धिना ॥३०॥ चतुर्णामिव धर्माणां चतुर्विधभवच्छिदाम् । स्वाम्यर्शमीनि चत्वारि तत्र छत्राणि रेजिरे ॥३१॥ उज्ज्वलः प्रचलस्तेषु विरराज ध्वजव्रजः । मोहं जित्वा पटव्यूहो धर्मसैन्यैरिवाभ्रमि ॥ ३२ ॥ बलिपीठेष्विवोवेषु भूमिपीठेषु तत्तले । चिह्नानि स्वस्तिकादीनि मङ्गल्यान्यष्ट चाभवन् ॥३३॥ भवाब्धिमध्यदीपेऽस्मिन्भूमिपीठे विमानिनः । वेलाग्लोनयाकारं रत्नप्राकारमादधुः ॥३४॥ कपिशीर्षचयोऽमुष्मिन्नानामणिमयोऽभवत् । पापाहीन्यत्प्रभापूरमयूरः कस्य नाहरत् ॥ ३५ ॥ द्वितीयं तद्बहिर्ज्योतिःपतयः कनकोत्करैः । प्रकारं चक्रुरात्मीयाश्रयान्मेरोरिवाहृतैः

॥ ३६ ॥ ज्योतिषामग्रणीर्भानुर्भूत्वा भूयिष्ठमण्डलः । तत्र स्वयमिव प्राप रत्नालिकपिशीर्षताम् ॥ ३७ ॥ प्राकारोऽकारि भवनपतिभिश्च ततो बहिः । रजतैर्भगवद्भक्तिगौरैरिव, मनोऽणुभिः ॥ ३८ ॥ स्फुरद्भिरुपरि, स्वर्णकपिशीर्षकदम्बकैः । चक्रवाकैरिवाभासि शुभ्रे तस्य प्रभाम्भसि ॥३९॥ त्रिवप्री नूनमन्योन्यबिम्बविस्मितबिम्बनात् । अनन्तजन्तुरक्षार्थमिव सानन्तवप्रभृत् ॥४०॥ वैजयन्तीयुजो रेजुस्तत्र माणिक्यतोरणाः । जनं भवभ्रमौ खिन्नमिव वीजयितुं स्थिताः ॥४१॥ चत्वारि गोपुराणीह वप्रे वप्रे चकासिरे । द्वादशश्राद्धधर्मश्रीविश्रामैकैकजालवत्॥४२॥लोकपापच्छिदे धूमदण्डव्याजोद्धृतासयः । प्रतिद्वारमभाव्यन्त व्यन्तरैर्धूपकुम्भिकाः॥४३॥ तैश्चतुर्विधधर्मश्रीत्रिकालक्रीडनेच्छया । प्रतिद्वारं कृता निष्कपुष्करा पुष्करिण्यपि ॥ ४४ ॥ तेऽन्तः काञ्चनवप्रस्य चक्रुरुत्तरपूर्वतः । विश्रामायाप्रतिच्छन्द देवच्छन्दं जगत्प्रभोः ॥४५॥ प्राङ्मुखे पूर्ववप्रस्य स्वर्णवर्णौ विमानिनौ । द्वाःस्थौ तस्थतुरङ्गाग्निर्मण्डलीकुण्डलायितौ ॥ ४६ ॥ द्वारपौ दक्षिणद्वारि व्यन्तरौ तत्र तस्थतुः । शुभ्राङ्गौ स्वामिभक्तानां यशोधर्माविवाङ्गिनाम्(नौ)॥४७॥ज्योतिष्कौ पश्चिमद्वारि द्वारपालौ बभूवतुः । आरक्तवर्णौ सुकृताकृष्टिध्यानवशादिव॥४८॥वप्रलक्ष्म्या मुख इवोत्तरद्वारि सितेतरौ । भवनाधिपती द्वाःस्थौ स्थितावलकवल्लिवत् ॥४९॥ अभयं पाशिनं दिव्यांकुशं मुद्गरिणं क्रमात् । सर्वा दधत्यश्चन्द्राब्जकनकाञ्जनकान्तयः॥५०॥ देव्यो जया च विजया चाजिता चापराजिता । प्राक्क्रमेण स्थिताः स्वर्णप्राकारद्वारभूमिषु ॥ ५१ ॥ युग्मम् ॥ रौप्यवप्रे प्रतिद्वारं तुम्बरुर्द्वाःस्थतां दधौ । जटाकिरीटः खट्वाङ्गी नृशिरःस्रगलंकृतः॥५२॥मध्ये समवसृत्याश्च व्यन्तराश्चैत्यपादपम् । व्यधुः श्रीद्वादशाधीशाद्द्वादशगुणोच्छ्रयम् ॥५३॥ तदधो विदधुः पीठं नानामणिगणेन ते । यदंशुभिरशोकोऽभूत्केवि-

पद्मातपत्रवत् ॥५४॥ तस्योपरि पराभूतसर्वामरविमानकं । छन्दकं मणिवृन्देन मन्दितार्केण तेऽसृजन् ॥५५॥ तन्मध्ये
प्राङ्मुखं सांघ्रिपीठं सिंहासनं व्यधुः । रत्नैस्ते समवसृतिश्रियोऽस्या जीवितव्यवत् ॥ ५६ ॥ तेनुस्तदुपरि च्छत्रत्रयं ते
चन्द्रसुन्दरम् । ज्ञानदर्शनचारित्रप्रभुताभावनं प्रभोः॥५७॥यक्षाभ्यां चामरौ तत्र दधाते स्वामिनो मुखम् । सेवितुं प्रहितौ
चन्द्रद्वयेनांशुचयाविव॥५८॥द्वारे समवसारस्य स्वर्णाब्जस्थमथाभवत् । श्रीधर्मचक्रितासूचि धर्मचक्रं प्रभाद्भुतम्॥५९॥
कृत्यं यदन्यदप्यत्र दिव्यं तद्व्यन्तरामराः । सर्वं वितेनिरे स्वामिभक्त्यजाततमश्रमाः ॥६०॥ ततश्चतुर्विधामर्त्यकोटीनां
कोटिभिर्वृतः । स्वामी समवसृत्यर्थं त्रैलोक्यकृपयाचलत् ॥६१॥ नवतत्त्वश्रियामास्यानीव विश्वपतेः पुरः । सुरैः सुवर्ण-
पद्मानि दिव्यान्यथ वितेनिरे ॥६२॥ द्वयोर्द्वयोः पदन्यासं तेषु चक्रे चलन्विभुः । अन्यानि चालयामास सुरवर्गः पुरः पुर.
। ६३ ॥ ततः समवसृत्युर्वी पूर्वद्वाराविशत्प्रभुः । यामिव द्युमणिर्विश्वतमःसमुदपच्छिदे ॥ ६४ ॥ ततः प्रदक्षिणीकृत्य
चैत्यद्रुं पूर्वदिग्मुखः । तीर्थाय नम इत्युक्त्वा भेजे सिंहासनं जिनः॥६५॥रत्नसिंहासनस्थानि प्रतिरूपाण्यथ प्रभोः । अन्य-
न्यासु व्यधुस्त्रीणि व्यन्तरा दिक्षु तत्क्षणात्॥६६॥अंगुष्ठस्यापि नो रूपं ते विकर्तुं प्रभोः क्षमाः । प्रभुप्रभावादेवासीत्तद्रूपं
तासु मूर्तिषु ॥ ६७ ॥ सर्वद्वीपार्कतेजांसि पिण्डयित्वेव निर्मितम् । उद्भास्वद्बभूवानुमौलि भामण्डलं विभोः ॥ ६८ ॥
जिनेशदेशनानादनासीरो विश्वपापभित् । पूरयन्मरुदध्वानमुच्चैर्दध्वान दुन्दुभिः ॥ ६९ ॥ रत्नध्वजः पुरो भर्तुर्बभूव
यदभ्रतः । कृत्यन्पताकाहस्तेन धर्मः शैलूषतां दधौ ॥ ७० ॥ प्राग्द्वारागत्य वप्रेऽस्मिन्दत्त्वा तिस्रः प्रदक्षिणाः । नत्वा तीर्थं
जिनं चाग्निदिश्याचारविदो मुदा ॥ ७१ ॥ स्थानं विमुच्य साधूनां साध्वीनां च तदन्तरे । विहिताञ्जलयस्तस्थुरूर्ध्वा

तस्त्रियः वैमानिकस्त्रियः॥७२॥युग्मम्॥याम्यद्वारा प्रविश्याथ विधिना नैर्ऋते स्थिताः। क्रमेण भवनाधीशज्योतिष्कव्यन्तरस्त्रियः
॥ ७३ ॥ प्रतीचा गोपुरेणाथ प्रविश्यास्थुर्मरुद्दिशि विधिना भवनाधीशज्योतिष्कव्यन्तरास्तथा ॥ ७४ ॥ गोपुरेणो-
त्तरेणोच्चैः प्रविष्टास्तद्विधिक्रमात्। कल्पामरा नरा नार्य ईशाने ककुभि स्थिताः ॥७५॥ अल्पर्द्धिः प्रथमायातस्तत्रायान्तं
महर्द्धिकम्। प्रणनामागतं त्वग्रे नमन्नेव ययौ च सः ॥७६॥ नासीन्नियन्त्रणा तत्र न च काचन दुःकथा। न भयं न च
मात्सर्यमभून्मत्सरिणामपि॥७७॥द्वितीयस्य तु वप्रस्य मध्ये सिंहगजादयः। तिर्यञ्चोऽस्थुर्मिथःस्पर्शसुखस्थास्त्यक्तमत्सराः
। ७८ ॥ संघट्टादप्यभग्नानि रौप्यवप्रान्तरे पुनः सुरासुरनरेशानां वाहनान्यवतस्थिरे ॥ ७९ ॥ दिशन्शोभां पुरे राजा
जयापद्मावतीवृतः। तत्रागत्योत्सवैर्नाथं नत्वास्थाद्विधिवत्तदा॥८०॥स्वपुत्रैश्वर्यमालोक्य त्रिलोक्या स्तूयमानयोः। यः पित्रोः
प्रमदो जज्ञे तत्पुरश्चुलुकोऽम्बुधिः॥८१॥ये योजनसहस्रेऽपि जीवा मान्ति न मान्ति वा। प्रभुः प्रभुप्रभा यत्ते पीठे तत्र कयोजने
॥ ८२ ॥ निवार्य भक्तिवर्योऽथ सर्वं कोलाहलं तदा। नत्वा तीर्थपतिं स्तोतुमिति शक्रः प्रचक्रमे ॥ ८३ ॥ श्रीवासुपूज्य
नन्दन्तु त्वदंह्रिनखचन्द्रिकाः। दशाशाविलसज्जन्तुकर्मसंतमसच्छिदः ॥८४॥ नमः शमसुधाम्भोधिलहरीभ्य इव प्रभो।
त्वद्विलोकितलीलाभ्यो भवाग्निभ्रंशहेतवे ॥८५॥ अन्तःसंततसंदीप्तध्यानानलविभानिभाः। विभो तव विभान्त्यङ्गभासो
दासितविद्रुमाः ॥ ८६ ॥ जयन्ति दन्तद्युतयो विश्वेश विशदास्तव। भवार्णवतरण्डस्य सितध्वजपटोपमाः ॥ ८७ ॥
भाग्यं भुवि भवानेव विभाति भविनां विभो। यद्भवद्दर्शनं तेषां सर्वेन्द्रियमदप्रदम्॥८८॥स्तूयसे सुमनोभिस्त्वममनस्को-
ऽपि यत्प्रभो। केवलस्यैव पुण्यस्य तन्महत्त्वमहो तव॥८९॥धर्मदेशनया वीतरागयिष्यञ्जनं जिन। प्रागेव कुरुषे वीतरागं

दन्तगुताधरम्॥९०॥वर्धमानवरज्ञानज्ञेयः श्रेयःश्रियः पदम् । त्वत्प्रसादः सदा मेऽस्तु वासुपूज्य जिनाधिप॥९१॥इतीन्द्र स्तुतिभिस्तुष्टे निविष्टे नृसुरासुरे । निर्मलां निर्ममे धर्मदेशनां निर्ममेश्वरः॥९२॥योजनप्रसराः, सर्वभाषापरिणतिप्रियाः । पञ्चत्रिंशद्गुणा रेजुर्गिरो विश्वगुरोरिति॥९३॥भो भव्या भूरिभाग्येन भविनां नृभवो भवेत् । तदमुं प्राप्य संसारं त्यक्त्वा श्रयत निर्वृतिम् ॥९४॥ यतः संसारमस्तोकशोकदुःखभृतं बुधाः । न भजन्ते यथाश्वत्थतरोः कृम्याकुलं फलम् ॥९५॥ मोक्षायाभ्युद्यतैर्भाव्यं भव्यैः शाश्वतशर्मणे । भवदुःखानि यन्नूनं न भवेयुः शुभात्मनाम् ॥९६॥ शक्तिज्ञानदृगानन्दा यत्रानन्ता ध्रुवं स्थिताः । कः संसारसुखभ्रान्त्या तत्र मोक्षे निरुद्यमः ॥९७॥ यः संसारसुखास्वादान्मोक्षसौख्ये निरादरः । व्यग्रः पङ्कादने दुर्धीः स सुधामवधीरयेत् ॥९८॥ संसारे परमं दुःखं मोक्षे च परमं सुखम् । इति तत्त्वं परिज्ञाय भाव्यं मोक्षाय तत्परैः ॥ ९९ ॥ तस्याद्यं कारणं धर्मस्तरोर्बीजमिव ध्रुवम् । यतितव्यं ततस्तस्मिन्नप्रमत्तैर्मनीषिभिः ॥ १००० ॥ अयं धर्मो द्विधा ज्ञेयः साधुश्राद्धाश्रयाद् बुधैः । अल्पानल्पविलम्बेन सिद्ध्यै द्विविधोऽपि सः॥१॥तत्र सावद्ययोगानां विरतिः सर्वथा सदा । निर्दोष एव साधूनां धर्मश्चारित्रलक्षणः ॥२॥ यदि सावद्ययोगानां देशतो विरतिर्भवेत् । तदेव गृहिणां धर्मः श्रमणोपास्तिसंस्पृशाम् ॥ ३ ॥ द्विविधोऽपि विधेयोऽयं श्रद्धया शुद्ध्याधिकम् । सा पुनः सुगुरोस्तत्त्वोपदेशैर्जागते श्रुतेः ॥४॥ तेऽप्यास्तिकत्वपात्रेषु फलन्त्यन्यत्र न क्वचित् । नानाचित्तोऽत्रदोशुद्धमल्लादिर्विश तथथा ॥५॥

अनन्तजनमित्यस्ति पुरं महिमवत्तरम् । शश्वदमन्ति यत्पौरैरेव विश्वपुराण्यपि॥६॥महाकष्टमसाधुनां साधूनां संमदं ददत् । तत्र चित्रगतिर्नाम धरित्रीदयितः स्थितः ॥ ७ ॥ पुरेऽत्र कष्टं तिष्ठन्तः क्वापि सौख्याय गम्यताम् ( गच्छत ) ।

इत्युक्त्वास्तेन चत्वारः पौरा निरगुरेकदा ॥८॥ ते तु शुद्धमतिर्योग्यमतिर्मन्दमतिस्तथा । दुर्मतिश्चेति कुग्रामेष्वजीवन्कर्मवृत्तितः ॥ ९ ॥ कामं वृत्त्यै भ्रमन्तस्ते शीतवातातपेष्वपि । रत्नद्वीपं ययुः कष्टार्जितात्पद्रव्यशम्बलाः ॥ १० ॥ कुशैलेषु दृषत्खण्डान्सत्रासानल्पतेजसः । रत्नभ्रमेण गृह्णन्तो मूढा मुमुदिरेऽत्र ते ॥११॥ तैरलोकि पुमान्कोऽपि दिव्याभरणभासुरः । तरुच्छायास्थितः सारपरिवारो महानिह ॥१२॥ प्रीणितस्वान्तया नुन्नः कान्तयाथ प्रशान्तया । असत्योक्तिनिशाभानुस्तानुवाच पुमानयम् ॥१३॥ किमेभिरश्मखण्डैर्वो रोचितैः पामरोचितैः । न स्पृशन्ति करेणापि यानि पौराः परीक्षकाः ॥ १४ ॥ इतोऽग्रतोऽस्ति माणिक्यगिरिर्गुरुगुणालयः । यत्प्रभासु न भासन्ते तमांसि च महांसि च ॥ १५ ॥ यदि त यात्र रत्नानि लभध्वे तानि तानि तत् । येषां महीयोमहसां महीयं मूल्यमल्पकम् ॥१६॥ अथ शुद्धमतिर्दध्यौ साधु दिष्टमनेन मे । व्यक्तं परोपकारार्थमेव जीवितमीदृशाम् ॥१७॥ तदस्यादेशमाधाय दारिद्र्याय ददे जलम् । इति ध्यात्वा चचालासौ माणिक्याचलदिङ्मुखः ॥१८॥ तस्मै रत्नार्थिने खानिखननार्थमथार्पयत् । पुमान्स दिव्यः कुद्दालं तीव्रत्वालंकृतं कृती ॥ १९ ॥ माणिक्याचलमासाद्य माद्यद्रोमाञ्चकञ्चुकः । अवापैष खनन्खानी रत्नानीह त्विषां गृहम् ॥२०॥ कालेनाप्यतिकष्टेनाप्यहं रत्नममूल्यकम् । तद्ग्रहीष्येऽधुना येन लभ्यते सुखमक्षयम् ॥ २१ ॥ इति ध्यात्वातिकष्टासु माणिक्याचलसीमसु । ददत्पदानि संप्राप शिखरं तस्य स क्रमात् ॥ २२ ॥ युग्मम् ॥ यन्माहात्म्येन तन्वन्ति सेवां देवाधिपा अपि । रत्नं तेनेह तत्किंचिद्ददृशेऽद्रोचिरैक्ष्यत ॥ २३ ॥ महतस्तस्य रत्नस्य दर्शनादेव शुद्धधीः । विश्वत्रयस्याप्युपरि स्फुरितं स्वममन्यत ॥२४॥ तच्चालोक्यातियत्नेन रत्नमुत्पुलकाकृतिः । धीरो निश्चयधीश्चेतस्येतचिन्तयति

स्म सः ॥ २५ ॥ स एव ज्ञानवान्पुण्यः कृपागारो गुरुः पुमान् । येनेदृग्रत्नपात्रं मे कथितः पृथिवीधरः ॥ २६ ॥
अयमेव च रत्नाद्रिः सेव्यो रत्नार्थिभिर्नृभिः । स्युः सर्वेष्वपि शैलेषु रत्नानि कथिवागियम ॥ २७ ॥ देवः स एव यः
कश्चिदस्याद्रेरधिदैवतम् । देवत्वं क्वान्यदेवानां येषां न स्थानमीदृशम्॥२८॥रुचिप्रचितविश्वेऽस्मिन्नपि माणिक्यभूभृति ।
तमःमलदृष्टीनामस्ति नास्तीति संशयः ॥२९॥ दृष्ट्वैनमपि रत्नाद्रिं गिरीनाकाङ्क्षतोऽपरान् । अन्धदृष्टेर्जनस्यास्य कान्तौ
ध्वान्तेऽपि नो भिदा ॥ ३० ॥ अयमप्यस्ति रम्योऽद्रिस्तथान्येऽप्यद्रयोऽद्भुताः । यस्य स्याद्विचिकित्सेति स किं पापैर्न
लिप्यते ॥ ३१ ॥ धन्या अन्याद्रिभाजोऽपि यत्नाद्रत्नान्यवाप्नुयुः । इति वार्तापि हास्याय हा स्यादेतद्गिरिस्पृशाम्
॥ ३२ ॥ अन्याचलचरैः पुंभिरेतद्गिरिचिरा नराः । दर्शनेनापि लज्जेरन्सहेरन्संस्तवं कुतः ॥ ३३ ॥ धन्योऽहं कृतकृत्योऽहं
लब्धजन्मफलोऽप्यहम् । येनासामान्यमाहात्म्यं रत्नमेतदवाप्यते ॥ ३४ ॥ धिग्निर्भाग्यं जडमतिं मां पुरा येन वासराः ।
अगम्यन्ततमां हन्त रत्नैस्तैरप्युपार्जितैः ॥ ३५ ॥ इति ध्यायन्हृदि दधौ स तद्रत्नं सुनिश्चलम् । अच्छिद्रमपि यत्प्रोतम-
नन्तैरमलैर्गुणैः ॥ ३६ ॥ सुरासुराच्यमृद्धिं स प्राप तद्रत्नधारणात् । अचिन्त्यमहिमानो हि मणिमन्त्रौषधीगुणाः
॥३७॥ स प्रतिक्षणतत्सङ्गसुखनिर्भरभावनः । महानन्दमपि प्राप किं न भाग्यभृतां भवेत् ॥३८॥

यस्तु योग्यमतिः सोऽपि दिव्यपुंसो गिरां गुणैः । प्रीतः शुद्रमतिं मूलाचालोक्य प्राप्तनिश्चयः॥३९॥पूर्ववल्लब्धकु-
हालः ग्रानीर्ज्ञाताः खनकशनैः । कृतयत्नोऽपि रत्नौघं बहुमूल्यमवाप च ॥४०॥ युग्मम् ॥ रत्नमूल्यसुखस्वादः परं किं-
चिदमूदसौ । तत्र लोकोत्तरं रत्नं लब्धुमादरमादधौ ॥ ४१ ॥ गत्वा किंचित्पुरं दिव्यं रत्नासश्रीः स्थितः सुखम् ।

स ईहामहसंपन्नभोगयोगश्चिरं स्थिरः ॥४२॥ क्षीणश्रीः प्राप्य रत्नानि श्रिये माणिक्यशैलतः । जगाम कामं दिव्यानि
भूयो भूयः पुराणि सः ॥४३॥ रत्नद्वीपे स मणिक्यगिरिं गत्वा कदाचन । ससाष्टवारसंचारखिन्नश्चेतस्यचिन्तयत ॥४४॥
पुंसा दिव्येन मे तावदधुनापि हितैषिणा । अमूल्यरत्नमादिष्टं निखसौख्यस्य कारणम् ॥४५॥ ततस्तल्लब्धये यत्नं कुर्वे
चक्रे च तं तथा । प्राप्यामूल्यं च तद्रत्नं स शुद्धमतिवद्बभौ ॥४६॥

यस्तु मन्दमतिर्नाम स दिव्यपुरुषोक्तिषु । ईहाविमर्शस्पर्शेन वितेने तरलं मनः॥४७॥ प्रलक्षाणि परिक्षिप्य रत्ना-
न्येतानि कस्पदम् । लगेद्वाक्येऽस्य कः सत्यासत्यसंशयगोचरे॥४८॥इति निश्चित्य तैरेव ग्रावखण्डैरखण्डमुत् । पुरं गन्तु-
मना दिव्य क्वचित्पल्लीं पपात सः ॥४९॥ ततस्तदुचितप्राप्तस्वल्पमूल्योपभोगभुक् । निनाय स दिनान्यत्र संकरे सुख-
दुःखयोः ॥५०॥ भुक्तश्रीर्यत्र तत्रापि स भ्रमन्नभ्रवत्पुनः । रत्नद्वीपं ययौ दैवाग्द्रावखण्डान्यवाप च ॥ ५१ ॥ ततस्तद्-
चिताचाप्तस्थानश्रीदुःखजीवनः । गतागतशतान्येवं हताशः प्रततान सः ॥५२॥ सोऽपि कालेन निर्विण्णस्तन्वानो दिव्य-
पुंवचः । माणिक्यगिरिमाश्रित्य भेजे शुद्धमतेर्गतिम् ॥५३॥

यस्तु दुर्मतिराकर्ण्य स दिव्यपुरुषस्य गाम् । स्वनामार्हविचारेऽत्र स्थिरं व्यरचयन्मनः ॥ ५४ ॥ महत्त्वं मायया पन्नः
कोऽप्ययं मायिकः पुमान् । विप्रतारयति स्वैरं रत्नद्वीपचरान्नरान् ॥५५॥ विलोभ्य कोमलोक्त्यायमायातं जनमादरात् ।
नीत्वा क्वचन गृह्णाति शम्बलं स्वमपि क्षणात् ॥५६॥ पापाचारे विचारेऽस्मिन्निश्चलं रचयन्मनः । रत्नद्वीपस्य पन्थान-
मप्यमुञ्चत दुर्मतिः ॥ ५७ ॥ कूपावर्तशिलागर्तपङ्ककण्टकसंकटे । स महागहनेऽरण्ये क्वचिन्निःपुण्यकोऽपतत् ॥ ५८ ॥

दुष्टजीवघटावद्धकष्टितस्तेषु तेषु च । दुःस्थानेषु पतञ्जन्तोऽरण्यान्निर्गन्तुमक्षमः ॥५९॥

आकर्ण्य धीधनैरेतदन्तरङ्गनिदर्शनम् । ततः प्रथमवद्भाव्यं न पुनश्चरमो यथा ॥ ६० ॥ निगोदवसनं यत्तदनन्तजनपत्तनम् । तत्र कालपरीणामो नाम चित्रगतिर्नृपः ॥६१॥ भव्यस्तद्वत्सिद्धोऽसौ जीवः शुद्धमतिस्तु यः । आसन्नसिद्धिको योग्यमतिर्भव्योपमः स चा॥६२॥दूरभव्यस्त्वसौ मन्दमतिर्मन्दगतिर्भवे । अभव्यो दुर्मतिर्ज्ञेयोऽनन्तसंसारदुःखभाक् ॥ ६३ ॥ जीवाश्चतुर्विधाः कालपरिणामवशादमी । आजग्मुर्व्यवहाराख्यराशौ ते कथमप्यथ ॥ ६४ ॥ कुग्रामाः कुभवास्तापशीतत्रानादिकष्टजम् । अकामनिर्जरापुण्यमल्पमल्पं स्वशम्बलम् ॥६५॥ मानुष्यकभवो रत्नद्वीपस्तत्र कुपर्वताः । कुतीर्थानि कुरत्नानि तत्राज्ञानतपांसि च ॥६६॥ चारित्रं विटपी तत्र सद्गुरुः पुरुषो महान् । कृपा तत्प्रेयसी विश्वत्रयजन्तुहिता स्मृता ॥६७॥ सर्वज्ञशासनं यत्र स माणिक्यमहीधरः । ध्यानं कुद्दालकः कर्मखानीनां खनने क्षमः ॥६८॥ सुतपोऽग्निस्तु सत्पुण्या रत्नश्रेणिरदूषणा । सम्यक्त्वं तच्च रत्नाद्रिकोटौ रत्नं यदुत्तमम् ॥६९॥ पञ्चातिचारसंहारो माणिक्याद्रिस्तुतिच्छलात् । सुरासुरार्च्या लक्ष्मीर्या केवलज्ञानमेव तत् ॥७०॥ यस्तत्सद्मान्महानन्दः स मोक्षगमनोत्सवः । भव्यः कोऽपि भवेऽत्रैव कृतकृत्यो भवेदिति ॥७१॥ आसन्नसिद्धिकस्तु स्यात्तत्सुहस्तपमां फले । भवेषु दिव्यश्रेषु भोगास्तन्मुल्यजं फलम् ॥७२॥ सप्ताष्टवारं यामुष्य सुपुरेषु गतागतिः ॥ पुण्योदयव्ययोत्थानान नरामरभवास्तु ते ॥ ७३ ॥ दूरभव्यस्य यो दिव्यपुरीगमनमिच्छतः । पल्लीपातोऽल्पभोगर्द्धिभूतप्रेतादिजन्म तत् ॥ ७४ ॥ भ्रमन्भूरीन्भवान्दूरभ योऽपि सुखदुःखभाक् । गुरोर्गिरं पुनः प्राप्य भव्यीभूय शिवं श्रयेत ॥ ७५ ॥ अभव्यस्तु

गुरुद्वेपान्मर्त्यजन्माध्वदूरगः । विशल्यरण्ये दुर्जन्मचयसंचारनामनि ॥ ७६ ॥ दुःकर्मनामभिर्दुष्टजीवैस्तत्रातिपद्दितः । दुःस्वस्थानेषु कूपादिस्थानीयेषु पतत्यसौ ॥ ७७ ॥ कष्टात्कष्टान्तरे स्पष्टं पतन्नेषु मुहुर्मुहुः । अयं कुजन्मनां पारं कदाचिदपि न व्रजेत् ॥७८॥ इत्यन्तरङ्गदृष्टान्तमवबुध्य मुमुक्षवः । अहितत्यागतः सन्तः सन्तु स्वस्य हिते रताः ॥७९॥

॥ इति चतुर्विधजीवविचारेऽन्तरङ्गकथा ॥

इत्याकर्ण्य सुधापूर्णकर्णौ चर्यं विभोर्वचः । बभूवुरुद्यता बोधमहिताः स्वहिते जनाः ॥ ८० ॥ बहवो लघुकर्माणः सूक्ष्माद्याः सूक्ष्मदर्शिनः । विभु विज्ञापयांचक्रुः कोशीकृतकरा नराः ॥८१॥ प्रभो भ्रान्तैर्महारण्ये सार्थनाथ इवोत्तमः । पतद्भिरन्धे हस्तावलम्ब इव दाढर्यवान् ॥ ८२ ॥ क्षुधाद्यैर्भीष्टान्नमत्रागारमिवाग्रतः । रोगग्रस्तैर्महावैद्य इवादरणसुन्दरः ॥ ८३ ॥ मरौ ग्रीष्मेऽह्नि संचारातिखिन्नैः सर इवाद्भुतम् । प्रवासस्थैः प्रियालोक इवास्तोकमतर्कितः ॥ ८४ ॥ शत्रुशस्त्राहतित्रस्तैः शरण्यः शक्तिमानिव । नदीपूररयाकृष्टैः सत्तारक इवोद्यतः ॥ ८५ ॥ मन्त्रसेवार्दितैस्तुष्टदेवीवर इवोत्तरः । अस्माभिर्भवदुःखार्तैर्लब्धस्त्वं श्रेयसां निधिः॥८६॥पञ्चभिः कुलकम् ॥ तदस्मान्करुणाम्भोधे रक्ष रक्षाश्रितो भवात् । प्रसीद देहि दीक्षां नः शिक्षय श्रमणक्रियाम् ॥ ८७ ॥ एवमभ्यर्थितस्तेभ्यः श्रीसर्वज्ञो यथाविधि । सूक्ष्मादिभ्यो ददौ दीक्षां व्रतशिक्षां च तत्क्षणात् ॥ ८८॥ सूक्ष्माद्याः साधवः साध्व्यो धरणीप्रमुखा प्रभुः । श्रावकाः सुयशोमुख्याः श्राविकाश्च जयादिकाः ॥ ८९ ॥ इत्थं चतुर्विधं सङ्घमघसंघातघातकम् । वासुपूज्यो जगत्पूज्यं स्थापयामास सुस्थितम् ॥ ९० ॥ यदा ज्ञानं विभोर्भावि ग्रहीष्येऽहं तदा व्रतम् । इति ध्यानवती पद्मावती नाथेन दीक्षिता ॥ ९१ ॥

तत्रप्रश्नत्रयेणाथ नाथस्तेषां महात्मनाम् । सूक्ष्मादीनां तु षट्षष्टेर्गणभृन्नामकर्मणाम् ॥ ९२ ॥ उत्पत्तिर्विगमो ध्रौव्यं क्रमादिति पदत्रयम् । त्रिकालज्ञस्तदाचख्यौ श्रुताब्धेर्बीजमादिमम् ॥९३॥युग्मम्॥ त्रिपदानुसृतेरेकादशाङ्गानि वितेनिरे । ते चतुर्दशपूर्वस्यमङ्गं द्वादशमप्यथ ॥९४॥ सुगन्धिचूर्णसंपूर्णं तूर्णं शक्रः सुरैर्वृतः । प्रस्तावज्ञो मणिस्थालं गृहीत्वास्था-त्पुरः प्रभोः ॥ ९५ ॥ उत्थायाथ प्रभुश्चूर्णक्षेपं कुर्वन्सुमेधसाम् । तेषां सूत्रेण चार्थेन ततस्तदुभयेन च ॥ ९६ ॥ क्रमा-द्द्रव्यैरथ गुणैः पर्यायैश्च नयैरपि । अनुज्ञामनुयोगस्य गणस्य च ददौ तदा ॥ ९७ ॥ युग्मम् ॥ अथ दुन्दुभिनिर्घोषैर्मङ्ग-लोद्गारगीतिभिः । सुरासुरनरा हर्षात्तेषु वासांश्च चिक्षिपुः॥९८॥पुनः सिंहासनासीनः पुरःस्थानां जगद्गुरुः । मुनीन्द्राणा-मदाशस्त्वदीक्षां गणधरोचिताम् ॥९९॥ तस्मिन्नवसरे स्थूलोज्ज्वलैः शालितण्डुलैः । अखण्डैराढकोन्मानैर्निर्मितः कुल्यवे-दिभिः॥११००॥गन्धद्रव्यैः सुरन्यस्तैः प्रचुरीभूतसौरभः । सुनरोदश्चितः क्ष्मापवसुपूज्येन कारितः॥१॥वाद्येषु वाद्यमानेषु गायति प्रमदाजने । द्वारा प्राच्येन समवसरणे प्राविशद्बलिः॥२॥त्रिभिर्विशेषकम्॥ दत्तप्रदक्षिणो भर्तुरुत्क्षिप्तः स पुरो नृभिः । क्षिप्तःश्रीनर्तनारम्भे पुष्पहस्तकवद्भ्रमौ ॥ ३ ॥ अपतन्तं महीपीठे बलेरर्धं दिवौकसः । जगृहुः सुगुरोर्वाक्यमिव भक्तिपरा नराः ॥ ४ ॥ पतितस्य क्षितौ तस्यार्धस्यार्धं जगृहे नृपः । तीर्थशेषामिवाल्पाल्पं शेषं तु जगृहुर्जनाः ॥ ५ ॥ बलेरस्य प्रभावेण पूर्वोत्पन्ना गदाः क्षणात् । विलीयन्ते न जायन्ते षण्मासान्तर्नवाः पुनः ॥ ६ ॥ मातुलिङ्गशराधारौ धारयन्दक्षिणौ भुजौ । वामौ नकुलकोदण्डदण्डाभ्यामभिमण्डयन् ॥ ७ ॥ अवलक्षरुचिर्यक्षो बलक्षवृषवाहनः । कुमार-नामा तीर्थेऽस्मिन्वासुपूज्यविभोरभूत् ॥ ८ ॥ युग्मम् ॥ उत्पेदे च घनश्यामा चण्डानामा तुरङ्गगा । दक्षिणौ दधती

शक्तिवरदत्वधरौ करौ ॥ ९ ॥ भुजौ वामौ गदापुष्पभूषितौ परिबिभ्रती । सदा सन्निहिता भर्तुर्जाता शासनदेवता ॥ १० ॥ युग्मम् ॥ अथोत्थायोत्तरद्वारा निर्गत्य, स्वर्गिभिर्वृतः । देवच्छन्दे जिनो हंस इव न्यश्राम्यदम्बुजे ॥ ११ ॥ तदार्हदंघ्रिपीठस्थः सूक्ष्मो प्रभोरनुज्ञामासाद्य प्रतिपद्य जिनस्तुतिम् । उपविष्टेषु शेषेषु मुनीन्द्रेषु यथाक्रमम् ॥ १२ ॥ गणधराग्रणीः । विश्वलोकमनःप्रीत्यै प्रतेने धर्मदेशनाम ॥ १३ ॥ युग्मम् ॥ सर्वज्ञवाक्यघनसारलवानुकार-माबिभ्रतीमुपशमामृतपुष्टवृष्टिम् । आकर्ण्य कर्णसुभगां प्रभुशिष्यवाचं-वाचंयमानिभृतभक्तिभरेण नत्वा ॥१४॥ आह्लादनस्त्रिजगतां जयतादनर्घ्यः । श्रीसङ्घ एष जिननाथकृतप्रतिष्ठः इत्याशिषं वदनचन्द्रमरीचिशस्तां । विस्तारयन्निव निजं निलयं जनोऽगात् ॥१५॥ युग्मम् ॥

इति दण्डाधिपतिश्रीमदाह्लादनसमभ्यर्थितश्रीविजयसिंहसूरिशिष्यश्रीवर्धमानसूरिविरचिते श्रीवासुपूज्यचरित आह्लादनाङ्के महाकाव्ये चतुःकल्याणकलब्धिवर्णनो नाम तृतीयः सर्गः ॥

---



## अथ चतुर्थः सर्गः

अथ प्रतस्थे पृथिवीं पावयन्स्वपदैः प्रभुः । अन्वीयमानो मुनिभिर्विनयः सद्गुणैरिव ॥१॥ जघन्यतोऽप्यभूत्कोटिः
प्रभोः पार्श्वे सुपर्वणाम् । ऋतुवातेन्द्रियार्थाश्चानुकूलाः सर्वतोऽन्वहम्॥२॥द्रुमाः कल्पद्रुमस्यास्य गच्छतो नतशीर्षकाः ।
अजायन्त जगद्भर्तुः शकुनाश्च प्रदक्षिणाः ॥३॥ युग्मम् ॥ स्वदुर्मुखत्वं जानन्तो लज्जिता इव कण्टकाः । अधोमुखत्वम-
भजन्नधि प्रचलतः प्रभोः॥४॥ यत्रेशोऽगान्न तत्रातिवृष्ट्यवृष्टिरुजः क्वचित् । मारिवैरेतिदुर्भिक्षस्वान्यचक्रभयान्यपि॥५॥
अमृद्धनखश्मश्रुकेशो देशेषु सञ्चरन् । स्याद्वादी द्वारिकापुर्याः पर्यन्तोर्वीं क्रमादगात् ॥६॥ अस्यां सुरौघैः समवसरणे
विरचिते क्षणात् । तत्र प्राग्वत्प्रविश्यालञ्चक्रे सिंहासनं जिनः ॥ ७ ॥ राजमान्या द्विपृष्ठस्य तद्वरा द्वारिकापतेः । तदा
समवसृत्याप्य मनःस्यातं न्यवेदयन् ॥ ८ ॥ सार्धां द्वादश रूप्यस्य कोटीस्तेभ्यो ददौ मुदा । प्रभोः समवसृत्यां च नृपः
सविजयो ययौ ॥९॥ प्रभुं प्रदक्षिणीकृत्य नृनीन्दुः प्रणिपत्य च । द्विपृष्ठो बन्धुना सार्धमाऽऽसामासाऽनुवासवम् ॥१०॥
अथ विश्वत्रयीनाथो विश्वभाषानुगामिनीम् । विश्वलोकप्रबोधार्थं विदधे धर्मदेशनाम्॥११॥ भवा जन्तोरनन्ताः स्युर्नृभवः
शस्यते परम् । यदर्ज्यन्तेऽमुना स्वर्गापवर्गाद्याः सुखश्रियः॥१२॥एषोऽपि पुरुषार्थानां कर्तृत्वेन विदां मुदे । तान्विना
तेन किं जन्मसंख्यापूरणहेतुना ॥ १३ ॥ स श्लाघ्यः पुरुषो यस्मिन्पुरुषार्थाः स्फुरन्त्यलम् । सरस्तदेव सेव्यं हि यत्रापः
प्रापुरास्पदम् ॥ १४ ॥ धर्मार्थकाममोक्षाख्याश्चत्वारस्ते जने श्रुताः । किन्त्वर्थकाममोक्षाणां धर्म एव निबन्धनम् ॥ १५ ॥

तस्माद्विश्वार्थवृक्षाणां धर्मो बीजमिति ध्रुवम् । मन्वानैरमलज्ञानैर्जनैः सेव्योऽयमन्वहम् ॥१६॥ एतस्य वृद्ध्ये शुद्धबुद्धिभिर्गृहमेधिभिः । विज्ञाय सेवनीयानि व्रतानि द्वादशान्यपि ॥ १७ ॥ तत्राहिंसा च सत्यं चास्तेयब्रह्मापरिग्रहाः । यतेर्महाव्रतानि स्युः पञ्चैतानि तु सर्वतः ॥ १८ ॥ देशतोऽमूनि पञ्चाणुव्रतानि गृहशालिनाम् । दिग्भोगानर्थदण्डाख्यं त्रिधा ज्ञेयं गुणव्रतम् ॥ १९ ॥ सामायिकं च देशावकाशः पोषधसेवनम् । संविभागोऽतिथेश्चत्वार्येवं शिक्षाव्रतान्यपि ॥२०॥ द्वादशानां व्रतानां तु सम्यक्त्वं जीवितं परम् । यथा गुणानामौदार्यं तपसां वा क्षमोच्चयः ॥२१॥ सर्वज्ञे सद्गुरौ धर्मे या श्रद्धा हृदि निश्चला । सम्यक्त्वमिति तत्त्वज्ञैर्विज्ञेयं हितमात्मनः ॥ २२ ॥ अस्य प्रभावाज्जायन्ते देवाः सेवाभृतो नृणाम् । विस्तारिण्यः श्रियः सर्वा यथा विक्रमभूपतेः ॥ २३ ॥ तथाहि ।

जम्बूद्वीपेस्ति कुसुमपुरं कुसुमसंनिभम् । यत्र स्वर्णमयावासभासः केसरतां दधुः॥२४॥राजास्मिन्हरितिलको भूवधूतिलकोऽजनि । नाम्ना गौरीति कान्तास्य गौरी कान्तगुणैरभूत्॥२५॥उपयाचितलक्षाभिर्दक्षलक्ष्यसुलक्षणः । तयोरपुत्रतादोषच्छेदनो नन्दनोऽभवत् ॥२६॥ अस्मिन्गर्भस्थिते राज्ञा जिता विक्रमतोऽरयः । अतो विक्रम इत्याख्यामस्याम्याकारयन्महैः ॥२७॥ समये विनयी सोऽयमुपाध्यायवशंवदः । अधीती सर्वशास्त्रेषु निष्णः कृत्स्नकलास्वभूत् ॥२८॥ कामेभक्रीडनारण्ये तारुण्ये यातुमुद्यतम्॥द्वात्रिंशन्नृपकन्याभिर्नृपरत पर्यणाययत्॥२९॥यावद्दिव्येष्वसौ ताभिर्द्वात्रिंशद्वासवेश्मसु। रन्तुं प्रवधृते तावदकस्माद्व्याधिभिर्धृतः॥३०॥ कुष्ठकासज्वरश्वासशोफशूलजलोदरैः । शिरोर्तिगडुदृक्पीडावान्तिवातैश्च सोऽर्दितः ॥ ३१ ॥ उपयाचितयस्त्रादिकर्ममन्त्रौषधक्रियाः । सर्वं व्यर्थमभूदस्मिन्हितं वाक्यं जडे यथा ॥ ३२ ॥ शीर्ण-

पुण्डरीकं स भूपतिः । सचिवैः पञ्जरान्मुक्तममोचि निरयोचितः॥५१॥सुयशा मुनिराजस्तु स्मरन्पञ्चनमस्कृतीः षड्जी-
ववर्गान्क्षमयन्सुरोऽभूच्छुक्रमत्तमः॥५२॥स तु राजा वहन्वैरं साधुवर्गे निरर्गलम् । न जनैर्निन्द्यमानोऽपि तत्पुरोद्यानमत्यजत्
॥५३॥ ध्यानाधीनो यशोधौतव्योमा सोमाभिधो मुनिः । तेनोर्व्यां दण्डपातेनापाति, स्वात्मेन, दुर्गतौ ॥५४॥ क्ष्माजन्तू-
न्क्षमयित्वाङ्गं संमार्ज्य प्रतिमास्थितः । मुनिस्तथैव घातेनापाति पातकिनामुना ॥ ५५ ॥ इत्येष पौनःपुन्येन कुर्वन्पुण्येन
साधुना । अवधिज्ञानविज्ञाततद्भावेनेति भर्त्सितः॥५६॥निघ्नन्साधून्क्षमागाधान्रे रे दुष्ट स्वतुष्टये । न चेद्भितोऽस्यघात्किं
माहग्भ्योऽपि बिभेषि न॥५७॥शमिनः सुयशोमुख्या हन्त त्वामसहन्तरे । नाहं सहिष्ये हन्म्येव स्वाभीष्टं स्मर दैवतम्
॥५८॥ इत्युक्त्वा तडितेव द्रुं तं तेजोलेश्यया मुनिः । भस्मीकृत्य द्रुतं प्राप पयोद इव शान्तताम्॥५९॥भूपोऽथ पापभारेण
समुत्पतितुमक्षमः । अधोगतीनामवधिं सप्तमीं दुर्गतिं गतः ॥ ६० ॥ सोऽप्यालोच्य प्रतिक्रम्य तदतिक्रम्य पातकम् ।
मुनिस्तीव्रतपस्तप्त्वा दिवमायुःक्षयादगात्६१॥स भूरमणजीवस्तु स्वयंभूरमणार्णवे । अप्रतिष्ठाननरकाद्वृत्तस्तिमितां गतः
॥६२॥ स तिमिः सप्तमीमेव जगाम जगतीं ततः । ततोऽप्युद्वृत्य मत्स्योऽभूद्गतः षष्ठीं च दुर्गतिम्॥६३॥ चण्डालस्त्रीभवं
प्राप्य पुनस्तत्रैव यातवान् ततः कुम्भीनसो भूत्वा स भूमीं पञ्चमीं गतः ॥६४॥ पुनर्जगाम तामेव भुवं मीनभवान्तरः ।
मृगनाथः स भूत्वाथ तुरीयं निरयं गतः॥६५॥पुनस्तत्रैव पाठीनशरीरान्तरितोऽगमत् । श्येनीभूय तृतीयं स ड्याय निरयं
ततः॥६६॥गृध्रदेहं गृहीत्वाथ गतस्तामेव दुर्गतिम् । द्वितीयां भुजगो भूत्वा जगाम जगतीं च सः॥६७॥सोऽगमद्रोगभृद्भुय
तत्र भूयोऽपि दुर्गतौ । तिमीभूयागमदसौ प्रथमां पृथिवीमथ ॥ ६९ ॥ अजायत स जीवोऽथ पक्ष्येको विकलेन्द्रियः ।

हीनेन्द्रियचयस्तिर्यग्नीचजातिर्नरः सुरः॥६९॥नारकश्चेति शतशः सोऽभूद्भवचरश्चिरम् । नानायोनिभवां भूरिपराभूति समाश्रयत् ॥ ७० ॥ आकुलः कष्टकोटीभिर्बन्धव्यथवधादिभिः । भवे भवे स पञ्चत्वमवाप व्यापदां पदम् ॥ ७१ ॥ इत्यापदोऽतिगहनाः सहमानेन संस्रतौ । तेन बह्व्योऽवसर्पिण्य उत्सर्पिण्यश्च निन्यिरे॥७२॥सोऽकामनिर्जराक्षामकर्माथ तनुभूरभूत । गृहिणः सिंहदत्तस्य वसन्तपुरवासिनः॥७३॥तामध्ये तापसीभूय तपस्तप्त्वा स दुस्तपम् । फलं त्वज्ञानकष्टस्य प्राप त्वत्पुत्रतामयम् ॥७४॥ ऋषिघातप्रवचनद्वेषजं पापमेष तत् । तीव्राभिः कष्टकोटीभिस्ताभिस्ताभिरशोषयत् ॥७५॥ तेन शोषितशेषेण दुरितेन तवात्मजः । अयं बभूव भूपाल रोगजालस्य भाजनम् ॥७६॥

इत्युक्तिं दुःश्रवां श्रुत्वा चकम्पे चकितो नृपः। स विक्रमकुमारस्तु जातजातिस्मृतिर्जगौ॥७७॥विवेकदीपमप्राप्य प्रभो मोहतमोहतः । हहा कष्टमहासिन्धौ मार्गभ्रष्टः पुरापतम्॥७८॥इतश्चेतश्च चण्डाभिस्ताड्यमानस्तदूर्मिभिः । दैवात्तत्तीरमेत्याम्भिन्मग्नो रूपङ्कसंकटे॥७९॥जगद्गुरो करालम्बं त्वच्छासनवलम्बितम् आकर्ष मामितः स्वामिभिरीह करुणां कुरु॥८०॥ सम्यक्त्वैकगुणप्रोतद्वादशव्रतभूषणम्। श्राद्धधर्ममथो हस्तमिव व्यस्तारयद्विभुः॥८१॥रोमहर्षाङ्कुराकीर्णो हर्षाश्रुकणमिश्रदृक्। जग्राह श्रावकं धर्मं विक्रमोऽथ यथाविधि॥८२॥भूपोऽभूद्भद्रको नत्वा तौ मुनिं पुरमीयतुः । व्यहरद्वसुधां बोधिसुधाम्भोधिस्ततो मुनिः॥८३॥ धर्मद्रुमूलसम्यक्त्वरमास्वादकृतादरः । छिन्नाघकन्दैर्मुमुचे व्याधिभिर्विक्रमः क्रमात्॥८४॥ नवोल्लासितलावण्यपुण्यसर्वाङ्गचङ्गिमा । धर्मालंकरणः सोऽभून्मुक्तैरपि मनोरमः॥८५॥निशाशेऽन्यदा यक्षः प्रत्यक्षः स जगाद तम् । मन्दतया सन्नदेहोऽस्मि देहि मे महिषाञ्शतम् ॥ ८६ ॥ तमूचे विक्रमो यार्वन्तुलायान्किं न लज्जसे । अहोऽसं

मुनिदिष्टेन सज्ज धर्मौषधेन मे ॥८७॥ धर्माख्यमौषधं दृष्टप्रत्ययं कष्टतोऽर्जितम् । जीवव्यापादपापाब्धौ यक्ष कः क्षिपति प्रधीः॥८८॥आचचक्षे च यक्षेशो ददास्यन्यस्य मयशः । ततस्त्वं करिष्यामि कामं येनानुतप्स्यसे॥८९॥इत्युदित्वा तिरोभूते यक्षे दक्षैकशेखरः। अनाकुलमनाश्चक्रे कृत्यकर्माणि विक्रमः॥९०॥तत्रामरनिकेताख्योद्यानश्रीशेखरेऽन्यदा । जिनागारे कुमारेन्दुर्ययौ कल्याणकोत्सवे॥९१॥ततः स्नात्रविलेपार्चाप्रेक्षणीयस्तवक्षणैः । जिनेन्द्रोर्जनयित्वैष यात्रां यावन्न्यवर्तत॥९२॥ अस्तम्भयद्द्रुतव्यग्रं तावत्तस्याखिलं बलम् । निजक्रीडावनक्रोडे स धनञ्जयगुह्यकः ॥ ९३ ॥ युग्मम् ॥ धर्माग्निकोणपध्वान्तकोटिक्लृप्तामिवाथ सः । हताम्बरचरस्फूर्तिं मूर्तिं निर्माय मायया ॥९४॥ रोषप्रोपितया भीष्मघनघर्घरघोषया । तं क्षोणिपसुतं यक्षः साक्षेपमिदमब्रवीत्॥९५॥युग्मम्॥ न रे नराधम कथं ददासि मम कासरान् । आयुःकाण्डमकाण्डेऽपि समापयसि किं स्वकम्॥९६॥स्मितधौताधरोऽधत्त कुमारो भारतीमथ । भो यक्ष न क्षिपामि स्वं तनुमद्घातपातके॥९७॥ अभ्यारम्भयत्नत्राणाः प्राणाः कस्यापि न स्थिराः । तत्कृत्याकृत्यवित्कुर्यादकृत्यं तत्कृतेऽपि कः ॥ ९८ ॥ इत्याकर्ण्य क्रुधा यक्षो विक्रमं क्रमसंग्रहात् । उत्पाट्यास्फालयद्वीचीमिवाभ्यर्णाचलेऽर्णवः ॥९९॥ मूर्छामुच्छिद्य यक्षस्तं क्रुधान्धः पुनरभ्यधात् । रे रे ददासि नाद्यापि किं मदेयमदेयवत् ॥ १०० ॥ कृपां करोषि जीवेषु स्वजीवे न करोषि किम् । मद्वश्यतां गतेऽमुष्मिन्धर्मोविप्कारकारणे ॥ १ ॥ धर्माधारः कुमारोऽथ गिरं जग्राह साहसी । स्वैकजीवकृते जीवशतं को हन्ति धर्मवित् ॥ २ ॥ फलं तथापि धिग्यक्ष जीवलक्षनिपातनैः । इहामगन्धिकं धाम परत्र नरकव्यथा ॥ ३ ॥ त्वं धर्माद्देवदेवत्वं यातोऽसि प्राग्भवं स्मर । पातके जातकेलिस्तत्किमसि ज्ञानवानपि ॥ ४ ॥ पुण्यैकपरिणामेन जगदुल्लासहेतुना ।

तथापि युज्यते यर्तुमानन्दं चन्दनादिना ॥ ५ ॥ इति तस्योक्तिभिर्युक्तिभिन्नाभिर्भिन्नमानसः । यक्षोऽभ्यधादहो साधु
त्वयाहं प्रतिबोधितः ॥ ६ ॥ ततो नाद्यापि माथामि पापार्हैरङ्गिनां वधैः । नृणां प्रणाममात्रेण गमिष्यामि प्रसन्नताम्
॥ ७ ॥ कुरु त्वमपि मे नाम प्रणाममलाशय । तेनैव तेऽनुमंस्येऽहं संपूर्णमखिलं खलु ॥ ८ ॥ कुमारोथ जगौ यक्ष
नमस्कारो हि पञ्चधा । प्रहासविनयप्रेमप्रभुभावप्रभेदभाक् ॥९॥ स प्रहासप्रणामः स्याच्चित्तोत्सङ्गितमत्सरैः । यः क्रियेत
परिज्ञातविक्रियेभ्योऽपि सत्क्रियैः॥१०॥तमामनन्ति विनयप्रणामं नयपण्डिताः । पित्रादिभ्यो विधीयेत पुत्राद्यैर्विनयेन
यः ॥ ११ ॥ प्राहुः प्रेमप्रणामं तं प्रणयिभ्यः क्रियेत यः । कामं सप्रेमकोपेभ्यो मित्रादिभ्यः प्रसत्तये ॥ १२ ॥ यस्तु
स्वामिनि संमानमानश्रीदानशालिनि । ऐहिकः क्रियते स्वामिनमस्कारमुशन्ति तम् ॥१३॥ यः सद्गुरौ च देवे च वीत-
रागे विरच्यते । तं तु भावनमस्कारं निर्दिशन्ति विशारदाः ॥१४॥ विचारय त्वमेतेषु कं नमस्कारमर्हसि । इत्याकर्ण्य
कुमारोक्तिमभ्यधत्त धनंजयः॥१५॥त्वं कुमार नमस्कारं कुरु भावमयं मयि । यद्देवोऽस्मि जगत्कारसंहारोद्धारकारणम्
॥ १६ ॥ भवार्णवसमुत्तारतरीभूतविभूतयः । मदंशा एव भासन्ते सर्वदर्शनदेवताः ॥ १७ ॥ मन्नमस्कारमात्रेण तव
संसारसागरः । विक्रम क्रमलङ्घ्यत्वमनुलङ्घ्यो गमिष्यति॥१८॥अथाब्रूत स्मितस्यूतवदनो नृपनन्दनः । मयाकृष्टः कि-
मपागाधकूपे यक्ष मा पत॥१९॥जगतां सृष्टिसंहारोद्धाराः सन्ति न सन्ति वा । इति सम्यग्न जानासि स्वमाख्यासि
च तत्क्षमम् ॥ २० ॥ यद्भ्रमद्भ्रमा दृष्टिः सहसा तव लुप्यते । तैः सुरेन्द्रैः स्तुतान्ख्यासि स्वांशान्दर्शनदेवताः ॥ २१ ॥
स्वयं भयाब्धौ मत्स्यस्त्वं चापलेनोपलक्ष्यसे । नमस्कारात्तदुत्तारं कुतो दिशसि मे ततः ॥ २२ ॥ वचसा निष्फलेनैव

तत्पापं मा वृथा कुथाः । भवेन्मम नमस्कारो भवेऽस्मिन्न जिनं विना ॥२३॥ इति वादिनि यक्षेन्दुर्मेदिनीनाथनन्दने । गिरं जागरयामास विवेकविमलामिमाम् ॥२४॥ ददृशे त्वादृशः कोऽपि पुमाननुपमाकृतिः । धीरो धर्मी च वाग्मी च राजपुत्र न कुत्रचित् ॥२५॥ जितस्त्वयाहं वचनैस्तेनास्मि तव किंकरः । शुद्धधर्मोपदेशाच्च मम त्वमसि सद्गुरुः॥२६॥ स्वचित्तकीर्णं वासाय निजदासाय यच्छ मे । त्वच्छिष्यो यदि जानामि तद्गतां त्वद्गुणावलीम्॥२७॥विभो विरहयिष्यामि निजं चेतो न च त्वया । कदापि यदि वेत्तीदं जिनसेवोत्सवं तव ॥ २८ ॥ भर्तः स्मर्तव्य एवाहमुत्कटे संकटे क्वचित् । अयमेव हि भृत्यानां स्वामिन्यवसरः परः ॥२९॥ इत्युदित्वैनमापृच्छ्याथवगूह्य च स गुह्यकः । ययौ निजाश्रयं चित्रत्व-रितचमत्कृतः ॥ ३० ॥ ततः प्रत्यूपशेषायां रजन्यां राजपुङ्गवः । द्रुतं विज्ञातवृत्तान्तः कुमारोपान्तमापतन् ॥ ३१ ॥ मुदा कुमारमालिङ्ग्य पत्तनाय निनाय सः । बालार्करश्मिकाश्मीरनीरश्रीरम्यया भुवा॥३२॥मलध्वपौरगौराङ्गीदृक्तामर-सतोरणे । कुमारमुत्सवेनाथ नृपः प्रावीविशत्पुरे॥३३॥कालेन वेनचिद्राज्यभारमारोप्य विनमे । जगाम नामशेषत्वमेष भूपालपुङ्गवः ॥३४॥ कुर्वन्ननिलताध्यानसुधासिन्धुर्निमज्जनम् । पितृशोकाग्निजं तापममुञ्चद्विक्रमो नृपः ॥३५॥ विवेकं पितृशोकाग्निविशेषविशदं ततः । हृदलंकरणं चक्रे निष्कवद्विक्रमो नृपः॥३६॥न्यायकल्पद्रुमारामच्छायामध्ये निवेश्य भूः । तेनाभूष्यत सर्वाङ्गमर्हद्गृहविभूषणैः ॥३७॥ सप्तव्यसननिर्मुक्तममुक्तसुकृतोद्यमम् । अभूद्भूपेऽत्र भूपीठे राजन्ते राजवत्प्रजाः ॥३८॥

आगात्तद्देशभङ्गाय कलिङ्गाधिपतिर्यमः । कदाप्याकस्मिकापातः संनिपात इवोल्कटः॥३९॥दूरं देवस्य कस्यापि प्रभा

याद्भुतौजसा। हरिः स हरिणेनेवाचक्रमे तेन विक्रमः॥४०॥शूरमण्डलतेजांसि दूरयन्सैन्यरेणुभिः। विक्रमोऽथ धरित्रीन्दुरभ्यमत्रीणतां गतः ॥ ४१ ॥ यमविक्रमयोर्जाग्रदुग्रविक्रमकर्मणोः। तयोः प्रववृते वीरसिंहसंहरणो रणः ॥ ४२ ॥ जातदेवानुभावौजःसंक्रमो विक्रमं यमः। जितोत्कटचमूकोटिर्विकटे संकटेऽनयत् ॥४३॥ पादान्ते ढौकणीकृत्य कृतदोःसंयमं यमम्। स्मृतिमात्रागतो यक्षस्तदा विक्रममैक्षत॥४४॥हीनौजसं दीनमुखं विद्विषं वीक्ष्य विक्रमः। बन्धादुन्मोच्य देशाधादिदेशाद्यकृपाशयः॥४५॥मानयित्वा च नत्वा च यक्षमक्षीणसौहृदम्। अनुज्ञाय निवासाय स्वपुरायाचलन्नृपः॥४६॥ पुर्यां मङ्गलशृङ्गारहृद्यायां हृदयेऽविशत्। प्रतोलीरूपथेनाथ भूनाथः कीर्तिभूषणः॥४७॥ तस्मिन्राजनि राजन्तः पौराः सौराज्यसंपदा। महोत्सवैर्दिवो देवान्धरामानिन्यिरेऽन्वहम् ॥४८॥

व्रजन्भूपोऽन्यदा यात्रावनीं वाह्यालिकेलये। किमप्योकः क्षणक्षीवास्तोकलोकमलोकत॥४९॥वाहयित्वा हयान्भूपो वलमानस्तदेव सः। अमन्दाक्रन्दसंदर्भगर्भमैक्षत मन्दिरम् ॥५०॥ विस्मयव्याकुलेनैको नरः पार्श्वचरस्ततः। पृष्टस्तत्कारणं राज्ञा विज्ञापेति व्यजिज्ञपत्॥५१॥स्वामिन्नेतद्गृहेशस्य महेभ्यस्य गतेऽहनि। अपुत्रकस्य पुत्रोऽभूदन्धस्येव दृगुद्गमः॥५२॥ इदानीमेव वाह्यालिविलासगमनक्षणे। तन्निमित्तभवोऽदर्शि देवेनेह महोत्सवः ॥ ५३ ॥ अधुनैव पुनर्दैवयोगतः स मृतः शिशुः। तद्वियोगार्तिमार्गेण तत्पितापि तमन्वगात् ॥ ५४ ॥ तत्कुटुम्बजनः सर्वः पुत्रजन्मोत्सवागतः। प्रत्युत द्विगुणे दुःखे पतितो रारटीत्ययम् ॥ ५५ ॥ भवनाटककौटिल्यादर्शोत्कण्ठकविग्रहः। अव्याकुलकलश्चेताः क्षितिनेता व्यचिन्तयत् ॥५६॥ विदामप्यपरिच्छेद्या संसारस्य विचित्रता। जनोऽयं चिन्तयत्युच्चैरन्यदन्यच जायते ॥ ५७ ॥ सुव्याप्त

छायामायाति ग्रीष्मतापातुरस्तरोः । नरस्तत्कोटरस्थेन दश्यते हा महाहिना ॥ ५८ ॥ वहत्यहो नरः शस्त्रं रिपोर्दारण-कारणम् । कदाचिदेष तेनैव दैवात्तेनैव हन्यते ॥५९॥ मनोरथानुरूपं यत्फलमाप्नोति कश्चन । महाविडम्बनाजालक्षेप-विश्वासकं हि तत्॥६०॥एकान्तदुःखदे लोको विरज्य मयि मुक्तये । मा धावत्विति संसारो दत्ते सुखकणानपि ॥६१॥ या संसारसुखावाप्तिर्दुरन्तैव नरस्य सा । मत्स्यस्य गलिकायन्त्रनियुक्तकवलोपमा ॥६२॥ अयं जनो मनो लोलं कथं नु कथयत्यदः । भवभावेषु यद्वज्रलेपेनेव नियन्त्रितम् ॥६३॥ अलोकव्योम्नि ये लोकव्योम क्षेप्तुं क्षमा जिनाः । तदाश्रय-बलाच्चित्तं कृपामि भवभावतः॥६४॥इति ध्यायन्ययौ धाम त्वरितं नृपविक्रमः । चन्द्रसेनं सुतं राज्ये न्यस्य तस्थौ व्रतो त्सुकः ॥ ६५ ॥ ज्ञानविज्ञाततद्भावः स्वभावकरुणाकरः सद्गुरुः केवली काले तत्र तत्पुरमासदत् ॥ ६६ ॥ तद्वार्तावा-दिनं दानैरानन्द्योद्यानपालकम् । विक्रमः प्रमदस्मेरो जगामाराममुत्सुकः॥६७॥ सोऽथ प्रदक्षिणीचक्रे गुरुं कर्मेन्धनानलम् चिरानुरागसंवृद्धां श्रद्धां परिणयन्निव ॥६८॥ नत्वा गुरुं धराजानिर्यथायुक्तमथासनम् । भेजे रेजे च तद्वाणीवृष्टिसंपात-चातकः ॥ ६९ ॥ अथ व्रतार्थमभ्यर्थ्य यतीशं जगतीपतिः । प्रभावनार्थं तीर्थस्य जगाम नगरं पुनः ॥ ७० ॥ धनंजयाख्ययक्षेशकृतसान्निध्यबन्धुरः । सुरासुरचमत्कारकरोदारमहोत्सवः ॥७१॥ प्रभावनाभिर्यक्षेन्द्रकृताभिः सुकृता-विधिभिः । वैधर्मिकैरपि स्तुत्यं जनयञ्जिनशासनम्॥७२॥पुराद्गुरुमगाद्भूपः सिद्धिलोभनरूपभाक् भेजे भवशिरःशूलं मूलं ज्ञानतरोर्व्रतम्॥७३॥त्रिभिर्विशेषकम्॥ नृचन्द्रे चन्द्रसेनेऽथ नत्वा नगरगामिनि । विजहार महीं राजमहर्षिर्गुरुभिः सह ॥ ७४ ॥ श्रद्धाशुद्धतपाः शुद्धसिद्धान्तपठनक्रमः । बोधयित्वा धरां ज्ञानी स परं पदमासदत् ॥ ७५ ॥ इति तत्त्वेन

सम्यक्त्वं सेव्यं विक्रमवत्ततः जनो येन भवत्याशु लोकत्रयमयग्यपः ॥७६॥

इति सम्यक्त्वे विक्रमराजकथा ॥

पापध्वान्तभिस्तस्य सम्यक्त्वस्य रवेरिव । राशिवद्वादशश्राद्धव्रतान्याभोगवृत्तये॥७७॥निरागस्त्रसहिंसाङ्गपीडारक्षणलक्षणम् । प्रथमं तत्त्वहिंसाख्यं श्राद्धानां स्यादणुव्रतम्॥७८॥सुकृताम्भोजहंसीयमहिंसैवातिनिर्मला । भवमोक्षजलक्षीरविवेकाय निषेव्यते॥७९॥भूस्वर्गभोगसौख्यश्रीसोपानश्रेणिशालिनी । अहिंसा नाम निःश्रेणिर्निःश्रेयसगमावधिः॥८०॥ हिंसा निरन्तरं दुःखमहिंसा तु परं सुखम् । जन्तोर्द्वादशहो सूरचन्द्रयोरिव तद्यथा ॥८१॥

अस्ति रूपेण संपत्त्या सुकृतोपचयेन च । पुरन्दरपुराल्लब्धजयं जयपुरं पुरम् ॥ ८२ ॥ अभूद्भूपः श्रियां पात्रं तत्र शत्रुञ्जयाह्वयः । यद्यशःक्षीरधिर्धरिद्रुर्यशःशैवलाद्भमी ॥८३॥ नन्दनौ सूरचन्द्राख्यौ तस्याभूतां मतौ सताम् । सूरचन्द्राविवोभिन्नानन्दं कर्तुमिदं जगत्॥८४॥ ज्येष्ठे श्रेष्ठगुणभ्रान्त्या बिभ्राणः स्नेहविभ्रमम् । स तस्मै सूनवे राजा युवराजपदं ददौ ॥८५॥ चन्द्रस्य तु महीन्द्रेण न वृत्तिरपि निर्ममे । ततः स चिन्तयामास स्वावासशयनो निशि ॥८६॥ सूरोऽस्य विदधे राज्ञा युवराजः स्वयं मुदा । न परिरप्यहं वृत्त्या पितुर्मोहः कियानहो॥८७॥ पराभूतस्य तद्वाशा स्थातुं मेऽत्र न युज्यते । कलभः किं वसेद्यूथे यूथेशेनापमानितः॥८८॥एवं विचिन्त्य निस्तन्द्रश्चन्द्रः सान्द्रपराभवः । अचलज्ज्वलितस्नेहः स्वगेहान्निर्यलक्षितः॥८९॥चित्तावेशाहतक्लेशः स्वदेशत्यागरागभृत् । कुमारः सुकुमारोऽपि दूरे देशान्तरेऽविशत्॥९०॥ रत्नपरानमिलग्र पत्तनं विशतेऽद्भुतम् । तदुद्यानसमीपेऽथ चन्द्रः श्रान्तस्तरोस्तले ॥९१॥श्रुतिपेयं स्वरं श्रुत्वा ततस्त-

दनुमारतः । विशन्नारामम्मद्राक्षीचन्द्रः साधुं सुदर्शनम्॥९२॥सभागर्भविनैा नत्वा तत्त्वार्थदेशकं मुनिम् । तन्मुखादिति शुश्राव स धर्मं भावपावनः ॥ ९३ ॥ सापराधा अपि प्रायो गेहिभिः पुण्यदेहिभिः ।-न हन्तव्यास्त्रसास्तावत्किं पुनस्ते निरागसः ॥ ९४ ॥ इत्यादिदेशनां कर्णदेशनान्दीं निशम्य सः । प्रपद्य करुणामेवं स्वगिरा प्रत्यपद्यत ॥ ९५ ॥-मयाप-राधिनोऽप्युच्चैरुपरोधेऽपि च प्रभोः । जन्तवो हन्त हन्तव्या नान्यतः शौर्यवृत्तितः॥९६॥इत्यात्तनिश्चयश्चन्द्रो नत्वा सत्त्व-गुरुर्गुरुन् । पुरे तत्रैव धात्रीशं जयसेनमसेवत॥९७॥शौचसत्यौचितीदाक्ष्यदाक्षिण्यादिभिरद्भुतैः । निजैः सेवागुणैरेवा-भवद्भर्तुरयं प्रियः ॥९८॥ निवेश्य रहसि प्रेमहसितस्नपिताधरः । लपति स्म पतिः शुद्धविवेकममुमेकदा ॥९९॥ अपी-क्ष्ममरे धीरा वीराः क्षीराभकीर्तयः । ये सन्ति मे तृणानीव त्वद्दृष्टिस्तानपीक्षते॥२००॥क्रियाकथितनिःशेषगुणस्य तव पौरुषम् । दृष्टिर्दिशत्यसौ धैर्यरसार्णवनवाब्जिनी॥१॥नदीरवारकोटीर वैरिशल्यं मम स्खलत् । तूर्णमाकर्ष हृदयाद्दृदया-दपि रोपितम् ॥२॥ अन्यायमदिराकुम्भः कुम्भ इत्युग्रशुम्भनः । मन्त्यायवृक्षकरटी चरटीभूय वल्गति ॥३॥ स्त्रीश्च गाश्च हरत्येष क्रूरो हन्ति यतीनपि । चमूरूद्धो यमस्यापि दुर्गमं दुर्गमश्नति॥४॥तत्तद्दुर्गं महादुर्गवल्गनो वल्गुविक्रमः । गुप्तं प्रविश्य तं सुप्तं मत्प्रमोदाय दारय ॥५॥ इत्यात्तवाग्मि भूपे गां चन्द्रोऽमुञ्चत्सुधामयीम् । प्रारब्धनीर्थकृद्धर्ममहामा-गरजागराम् ॥ ६ ॥ हन्तुं जन्तूनयुद्धेषु प्रत्याख्यानं प्रभो मम । युद्धेष्वपि परित्रस्तानस्तानन्द्रागिरायुधान् ॥ ७ ॥ इत्य-स्य निश्चयं शौर्यमयं धर्ममयं च सः । नृपो मत्वा मनश्चक्रे मदसंमदयोः पदम्॥८॥अध्यक्षमङ्गरक्षाणामग्रण्यं मन्त्रिणामपि । सर्वेश्वरं च तं चक्रे क्रमात्प्रीतः क्षमापतिः॥९॥पापव्यापारपारीणो रीणातुल्यमूकुलः । विवेश देशं संरम्भी स कुम्भ नरष्टो-

न्यद्॥१०॥सारचीरचयश्चन्द्रस्तळघाय दधाव च। अमार्गत्वरितैः सैन्यैर्दुर्गमार्गान् रुरोध च॥११॥पलायमानमुन्निद्ररौद्र-
चन्द्रचमूभयात्।तं रुरोध पुरोद्दर्पसहर्षसुभटोत्करः१२पुरतः पार्श्वतः पश्चान्मिलद्भिः स बलैरभूत्।वनेभः सर्वदिग्धावद्दवा-
नल इवाकुलः॥१३॥सेनासु तासु चरटो झम्पासु करटो यथा। कथंचिज्जीवनोपायकणिकामप्यनाप्नुवन्॥१४॥न शौर्यवह्निले-
शोऽपि मय्यस्तीति दिशन्निव। सनिःश्वासमुखन्यस्ततृणश्चन्द्राग्रतोऽलुठत्॥१५॥प्रसन्नहृदयः स्फीतदयस्तदयमुद्यशाः।
हृष्यद्रोमालिमालिङ्गत्कुम्भमुत्थाप्य भूपभूः॥१६॥तदादि स्फुरदादिलमहसं बहुसंमदः। चन्द्रं नृपोऽधिकं मेने पुत्रतोऽपि
स्वतोऽपि च॥ १७॥ चन्द्राग्रभूरतृप्तस्तु यौवराज्यश्रियापि सः। राज्याय सूरः क्रूरात्मा दधौ पितृवधे धियम्॥ १८॥
निशीथे निशितास्त्रौघो दूरं वञ्चितयामिकः। उन्मार्गे. सौधमाविष्टः कालादिष्टः फणीव सः।१९॥ततः पराङ्मुखं सुप्तं
तीव्रेणास्त्रेण भूपतिम्। स जघान घनं लोभः शोभते मूलमंहसाम्॥२०॥ततस्त्रसन्नसौ देव्या दृष्टः संमुखसुतया घात्येष
घाति घात्येष घातीति पूत्कृतो रवः॥२१॥धावत्सु द्वारपालेषु भूपालेनेत्यभाणि च। कश्चायं घातक इति ज्ञातव्यो मैष
हन्यताम्॥२२॥तनुजं मनुजस्वामी तं विज्ञाय विकारिणम्। यूथाद्विनष्टं दासेरमिव देशान्निरासयत्॥२३॥ त्वरवत्तुरगा-
रूढैः स समेलकमेलकैः। प्रधानपुम्भिर्भूचन्द्रः सुतं चन्द्रमथाह्वयत्॥ २४॥ जयसेनमथापृच्छय समागात्तस्तथास्थितम्।
पितरं प्रेक्ष्य चन्द्रोऽभूदास्पदं हृद्दुःखयोः॥२५॥ निवेश्य तं सुतं राज्ये राजा तद्घातपीडया। सूरे समत्सरो मृत्वा क्वापि
क्वापि नगेऽभवत्॥२६॥ कलङ्कपङ्किलः सोऽपि सूरो जीवन्कुकर्मभिः। चरन्देशान्तराण्याप वनं तत्रीविदीविनम्॥२७॥
पलायमानस्त्रासवशःसंहृतपौरुषः। जघ्ने प्राग्वैरवैरस्यात्कोपिना दीपिनामुना॥२८॥स सूरजीवस्तत्रैव वने जातः किरा-

गाधिस्तस्याधिपो जैनस्तान्हन्तुं प्रजिघाय नः ॥९६॥ तदाशु दिश जानासि यदि येन निहत्य तान् । यशो लभामहे संघरक्षया सुकृतानि च ॥ ९७ ॥ अथ दध्यौ धराधीशः सत्योक्तिस्तान्दिशामि चेत् । समालिङ्गति सर्वाङ्गं तन्मां तद्वधपातकम् ॥ ९८ ॥ यदि तान्न दिशाम्याशु तदेतैरभिपातिताः । भवन्ति मम ते संघघातपातकदायिनः ॥ ९९ ॥ तत्किमत्र करोमीति ध्यानादुत्पन्नधीः सुधीः । तानभाषे भटानत्र दृष्टा दृष्टया मया न ते॥२००॥नद्विलोकाय युष्माकं युक्तं नेह विलम्बितुम् । यत्रास्ति संघस्तत्राशु गम्यतां त्रातुमातुरैः ॥१॥ तेऽपि तत्र गमिष्यन्ति याथ तत्प्रथमं यदि । ततश्च कीर्तिर्धर्मश्च भवतां भवतोऽद्भुतौ ॥ २ ॥ इत्युक्त्यात्तचमत्कारास्ते संघाभिमुखं ययुः । चोरास्तु गुल्मान्निर्गत्य प्रणिपत्य तमब्रुवन्॥३॥गल्मे सन्तो वदन्तोऽत्र ज्ञाता एव त्वया वयम् । न रक्षिता नृपवीरेभ्यः पिता प्राणप्रदोऽसि नः ॥ ४ ॥ धर्मद्रुग्धार्णवज्योत्स्नां पापध्वान्तरविच्छविम् । स्तुमो धियं तव यया वयं संघश्च रक्षिताः ॥ ५ ॥ इत्युक्त्वा ते चलित्वाशुः प्रगे सोऽप्यचलत्पुरः । अन्वेत्य सत्वरैरश्ववारैः कैश्चिदभाष्यत॥६॥दण्डिलास्मत्पतेस्त्रस्यन्हंसो राजपुरीश्वरः । दृष्टः क्वापीह तं हत्वा तरामो वैरवारिधिम ॥ ७ ॥ स्वजीविताय कः पापं वदत्वनृतमित्यथ । अहं स हंस इत्युक्त्वा धृतास्त्रोऽसौ पुरः स्थितः ॥८॥ सस्मार च नमस्कारान्राजा धर्मे धियं दधत् । दुन्दुभिः खे च दध्वान पुष्पवृष्टिः पपात च ॥ ९ ॥ सत्यवादिञ्जय जयेत्यानन्दविशदं वदन् । सम्यग्दृक्कश्नाध्यक्षः तस्य यक्षः पुरोऽभवत् ॥ १० ॥ प्रीतस्त्वत्सत्यवादेन त्रासितत्वदरिव्रजः । एतद्वनपतिर्यक्षस्त्यक्षाख्यस्त्वां वदाम्यदः ॥११॥ तीर्थे त्वदीप्सिते यात्रा यत्र स्यादद्य तद्दिनम् । तद्यामो जिनमानन्तुं मद्विमानमलंकुरु॥१२॥ इत्यस्योक्त्या विमानं तदग्रमारुढवान्मुदा । स्वं चालोकन

यत्कापि नानृतम् । भूकन्यागोधनन्यासकूटसाक्ष्ये विशेषतः॥४६॥जन्तूनामहितं यत्तन्न वाच्यं सत्यमप्यहो । सुधीभि-
र्विकृतप्रश्नेन बोधनीयोऽत्र पृच्छकः ॥ ४७ ॥ असत्यमपि निश्चित्य वाच्यं धर्महितं वचः । न सत्यमपि तत्साम्यमेति
पुण्यचयश्रिया ॥४८॥ ईदृक्सत्यगिरां वक्ता यथा राजपुरीपतिः । वैभवं बिभरामास हंसः संश्रूयतां तथा ॥४९॥
अश्रान्तधर्मरचनः स सत्यवचनव्रतः । मासगम्ये वनीरम्ये रत्नशृङ्गाभिधे गिरौ ॥५०॥ पूर्वजैः स्थापिते चैत्ये चैत्री-
यात्रोत्सवे नृपः । चचालाल्पपरीवारो नन्तुं श्रीऋषभं जिनम् ॥५१॥ युग्मम् ॥ अर्धवर्त्मनि तं यान्तं चरस्तारतरस्वरः ।
व्यग्रो व्यग्रगमनास कश्चित्पश्चादुपागतः ॥ ५२ ॥ यात्रार्थं त्वयि निर्याते नरेश दशमेऽहनि । सीमालोऽर्जुनभूपालः
त्वत्पुरीं शत्रुरापतत् ॥ ५३ ॥ निरस्य त्रस्यतः सर्वान्निहत्य विहितायुधान् । सभाण्डागारहस्त्यश्वं स राजगृहमग्रहीत्
॥ ५४ ॥ भयातुरं पुरं कृत्स्नमानन्याभयदानतः । स सिंहासनमासीनः सद्यः स्वाज्ञामदापयत् ॥ ५५ ॥ अन्यालय-
निलीनेन श्रीसुमन्त्रेण मन्त्रिणा । अतस्त्वयि नियुक्तोऽहं युक्तं यत्तद्विधीयताम् ॥ ५६ ॥ अथाब्रुवन्भ्रुवः क्षेपात्तं
नृपं निकटा भटाः । वलामहे महेष्वास त्वत्पुरः कः स्फुरेत्परः ॥ ५७ ॥ तदाल्पकम्पितं दन्तद्युतिपुष्पैःकरोऽर्चयन् ।
अजातमुखमालिन्यस्तानभाषत भूपतिः ॥ ५८ ॥ संपदो विपदोऽपि स्युः पूर्वकर्मवशंवदाः । मूढा मुदं विषादं वा
तत्संपत्सु तन्वते ॥ ५९ ॥ नेदानीं भाग्यलभ्याय युक्तं राज्याय धावनम् । भाग्यलभ्यं परित्यज्य जिनयात्रामहोत्सवम्
॥ ६० ॥ तथात्रामसमाप्यैनां न वळे धवलेक्षणाः । विघ्नैः प्रारब्धसत्कर्मसंत्यागोऽधर्मचेष्टितम् ॥ ६१ ॥ इत्युक्त्वा
वाहयामास वाहनाहनमध्वनि । भूपतिः कम्पितक्रूरपातकादिव्रमूनयः ॥६२॥ परिवारजनेनाथ नाथभक्तिवियोगिना ।

स्वस्वमातुपवीक्षार्तिभाजा राजा व्यमुच्यत ॥६३॥ यथा यथा स तैर्मुक्तो मुदं भेजे तथा तथा । त्रुटन्ति यात्राभाग्यस्य
भागिनोऽमी क्रमादिति ॥ ६४ ॥ अथ च्छत्रभृतैकेन युक्तो मुक्तो जनैर्नृपः । कामप्यवापदेकाकी मार्गभ्रष्टो महाटवीम्
॥६५॥ चारुचीरवरेण्याश्वशुभाभरणवीक्षणात् । भूरिलोभेन मा भिल्लाः सानन्दाः खेदयन्तु माम् ॥६६॥ उत्तरीयमिति
च्छत्रधरस्य परिधाय सः । यात्रैकधीर्दिशो वीक्ष्य प्राचलत्तीर्थदिङ्मुखः ॥ ६७ ॥ युग्मम् ॥ अथैकः पश्यतस्तस्य
जातवातवरत्वरः । ग्लात्यातुरो लतापुञ्जनिकुञ्जमविशन्मृगः ॥ ६८ ॥ किरातः कश्चिदायातस्तमनु स्फारयन्धनुः ।
दृक्पथातीतसारङ्गः क्ष्मामुजङ्गमुवाच तम् ॥ ६९ ॥ अत्र पत्रततिच्छन्ने न पश्यामि पदं वने । मल्लक्ष्यं स मृगः
क्वागान्ममेश कृपया दिश ॥ ७० ॥ सत्ये ख्याते मृगवधोऽन्यथा ख्याते मृषावचः । तद्बुद्ध्या विप्रतार्योऽयमिति
ध्यात्वावदन्नृपः ॥ ७१ ॥ भोः पृच्छसि स्वरूपं मे मार्गभ्रष्ट इवापतम् । व्याधोऽभ्यधादहो मूढ त्रस्तः क्वागान्मृगो वद
॥ ७२ ॥ नृपः प्राह महाभाग हंस इत्यभिधा मम । उच्चैराचष्ट मृगयुर्दिश मार्गं मृगस्य मे ॥ ७३ ॥ जगतीशो जगौ
मित्र स्थानं राजपुरी मम । भिल्लोऽभ्यधात्क्रुधा रेऽन्यत्पृच्छ्यसेऽन्यत्प्रजल्पसि ॥ ७४ ॥ व्याजहार स राजन्यो भिन्नाह
क्षत्रियान्वयः । अत्युच्चैरचिवान्व्याधः किं महाबधिरोऽसि भोः ॥ ७५ ॥ भूपोऽवददिशसि मे यन्मार्गं यामि तत्पुरम् ।
व्याधोऽभ्यधत्त बाधिर्यव्याधियः सोऽस्तु ते चिरम् ॥ ७६ ॥ इत्युक्त्वैणनिराशोऽयमगाद्व्याधो यथागतम् । ययौ
पुण्यभराक्रान्त क्ष्माकान्तस्तु शनैः पुनः ॥ ७७ ॥ मतिमान्यतिमायान्तमेकमग्रे निरीक्ष्य सः । नत्वा मार्गं च मुक्त्वा
च पुरावत्प्राचलन्नृपः ॥ ७८ ॥ कृतान्तस्येव दृक्पातौ ततः कोपारुणौ पुरः । एत्य भिल्लावुभौ भीमभृकुटी भूपमूचतुः

॥ ७९ ॥ चिरात्पल्लीपतिः शूरश्चौर्यबुद्ध्याथ निःसृतः । दूरादस्मिन्वने मुण्डं पापण्डिनमलोकत ॥ ८० ॥ आनन्दशकुनं तं स तद्भाग्योन्नतायुधौ । आनां प्रेष्यौ द्रुतं प्रैषीदृष्टः क्वापि स कथ्यताम् ॥ ८१ ॥ दृष्टौ राजा मयि व्याजवाचि वा मौनभाजि वा । सरलेन पथा यान्तौ कृतान्तौ तन्मुनेरिमौ ॥ ८२ ॥ संमत्यसत्यमप्युक्तं सत्यादप्युरुपुण्यकृत् । इति शब्दच्छलान्सत्यममत्यमयमभ्यधात् ॥ ८३ ॥ वामेन याति दुःखान्वजुपामशकुनाय सः । लब्धो युवाभ्यां न यथा तथाद्भुतगतिर्यतिः ॥८४॥ मार्गे तद्वचसा तस्मिंस्तौ मुधा पर्यधावताम् । असद्गुरूपदेशेन संयमस्येव वर्त्मनि ॥८५॥ तादृग्मार्गमृतासेवकवर्भिष्णुसुकृतद्रुमः । यशःप्रसूनैः सुरभिस्तथैवं पथि सोऽचलत् ॥८६॥ प्रसूनपातसुरभीभूतभूतलमण्डलम् । शयनाय निशारम्भे सारं भेजे स भूरुहम् ॥८७॥ तृतीयेऽह्नि पतिष्यामः संघे तस्मिन्धनाम्बुधौ । दारिद्र्यभाग्मुन्मुच्य तरिष्यामो धनोर्मिषु ॥८८॥ प्राकृपात एव हन्तव्या हन्त केचिज्जनाः पुनः । भीचटयन्त्रस्यति यथा यातातुच्छपरिच्छदः ॥ ८९ ॥ इत्यदूरे लतागुल्मे बहूनां बलशालिनाम् । वचः कर्णचरीकृत्य श्रुत्वा सोऽचिन्तयन्नृपः ॥ ९० ॥ त्रिभिर्विशेषकम् ॥ केचिन्मलिम्लुचाः काममिह विश्राममागताः । साधुसंघातघाताय दुर्जने दुर्गुणा इव ॥ ९१ ॥ दूरादेभिः स्फुटं लुण्ट्यः संघो धर्मरुचिः क्वचित् । एकाकिना मया शक्यः केनोपायेन रक्षितुम् ॥ ९२ ॥ इति चिन्तामग्नो कुर्वन्निद्रया दूरितस्तदा । दीपदीप्तदिशोऽपश्यच्चौरान्कानप्युदायुधान् ॥९३॥ कोऽप्यसौ तस्करपुमानिभ्युत्थाप्य क्रुधा स तैः । मृत्यलोकान्महात्मायं कोऽपीत्युद्राव्य भाषितः ॥ ९४ ॥ चौराः केचित्कचिद्दृष्टा वदन्तो वा

प्रा हि हेरिकैणेह पथि संचजिघांसवः ॥ ९५ ॥ यौजनैर्ज्ञातिभिः स्थानाहितोऽस्मि चौरं यत्र ।

गाधिस्तस्याधिपो जैनस्तान्हन्तुं प्रजिघाय नः ॥९६॥ तदाशु दिशा जानासि यदि येन निहत्य तान् । यशो लभामहे संघरक्षया सुकृतानि च ॥ ९७ ॥ अथ दध्यौ धराधीशः सत्योक्तिस्तान्दिशामि चेत् । समालिङ्गति सर्वाङ्गं तन्मां तत्कृपातकम् ॥ ९८ ॥ यदि ताञ्च दिशाम्याशु तदेतैरनिपातिताः । भवन्ति मम ते संघघातपातकदायिनः ॥ ९९ ॥ तत्किमत्र करोमीति ध्यानादुत्पन्नधीः सुधीः । तान्बभाषे भटानत्र दृष्टा दृष्टधा मया न ते॥२००॥नष्टिलोकाय युष्माकं युक्तं नेह विलम्बितुम् । यत्रास्ति संघस्तत्राशु गम्यतां त्वातुरातुरैः ॥१॥ तेऽपि तत्र गमिष्यन्ति याथ तत्प्रथमं यदि । ततश्च कीर्तिर्धर्मश्च भवतां भवतोऽद्भुतौ ॥ २ ॥ इत्युक्त्याचमत्कारास्ते संघाभिमुखं ययुः । चोरास्तु गुल्मान्निर्गत्य प्रणिपत्य तमब्रुवन्॥३॥सत्ये सन्तो वदन्तोऽत्र ज्ञाता एव त्वया वयम् । न ख्याता नृपवीरेभ्यः पिता प्राणप्रदोऽसि नः ॥ ४ ॥ धर्मदुग्धार्णवज्योत्स्नां पापध्वान्तरविच्छविम् । स्तुमो धियं तव यया वयं संघश्च रक्षिताः ॥ ५ ॥ इत्युक्त्वा ते चलित्वाशु प्रगे सोऽप्यचलत्पुरः । अन्वेष्य सत्वरैरश्ववारैः कैश्चिदभाष्यत॥६॥दण्डिशास्मत्पतेस्त्रस्यन्हंसो राजपुरीश्वरः । दृष्टः पथापीह तं हत्वा तरामो वैरवारिधिम ॥ ७ ॥ स्वजीविताय कः पापं वदत्वनृतमित्यथ । अहं स हंस इत्युक्त्वा धृताक्षोऽस्तौ पुरः स्थितः ॥८॥ सस्मार च नमस्कारान्राजा धर्मे धियं दधत् । दुन्दुभिः खे च दध्वान पुष्पवृष्टिः पपात च ॥ ९ ॥ सत्यवादिन्नथ जयेत्यानन्दविशदं वदन् । सम्यग्दृक्तद्गणाध्यक्षः तस्य यक्षः पुरोऽभवत् ॥ १० ॥ प्रीतस्त्वत्सत्यवादेन त्वामिनत्वदरिव्रजः । एतत्रनपतिर्यक्षस्त्यक्षाम्यस्त्वां वदाम्यदः ॥११॥ तीर्थे त्वदीप्सिते यात्रा यत्र स्यादद्य तद्दिनम् । तत्रामो जिनमानन्तुं महिमानमलंकुरु॥१२॥ इत्यस्योक्त्या विमानं तद्यमारूढवान्मुदा । स्वं चालोकत

तत्कालं दिव्यमण्डनमण्डितम् ॥१३॥ दिव्यगायनवर्गेण गीयमानयशोगुणः । गुह्यकाधासनासीनः स जैनं धाम तद्ययौ ॥ १४ ॥ दिव्यद्रुकुसुमैर्दिव्यगन्धद्रव्यरसैरसौ । दिव्यप्रेक्षणकैश्चात्र जिनयात्रां समासवान् ॥ १५ ॥ स्वस्थाने च गतः शत्रुं यक्षपद्धं विमुच्य सः । पुरीं प्रमोदयामास नृपासनगतो नृपः ॥१६॥ भोगैरभूतलप्राप्यैः प्रीणनीयोऽयमन्वहम् । अन्तरायनिकायश्च रक्ष्योऽस्मिन्पुण्यकारिणि॥१७॥इत्युक्त्वा प्रीतिचतुरश्चतुरः सुरकिंकरान्। यक्षः श्रीहंसमापृच्छ्य द्यां ययौ द्युतिदीप्तदिक्॥१८॥युग्मम्॥ अहो सत्योक्तिमाहात्म्यमिहापि प्राप यन्मुदम्। परलोके तु स स्वर्गसंपदं हंसभूपतिः ॥१९॥ मृषावादविपाटोपक्लेशलोपसुधारसे । सत्यवादे रता नित्यं भवन्तस्तद्भवन्तु भोः ॥२०॥

इति मृषावादविचारे हंसनृपकथा.

अस्तेयममृषावादपादपच्छायवत्पुनः । क्लेशनाशाय सेवध्वमध्वगा भववर्त्मनः॥२१॥आहितं स्थापितं नष्टं विस्मृतं पतितं स्थितम्। नाददीतास्वकीयं स्वमित्यस्तेयमणुव्रतम् ॥ २२ ॥ अस्तेयव्रतदुग्धाब्धिमध्यस्थानकृतां सताम् । न स्याद्भवदवज्वालाकलापस्तापहेतवे ॥ २३ ॥ अदत्तादानविरतिव्रतनिश्चयनिश्चलः । लक्ष्मीपुञ्ज इवाप्नोति सर्वः सर्वमनिन्दितम् ॥ २४ ॥

तथाक्वचितधारम्भधर्मिधर्मोर्मिनिर्मलम्। श्रीहस्तिपुरमस्ति श्रीनिरस्तान्यपुरं पुरम्।२५।तस्मिन्नुदारदारिद्र्यमुद्रासर्वेश्वरोऽभवत्। सुधर्म इति सुधर्मरसैकवणिको वणिक्२६कैश्चिद्वराटकैः किंचित्क्रीत्वा विक्रीय चान्वहम्। कांश्चिद्वराटकोद्योमेऽजयत्कालं निनाय सः।२७।सधर्मचारिणी तस्य धन्याख्या धर्मचारिणी । अमूत्कार्यौचये चित्ताधिपचित्तानुवर्तिनी

॥ २८ ॥ पत्रे पत्रे स्फुरन्तीभिर्विचित्राभिर्विभूतिभिः । चार्वङ्गीभिः कृतैर्गीतनृत्यवाद्यैः प्रमत्तया ॥२९॥ रत्नाब्जमव्यव-
र्तिन्या दृग्भाग्याद्यधिरूपया । अगण्यपुण्यसंप्राप्यसर्वशृङ्गारसारया ॥ ३० ॥ श्रीदेव्या जिनमर्चन्त्या युक्तं पद्महृदं ह्रदम् ।
स्वप्नेऽपश्यन्निशान्ते सा नृत्यद्धंसामलोर्मिकम् ॥३१॥ त्रिभिर्विशेषकम् स्वप्नं प्रेक्ष्य प्रमोदेन गात्रैर्भेजे पुलकाङ्कुरान् ।
तैरेवाङ्गीकृताङ्गीयं प्रबुद्धाख्यत्प्रियं प्रति ॥३२॥ सोऽपि व्याख्यत्प्रिये पुत्रः श्रेयाञ्श्रीमान्महागुणः । स्वच्छाशयो जिनाधी-
शभक्तस्तव भविष्यति॥३३॥प्रीताथ धन्यंमन्यासौ धन्यार्हद्ध्यानमानसा । दूरविद्राणनिद्रा तं निशाशेषमवाहयत्॥३४॥
तस्मिन्नह्नि विनिर्दिष्टतुल्यं कर्म लाभान्तरायिकम् । क्रयविक्रयतो लाभं स लेभे द्विगुणं वणिक्॥३५॥इति व्यवहृतिक्रीडा-
वर्धमानधनः क्रमात् । सुधर्मः सुखलेशानां प्रथमातिथितां गतः ॥ ३६ ॥ धन्यायास्तनुकान्त्यैव गर्भोऽथ बुबुधे शुभः ।
शारदाम्भोदलेखाया गर्भस्थ इव भानुमान्॥३७॥सीमन्तोन्नयने वित्तचिन्तार्तः सोऽन्यदा वणिक् । पादाङ्गुष्ठेन गेहान्त-
र्विलक्षो व्यलिखन्महीम् ॥ ३८ ॥ तदुल्लेखनखाताग्रां स च क्ष्मायां व्यलोकयत् । कान्तकल्याणमाणिक्यमण्डलैराविलं
बिलम् ॥३९॥ विस्मयानन्दसंदर्भी मणिरुक्ममयं वणिक् । अगारं कारयामास वासवावासवत्ततः ॥४०॥ रूपलास्ये-
ऽप्सरस्तुल्यो दास्ये विनयवामनः । तस्य सद्मनि दासीनां संघः संघटितस्ततः ॥४१॥ तस्मिन्दातरि दातव्यमणिचारुत्व-
दर्शनात् । दातारोऽप्यर्थितां जग्मुः सीमन्तोन्नयनोत्सवे॥४२॥कूपं जलेष्विव बिलं स्वर्णरत्नगणेषु तत् । कृष्यमाणेष्वपि
वणिक् पूर्णमेव न्यरूपयत्॥४३॥तद्भूतिमुदिता चिन्तासमकालासदोहदा । सुमुहूर्तेऽसूत धन्या सुखेन सुषुवे सुतम्
॥४४॥ दानाधिक्येन गीतादिचारुत्वेन च स व्यधात् । सुतजन्मोत्सवे श्रेष्ठी विस्मयं सुमदामपि ॥ ४५ ॥ लक्ष्मीपुत्र-

मिवालोक्य तं सुतं कान्तिभिः पिता। महेन महता लक्ष्मीपुञ्जनामानमातनोत्॥४६॥कालकालोचितैर्भावैरचिन्त्योपस्थि-
तैः शिशुः। अजातचिन्तादुःखोऽयं कामं कामवदैधत॥४७॥अस्पृशन्क्लेशकणमप्यरोदीन्न कदाप्यसौ। नित्यानन्दस्मितमुखः
पित्रोः सुखकरोऽभवत्॥४८॥कला. प्रतिदिनं गृह्णन्कुतोऽप्युल्लसिताः सिताः। कचित्स्तोमतनुः सोम इवावर्धत दक्प्रियः
॥ ४९ ॥ तत्तद्विक्रमसद्वीकलागुणगणोदयैः। कन्यास्तमागमन्नष्टौ दिग्भ्योऽष्टभ्यः स्वयंवराः ॥ ५० ॥
नित्यं रत्नालये लीनो दर्शनस्पर्शनक्षिपोः। नाबुध्यत स्वरूपं स तमिस्रतपनत्विषोः ॥ ५१ ॥ यद्यत्प्रीतिकरं
सर्वं स तत्तदुपभुक्तवान्। यद्दुःखकरं तत्तादृबुबुधे सत्तयापि न ॥ ५२ ॥ प्रियाभिरेव संवृत्तनृत्तगीतादिसंमदः।
कालं यान्तं स नाबोधि पञ्चोत्तरसुरो यथा ॥ ५३ ॥ अचिन्तिताः कुतो भोगाः स्युर्ममेति कदाप्यसौ।
अङ्के प्रसुप्तः कान्तानां सुखी यावदचिन्तयत ॥५४॥ तावद्दिव्यतनुर्दिव्यचीराभरणभासुरः। कश्चित्पुमान्पुरः स्पष्टीभूय
बद्धाञ्जलिर्जगौ ॥५५॥ युग्मम्॥ धन्याकुक्षिसरोहंस गृहं सर्वश्रियां बृहत्। विद्यते विपदां दूरं मणिपुरं महापुरम्॥५६॥
तत्रासीत्सार्थपः पुण्यधरो गुणधराभिधः। सोऽन्यदा विशदाख्यस्य मुनेः पार्श्वे वनेऽगमत् ॥५७॥ जन्तोः स्याद्दुःखदं
द्रव्यहरणं मरणादपि। अथ सुकृतिभिः कार्यं चौर्यचर्याविमोचनम्॥५८॥एवमाकर्ण्य पुण्यात्मा स विद्याधरसंसदि। अद-
त्तादाननिवृत्तिं व्यधात्तत्र तदा मुदा॥५९॥पुरं प्रासः कदाप्येष विशेषधनकाङ्क्षया। देशान्तराय कस्मैचिद्भूरिभाण्डभरो-
ऽचलद्॥६०॥ स्वदेशान्ते महाटव्यामस्मिन्सार्थे विशत्यथ। अश्वारूढः कांचित्प्रौढपददण्डे व्रजन्पुरः ॥ ६१ ॥ दृष्ट्वासौ
पतितां स्वर्णलक्षमूल्यां मणिस्रजम्। व्रतभङ्गभयात्तस्यां न मुहुर्दृष्टिमप्यदात्॥६२॥युग्मम्॥ किं सार्थो याति दूरे यच्छु-

यते तुमुलोऽपि न । इत्यसौ जातहृद्दाहस्ततो वाहमवाहयत्॥६३॥मार्गे हरिखुरोत्खाते स्वर्णपूर्णं स भूतले । ताम्रकुम्भं निभाल्याशु क्षतभङ्गमथाययौ॥६४॥सहसाश्वे मृते पापभीरुः सोऽचिन्तयत्तदा । मम वाहयतो वाहः प्रमीतोऽयं हतोऽस्मि हा ॥६५॥ य एनं जीवयत्यश्वं ददे तस्मै निजं धनम् । इति ध्यायंश्चचालांघ्रिचारेणैव त्वराभरात् ॥६६॥ तृषातुरस्तरौ वद्ध्रां वीक्ष्य वारिभृतां दृतिम् । कस्येयं दृतिरित्युच्चैरुच्चचार मुहुर्मुहुः॥६७॥दूरे गतस्य वैद्यस्य विभोर्वीक्षितुमौषधम् । नैवाहं ज्ञापयिष्यामि पिब तन्निर्मलं जलम् ॥ ६८ ॥ इत्यसौ शाखिशाखाग्रपञ्जरस्थशुकाननात् । आकर्ण्य कर्णौ पाणिभ्यां प्रच्छाद्य शुकमभ्यधात् ॥ ६९ ॥ युग्मम् ॥ तृष्णा गृह्णातु मे प्राणांस्तेनादत्तं पुनः पयः । न पिबामि महापापमदत्तादानमुच्यते॥७०॥ शाखाग्रादुपसहृत्य शुकरूपं सपञ्जरम् । उत्तीर्याग्रेचरः कोऽपि नरः स्थित्वा मुदावदत् ॥ ७१ ॥ वैताढ्ये विपुलापुर्यां सूर्याख्यः खेचरोऽस्म्यहम् । त्वत्पुरे विशदं तातं मुनिं नन्तुं वनेऽगमम् ॥ ७२ ॥ ममासंख्यधनस्यापि परद्रव्ये हृते सुखम् । अतो मामयमुद्दिश्यादिदेशास्तेयवर्णनाम्॥७३॥अदत्तादानविरतिस्तथा चक्रे तु तत्पुरः । चिरं चिन्तितवानस्मि तदा सस्मयविस्मयः ॥ ७४ ॥ दूरं देशं विशन्त्येते सार्थपाः शीलवार्थिनः । तत्किं दृष्ट्वा सुखेनान्यद्रव्यं नैव हरन्त्यमी ॥ ७५ ॥ तदवश्यं करिष्येऽस्य सार्थपस्य परीक्षणम् अदृश्येन मया प्रापि प्रस्तावस्त्वया पश्यता ॥ ७६ ॥ तृरत्न रत्नमालां ते निधिं चाहमदर्शयम् । न जितस्त्वं तु लोभेन वस्तूनां महतामपि ॥ ७७ ॥ कृत्वाऽहं मृतं पादगत्या तृष्णातुरस्य ते । मयाम्भो दर्शितं शीतं कीरप्रेरणयान्वितम् ॥७८॥ कार्ये वर्यतमे प्रौढे प्राणरक्षणलक्षणे । लोभेन न पराभूतस्त्वमल्पस्यापि वस्तुनः॥७९॥तमित्युक्त्वा निजान्सूर्यः खेचरानयमाह्वयत् । तत्रासीरत्नदृष्टा-

स्ते बभूवुः प्रकटाः पुरः॥८०॥गृभिः सूर्यः समानीय मणिमालां निधिं ह्यम् । अन्यच्च प्रचुरं द्रव्यं सार्थपस्य पुरोऽमुचत्
॥८१॥ मभनश्वं तथा मार्गे सार्थेशविरहार्दिते । स निनाय जनप्रीतिकरं गुणधरं क्षणात् ॥८२॥ किमेतद्धनमित्युक्तः
सार्थपेनाथ सोऽवदत् । किंचिन्मदीयं किंचिच्च कौतुकाज्जनतो हृतम् ॥ ८३ ॥ चौर्यं तातस्य राजर्षेर्बोधैर्मुक्तं न यन्मया ।
तत्पद्मनालोकेन स्वयमेवाद्य तत्यजे॥८४॥इत्थं त्वं मे गुरुस्तत्तेऽर्चायामेतद्धनं कृतम् । इति जल्पपरं विद्याधरं गुणधरो-
ऽभ्यधात् ॥८५॥ धनं यस्य हृतं यत्तत्तस्मै देहि तमञ्छिदे । इत्युक्तस्तत्तथा वाक्यं सूर्यश्चक्रे स्वसेवकैः ॥८६॥ गृहाणेदं
धनं मे त्वमिति जल्पंश्च खेचरः । अभाणि सार्थपेन स्वं मुक्त्वा सर्वस्वमग्रतः॥८७॥स्वीकुरु त्वमिदं वित्तं यन्मयेति प्रति-
श्रुतम् । यो मेऽश्वं जीवयत्येनं तस्मै सर्वं ददे धनम् ॥ ८८ ॥ किंच पात्रं न दानार्हमहं तत्ते धनं ध्रुवम् । न गृह्णामीति
जल्पन्तं सार्थपं खेचरो जगौ॥८९॥त्रिभिर्विशेषकम्॥ अहं त्वदुपदेशस्य नेहानृण्यं भवे भजे । तत्स्वमायाकृते कार्ये कथं
गृह्णामि ते धनम् ॥९०॥ मद्धनं त्वं न गृह्णासि नाददेऽहं तु ते धनम् । ततः सार्थेश कः स्वामी श्रियामासां भविष्यति
॥९१॥ सोऽप्याह धर्म एवैकः प्रभुस्त्रिभुवनश्रियाम् । यस्मै यस्मै प्रदत्ते स तस्य तस्य भवन्ति ताः ॥९२॥ तदेहि यावः
सर्वत्र धर्मे सर्वज्ञदर्शिते । विश्वस्वामिनि विन्यस्य कृतार्थां कुर्वहे श्रियम्॥९३॥वचस्यङ्गीकृते तेन खेचरेण प्रमोदिना ।
ददतुर्मुदितौ वित्तं सप्तक्षेत्र्यामुभौ शुभौ॥९४॥ततो गुणधरः क्षिप्त्वा भवं धर्मैः सुखादसौ । लक्ष्मीपुञ्ज प्रभापुञ्ज पुण्यपुञ्जो
भवानभूत् ॥९५॥ तच्छिक्षयैव सूर्योऽपि त्यक्तस्तेयो धनं ददत् । पूर्णायुः पुण्यमानेन जातोऽस्मि व्यन्तराधिपः ॥९६॥
त्वद्भाग्यदेवताशक्तिनुन्नो गर्भात्प्रभृत्यपि । अपूरयं रयात्तेऽहं कालकालोचितं हितम् ॥९७॥

इति व्यन्तरवागन्ते मूर्छामाप्य प्रबोधभाक्। संजातजातिस्मरणो लक्ष्मीपुञ्जः पदं मुदाम्॥९८॥विशुद्धं धर्ममाराध्य लब्ध्वा देवत्वमच्युते। स्तुत्यं वितत्य मर्त्यत्वं श्रेयःश्रियमशिश्रियत् ॥ ९९ ॥ युग्मम् ॥ इत्यात्तसर्वलक्ष्मीकलक्ष्मीपुञ्ज-निदर्शनात्। जनेन भाव्यमस्तेयव्रतशस्तेन सर्वदा ॥४००॥

इत्यदत्तादानव्रतविचारे लक्ष्मीपुञ्जकथा ॥

अस्तेयव्रतदीपस्य प्रकाशोल्लासवर्त्मनः। मुक्तिवर्त्मनि पान्थानां सतां ब्रह्मव्रतं मतम् ॥ १ ॥ संतोषः स्वेषु दारेषु त्यागो वा परयोषिताम्। प्रथयन्ति गृहस्थानां चतुर्थं तदणुव्रतम् ॥ २ ॥ येऽन्यदारपरीहारव्रतनीव्रतयोद्धुराः। भयान्मोहादयो दोषा न तेषु ददते पदम् ॥ ३ ॥ अहो ब्रह्मव्रतं मुक्तेः सन्मुखीकारकारणम्। गीयते नागिलस्येव विपदामुपदाहकृत् ॥४॥

तथाहि-भोजभूजानिभुजाहिपरिरक्षितम्। निधानमिव धर्मस्य पुरमस्ति महापुरम्॥५॥जिनेन्द्रसेवाहेवाकविवेक-विकसन्मनाः। तस्मिन्विस्मयकृल्लक्ष्मीर्लक्ष्मणोऽस्ति महावणिक्॥६॥अभूद्भूपितशुभाप्यर्हद्भक्तिविभूषिता। विवेकिनी विनीता च तस्य नन्देति नन्दिनी॥७॥सतीशतशिरोमाल्यमियं बाल्यविलङ्घिनी। वरावलोकिनं तातं निरातङ्कतयावदत् ॥ ८ ॥ निरञ्जनं दशोन्मुक्तं निःस्नेहध्यमन्वहम्। धत्ते विकम्पं दीपं यः परिणेता ममास्तु सः ॥ ९ ॥ इति तस्या मनः श्रेष्ठी वरेष्वनुदिनं दिशन्। अस्याः काभिग्रहः पूर्य इत्यार्तश्चिन्तयाजनि ॥ १० ॥ नागिलः कान्तकायस्तु कितवो द्यूतैर्वनैः तुष्टं यक्षं विरूपाक्षं वनेऽभ्यार्थयताग्रहात् ॥११॥ नन्दयोक्तो यथा दीपस्त्वं तथा भव मद्गृहे। इति यक्षेण

द्रव्येऽर्थे स गतो श्रेष्ठिनोऽन्तिके ॥१२॥ कितवाय दरिद्राय नन्दिनीं स्वां ददामि मे । अभिग्रहमहं तस्या हन्त पूरयितुं
क्षमः ॥१३॥ यादृक्तादृग्भव त्वं भोः पूरिताभिग्रहो यदि । तत्ते ददाम्यहं पुत्रीं गङ्गामिव पयोधये ॥१४॥ तर्हि मद्गृ-
हमागत्य दीपस्तादृग्विलोक्यताम् । इत्युक्ते तेन स श्रेष्ठी सकुटुम्बस्तथाकरोत ॥१५॥दारिद्र्योपद्रुतेऽप्यस्य गृहे तादृशमेव
मः । दीपं पश्यन्सुतोद्वाहसोत्साहः प्राप संमदम् ॥१६॥ तादृग्दीपसमालोककौतुकोत्तानलोचनः जनोऽजनिष्ट नन्दा तु
निरानन्दाभवत्तदा ॥१७॥ विभवैर्भवनं तस्य विभूष्याथ वणिग्वरः । उत्सवोत्संगितपुरः पुत्रीं तेन व्यवाहयत् ॥१८॥
परिणीयापि तां तन्वीं विवेकामृतदीर्घिकाम् । द्यूतान्न्यवतर्त न स व्यसनं कस्य सुत्यजम् ॥ १९ ॥ अहारयदयं वित्तं
द्यूतकारो यथा यथा । अपूरयत स श्रेष्ठी पुत्रीप्रेम्णा तथा तथा ॥२०॥ हारयित्वापि वित्तानि रंत्वापि वहिरङ्गनाः । गृहं
प्राप्तः स सानन्दं नन्दया पर्यचर्यत ॥ २१ ॥ अचिन्तयदिदं चैष नाहमस्या ध्रुवं प्रियः । यदित्थमपराधेऽपि मयि रोषं
तनोति न ॥२२॥ सोन्यदा हारितत्रस्तः कितवेभ्यो वनेऽविशत् । दृष्ट्वात्र ज्ञानिनं साधुं पप्रच्छ रचितांजलिः ॥२३॥
किं मा शुभस्वभावापि धत्ते चित्ते न मां प्रिया । इति पृष्टेऽस्य योगत्वं ज्ञात्वा ज्ञानी मुनिर्जगौ ॥२४॥ सा विवेकवती
कान्तमीच्छन्ती विवेकिनम् । विवेकं तद्गुणं व्याख्यात्तादृग्दीपापदेशतः॥२५॥निगद्यतेऽञ्जनं माया नवतत्त्वस्थितिर्दशा।
स्नेहत्यागः प्रेमभङ्गः कम्पः सम्यक्त्वखण्डनम्॥२६॥तैर्विमुक्तं विवेकं यो धत्तेऽस्तु स पतिर्मम । इति दीपच्छलादाख्यत्पृष्टा
नार्थ तु केनचित् ॥ २७ ॥ निरंजनं दशोन्मुक्तमस्नेहव्ययमन्वहम् । विकम्पं दीपमेव त्वं कृतवानद्भुतं गृहे ॥ २८ ॥
तादृशं वीक्ष्य सा दीपं सती मनोजरा मती । ह्रिया मौनवती व्यूहे भवताप्यविवेकिना॥२९॥सतीति परिणेतुस्ते हृष्टि

स्थाने न हृष्यति। अविवेकीति सा चित्ते न धत्ते त्वां विवेकिनी॥३०॥साध्व्यादिष्टं विवेकं स स्वीचक्रेऽथ विशेषतः। व्रतं स्वदारसंतोषं जगृहे स्नेहपुष्टिदम् ॥३१॥ मुदा गत्वा गृहे स्नात्वा पूजयित्वा जिनाधिपम्। दत्त्वा दानं सुपात्रेभ्यो बुभुजेऽसौ यथाविधि ॥३२॥ विवेकिनमिवालोक्य मुदा कान्तमथावदत्। नन्दा मन्दाकिनीनीरशुचिना वचनेन तम् ॥३३॥ जिनेन्दुसेवया शीलसलिलव्यक्तशिक्षया। अद्य मे फलितं नाथ यद्दृष्टोऽसि विवेकवान् ॥ ३४ ॥ नागिलोऽपि जगौ तन्वि यन्मुक्तया व्यसनं मया। विवेकः स्वीकृतस्तत्र गुर्वादेशोऽस्ति कारणम् ॥३५॥ ततः प्रभृति सद्धर्मशीलप्रेमगुणैर्दृढम्। त्रिधा स्यूते तयोश्चित्ते भेजतुर्भृशमेकताम्॥३६॥अनन्यरूपयोर्धर्मध्यानाधीनधियोस्तयोः। आधिमुक्तहृदो कामं कायकान्तिरवर्धत ॥३७॥

कदाचिदुत्सवाकृष्टा नन्दा पितृगृहे ययौ। सुप्तः कुट्टिमकोऽप्यग्रे नागिलश्चन्द्रदत्तदृक्॥३८॥व्योम्नि विद्याधरी कापि यान्ती प्रियवियोगिनी। तद्रूपमोहतः कामरोहतः प्राप्य तं जगौ ॥ ३९ ॥ कामानलशिखाग्रस्ता प्राप्तास्मि शरणं तव। स्वामिँल्लावण्यपाथोधे मां मज्जय भुजोर्मिषु॥४०॥प्रियास्मि हंसराजस्य विद्याधरशिरोमणेः। तनश्चित्तं त्वयाकर्षि गीतेनेव कवित्वतः ॥ ४१ ॥ चण्डस्य खेचरपतेः सुता लीलावतीत्यहम्। त्वयादृता भविष्यामि सत्यं लीलावती पुनः ॥ ४२ ॥ नाङ्गीकरोषि चेत्तन्मां मृत्युरङ्गीकरिष्यति। तद्भविष्यसि धर्मज्ञ किं न स्त्रीघातपातकी॥४३॥रहस्यं वेद्मि विद्यानां कामिनुश्च पितुश्च तत्। तौ जित्वा तेन तत्स्वाम्यं तव दास्यामि मां भज॥४४॥मान्यथा मद्वचः कार्षीरित्युक्त्वासौ कुरङ्गदृक्। कम्पमाना क्रमौ तस्य मूर्ध्ना स्प्रष्टुमधावत ॥४५॥ मा भूत्परस्त्रीस्पर्शोऽपि ममेत्याशु स नागिलः। तनश्चकर्ष चरणौ

दह्यमानाचिताग्निना॥४६॥क्रुद्धाथ व्योम्नि तप्तायोगोलं लोलं विकुर्व्य सा । भज मामन्यथानेन भस्मयामीत्युवाच तम् ॥ ४७ ॥ अलुभ्यतो लोभगाथाद्भीतिस्थानादबिभ्यतः । सूत्कारी स ज्वलद्गोलस्तस्याथो मौलयेऽपतत् ॥ ४८ ॥ दग्धो दग्धोऽयमित्यन्तर्पायन्त्यां खेचरस्त्रियाम् । स सस्मार नमस्कारं विलीनश्च विपच्चयः ॥४९॥ अथ प्रापदद्दृश्यत्वं प्रपाटोपेन खेचरी । नागिलोऽभून्नमस्कारप्रभावोत्पुलकः पुनः ॥४५॥ न रतिः पितृगेहेऽपि त्वां विनेत्यादिवादिनी । चेटिकोद्घाटितद्वारा तदा नन्दा समाययौ॥५१॥आकारेण गिरा गत्या तां नन्दां स विदन्नपि । खेचरीविप्लवाशङ्की संकीर्णस्थोऽब्रवीत्तः ॥५२॥ अरविन्दाक्षि नन्दासि यदि तूर्णं तदेहि माम् । अन्यासि यदि तद्धर्मः स्वाम्यस्तु स्खलनं तव ॥५३॥ ततः स्थितस्वरूपैव खेचरी सा स्खलद्गतिः । तद्वृत्तविस्मयस्तब्धमूर्तिरेवाग्रतः स्थिता॥५४॥स तत्तत्कपटं वीक्ष्य कपटान्तरशाङ्कितः । कृतलोचः स्वयं भेजे शीलभङ्गभयाद्व्रतम्॥५५॥दत्तं शासनदेव्याथ यतिवेषं स धारयन् । तत्प्रदीपपुरोभागमागत्येदमभाषत॥५६॥आराध्य नन्दालोभेन नीतोऽस्यद्भुतदीपताम् । अयि यक्ष विरूपाक्ष कृतकृत्योऽस्मि गम्यताम् ॥५७॥ दीपतोऽप्यथ भापाभृद्भ्यो यावद्वं भवान् । रवेरिव न मे भाभिः स्पर्शदोषः प्रभो भवेत् ॥५८॥ अथ तादृग्महाशीलप्रीतया स्फीतविस्मया । विद्याधर्या प्रतिपद् क्रियमाणप्रभावनः॥५९॥तथाविधकथाबोधवर्धमानप्रमोदया । प्रत्याख्यानगलत्पापकन्दया नन्दयान्वितः॥६०॥भानूदयेऽप्यविभ्रष्टभासा दीपेन भासुरः । साश्चर्यमेष लोकेनालोक्यमानो गुरुं ययौ ॥ ६१ ॥ त्रिभिर्विशेषकम् ॥ व्रतं नन्दायुतः प्राप्य विधिवद्गुरुसंगतः । विजहार महारण्याग्रामपुरादिषु ॥६२॥ निशास्वपि प्रदीपस्य तस्योद्योते ततः पठन् । ज्ञातज्ञातव्यपूरोऽप्यमल्पैरेव दिनैरभूत् ॥६३॥ बद्धायुः संयमात्पूर्वं

मृत्वासौ स्नेहवांस्तया। हरिवर्षे युगलतां ययौ कल्पतरोस्तले॥६४॥तद्द्वयं भाग्यशेषेण भुक्त्वा भोगोत्सवं दिवः। क्षेत्रे महाविदेहाख्ये मर्त्यीभूयाप निर्वृतिम् ॥ ६५ ॥ अतो नागिलनन्दावदानन्दाद्वैततत्परैः। धार्यं तुर्यव्रतं दक्षैर्धर्मवृक्षैककर्षणम् ॥ ६६ ॥

इति चतुर्थव्रतविचारे नागिलकथा ॥

ईदृक्चतुर्थव्रतीरूपनिरूपणसुदर्पणम्। पञ्चमं तु व्रतं धीराः कलयन्त्वतिनिर्मलम् ॥६७॥ असंतोषादिदोषाहिमोहहालाहलामृतम्। परिग्रहस्य मानं यत् तत्पञ्चममणुव्रतम् ॥६८॥ क्रूरात्मसंसृतिवधूचकितस्य मनीषिणः। मुक्तिसीमन्तिनीमेलसंकेतस्थानलक्षणम् ॥६९॥ परिग्रहप्रमाणाख्यव्रतकल्पद्रुरद्भुतः। निषिध्यमानमप्यर्थं दद्याद्विद्यापतेरिव॥७०॥ युग्मम्॥

श्राद्धाः शृणुत तद्वृत्तमभूद्दृष्टवैभवः। धनी विद्यापतिरिति ख्यातः पोतनपत्तने॥७१॥सर्वज्ञसेवकोऽप्येष निजसद्मश्रियामपि। सख्यातिं ज्ञातवानैव ज्योतिषी ज्योतिषामिव॥७२॥तस्याजनिष्ट गृहिणी स्तवनीयगुणोदया। जिनेशशासनाम्भोजभृङ्गी शृङ्गारसुंदरी॥७३॥सप्तक्षेत्र्यां वपन्वित्तमनन्तगुणलाभधीः। प्रयत्नेन यथाकालं वृषपोषं चकार सः॥७४॥ धनमर्जयतो नित्यमृणं तर्जयतः सताम्। धर्मं कल्पयतः काममयमल्पयतः परम्॥७५॥ सुखोर्मिमग्नमेवोच्चैरक्षां गमयतो गणम्। स्वप्ने कापि कदापि स्त्री पुरस्तस्येदमभ्यधात्॥७६॥युग्मम्॥श्रीरहं त्वद्गुणश्रेणिवशेति त्वां ब्रवीम्यदः। कृष्टा दैवेन यास्यामि त्वद्गृहाद्दशमेऽहनि॥७७॥अथोन्निद्रं दरिद्रोऽहं भविष्यामीति दुःखितम्। तमुवाच करन्यस्तशृङ्गारशृङ्गारसुन्दरी ॥७८॥ रवे रथ इव ध्वान्तं तव मालिन्यमानने। अश्रुतादृष्टपूर्वं यत्तत्किमद्य विलोक्यते ॥७९॥ त्वया कृता-

स्मि स्नेहेन सुखसर्वस्वभागिनी । दुःखभागमदानेऽस्य किं मां वञ्चयसि प्रभो॥८०॥पत्या स्वप्नस्वरूपेऽथ कथिते प्रथित-
स्मिना । सा पुनर्भारतीं भेजे विवेकाद्वैतसारणीम् ॥ ८१ ॥ निर्वाणमार्गसंचारचरणस्खलशृङ्खला । हृच्छल्यं श्रीः सतां
भोगफलकर्मचिरस्थिरा ॥८२॥ मदयेन्मदिरेव श्रीर्यदि सा याति यातु तत् । विवेक एक एव त्वां मा मुञ्चन्मदमर्दनः
॥८३॥ पात्रदानं फलं लक्ष्म्यास्तदगृहीतं बहु त्वया । फलं संप्रति दौःस्थ्यस्य तपो ग्राह्यं,ततोऽधिकम् ॥८४॥ मुक्तिमार्ग-
गृनिर्लक्ष्मीर्भाग्यैस्ते भङ्गमेति चेत् । तत्किं हर्षपदे नाथ दुःखं भजसि निर्भरम्॥८५॥गमिष्यति कथं वा श्रीर्दासेरी दशमे-
ऽह्नि । त्यागशौच सती सप्तक्षेत्र्यामवैव रोप्यताम्॥८६॥परिग्रहप्रमाणाख्यमङ्गीकृत्य व्रतं ततः । स्थीयते नीयते चैष कालः
संतोषपोषकः ॥८७॥ इति मिथोक्तिभिः प्रीतः प्रातः कृत्यपुरःसरम् । सप्तक्षेत्र्यां क्षणादेष निःशेषमवपद्धनम्॥८८॥ ततः
स्थापितदेहोपयोगिस्वल्पपरिग्रहः । मध्यंदिने जिनाधीशमभ्यर्च्येदं बभाण सः॥८९॥शृङ्गारसुन्दरी भार्या शय्यैका वसने
इमे । एकं पात्रमहर्भोज्यमात्रश्चाहारसंग्रहः॥९०॥एकविंशं यमन्यार्थमन्यदप्यात्महेतुकम् । अस्तु मे वस्तु तीर्थेशसेवार्ह
त्वस्तु यदपि ॥९१॥युग्मम्॥ परिग्रहं प्रमायेति प्रमोदविशदाशयः । स निनाय दिनं धीमान्धर्मध्यानधुरन्धरः ॥९२॥
धनं विनार्थिनामास्यं दर्शनीयं प्रगे कथम् । नक्तं सुप्ते जने युक्ता, देशान्तरगतिस्ततः ॥ ९३ ॥ इति शृङ्गारसुन्दर्या
सममालोच्य सुप्तवान् । निशीथेऽभ्युत्थितश्चायं यावद्देशान्तरोन्मुखः ॥ ९४ ॥ तावत्तावद्भिरेव श्रीपूरैरापूर्णमालयम् ।
आलोक्य विस्मयस्मेरचित्तश्चित्तमियां जगौ॥९५॥त्रिभिर्विशेषकम्॥ दशमेऽह्नि दैवेन कृष्यमाणैव यास्यति । नेदानीं
दीप्यमानापि श्रीरियं याति मद्गृहात् ॥ ९६ ॥ न स्याददानं दानं वा स्थैर्यास्थैर्यकृते श्रियः । मुधा कृपणतां मूढा

रूढामात्मनि तन्वते ॥ ९७ ॥ न याति दीयमानापि श्रीश्चेदीयत एव तत् । तिष्ठत्यदीयमानापि नो चेद्दीयत एव तत् ॥ ९८ ॥ इति विस्मितयोर्वार्तारसोर्मिप्लुतयोस्तयोः । आलिलिङ्ग दिवं पिङ्गः क्षपावल्लिदवो रविः ॥ ९९ ॥ तथैवाथ श्रियं दत्त्वा कृत्वा कर्म दिनोचितम् । सुष्वाप पुण्यपूर्णोऽयं प्रतिज्ञातपरिग्रहः ॥५००॥ इत्थमेष नवाहानि हानिहीनां श्रियं ददत् । कल्पद्रुमाधिदेवीनामपि श्लाघ्यत्वमागतः ॥१॥ प्राच्युपुण्यपयःपङ्को मुक्तिमार्गस्य दूषकः । शोषमेष्यति मे दिष्ट्या श्रीपूरः श्वस्तने दिने ॥ २ ॥ इति प्रीतमना नक्तं सुप्तः स्वप्ने श्रिया रयात् । आनन्दसुन्दरदृशः स बभाषे शुभाशयः ॥ ३ ॥ युग्मम् ॥ तद्बलाद्दुर्बलं दैवं कुर्वद्भिर्गर्वगर्भितैः । तादृग्भिर्दानसुकृतैः कृतैवाहं त्वयि स्थिरा ॥ ४ ॥ अलर्थपुण्यपापानामिहैव फलमश्नुते । इति सूक्तं त्वयाकारि मतिसार यथातथम् ॥ ५ ॥ कदाचन न मुञ्चामि तदहं सदनं तव । यथेच्छं भाग्यभङ्गीभिरङ्गीकृत्य भुङ्क्ष्व माम् ॥६॥ विनिद्रः कथयित्वाथ निशीथे स्वप्नसत्कथाम् । स प्रियाग्रे प्रतिज्ञैकलीलापदमिदं जगौ ॥७॥ श्रीदानव्यसनेनैव भोगमात्रफलेन हा । जन्म यास्यति नौ मुक्तिफलेन तपसा विना ॥ ८ ॥ कदापि लोभलीलाभिर्लोलित लोलुभं मनः । पञ्चमव्रतपञ्चत्वप्रपञ्चमपि संसृजेत् ॥ ९ ॥ पूरितं वित्तपूरेण तत्परित्यज्य मन्दिरम् कचिद्देशान्तरे यावद्गच्छावः श्रीमहाग्रहात् ॥१०॥ इति निश्चित्य स तया सहागच्छद्बहिर्गृहात् । श्रीकेलिकोमलाम्भक्तं कमलादिव षट्पदः ॥ ११ ॥ करण्डमण्डिनीं बिभ्रत्तीर्थेशप्रतिमामसौ । स्मरन्पञ्चनमस्कारान्नगरद्वारमास्थितः ॥१२॥ मृते शूलादपुत्रेऽथ शूराख्ये तत्पुरीपतौ । मन्त्रिभिः कल्पितो दिव्यहस्ती तत्रापतत्तदा ॥ १३ ॥ तं पुण्यकलशाम्भोभिरभिषिच्य प्रियान्वितम् । पृष्टमारोपयामास करेण करिणां वरः ॥१४॥ निन्ये महोत्सवेनाथ करीश्वरशिरःस्थितः ।

राजमीभाग हृष्यन्निरहृष्यन् सन्निवैरसौ॥१५॥श्रीपद्मान्निःसृतं राज्यमहापङ्कप्रपातिनम्। स रचं मेनेऽम्बुदोन्मुक्तं राहुग्रस्तमिवोडुपम् ॥१६॥ भद्रपीठाश्रये तस्मिन्नभिषेकं निषेधति। विलक्षे मन्त्रिलक्षेऽथ दिव्यभूर्दिव्यभारती ॥१७॥ अद्यापि विद्यते भूरि कर्म भोगफलं तव। तदङ्गीकृत्य राज्यश्रीरुत्संगीकुरु संमदत् ॥ १८ ॥ स्वभाग्यदेवतावाचमित्याकर्ण्य स वर्णयीः। सिंहासने जिनेशस्य प्रतिमां विन्यधीविशात्॥१९॥धर्मज्ञैर्मन्त्रिभिः प्रीतैः पादपीठोपवेशनः। जिनदास्याभिषेकं स स्वस्मिन्धीमानकारयत् ॥२०॥ सुधीः संधारयन्मुक्तमात्रं स्वस्मै परिग्रहम्। समस्तं जिननामाङ्कं वस्तुचक्रमचीकरत् ॥ २१ ॥ नित्यं यात्रोत्सवं तत्र स पवित्रमनाः प्रभोः। प्रभूतवित्तव्ययतः कारयामास कृत्यवित् ॥ २२ ॥ भूरिव्ययकृते तस्मिन्नगृह्णनि करं जनात्। तद्भाग्यदेवतावर्षन्नित्यं रत्नैर्नृपौकसि ॥२३॥ धर्माधीनोऽयमित्येतं जेतुं जातोद्यमा नृपाः। जिनाधिष्ठायिभिर्यक्षै रोगभूताय नाशिताः॥२४॥विकटं कटकारम्भं शक्तिस्तम्भं च विद्विषाम्। ज्ञात्वाथ हर्षहृद्यात्मा विद्यापतिरचिन्तयत् ॥२५॥ अहो ये शक्रविक्रान्तिभाजस्तेऽप्यरिभूभुजः। धर्मप्रभावाद्दुःकीर्तिनिलयं विलयं ययुः॥२६॥ मां धर्मः कलयन्सेवमानमल्पपरिग्रहम्। महापरिग्रहाञ्शत्रूञ्जेतुं भेजे सहायताम्॥२७॥तदहं यद्यमुं सेवे त्यक्ताशेषपरिग्रहः। तदन्तरारिभिर्ह्यपि भयलयमुपक्रमी॥२८॥इति संचिन्त्य शृङ्गारसुन्दरीकुक्षिसंभवम्। सुतं शृङ्गारसेनं स्वे पदे विद्यापतिर्न्यधात् ॥ २९ ॥ पुरः संयमसूरीणामुरीकृत्य व्रतं स्वयम्। कल्याणमयमात्मानं शुद्धं चक्रे तपोग्निना ॥ ३० ॥ पूरितायुरिग्राय यां विद्यापतियतिस्ततः। मर्त्यामर्त्यभवैर्भेजे पञ्चभिः परमं पदम्॥३१॥ तद्विद्यापतिदृष्टान्तविद्यानिश्चलचेतनैः। माल्यं भव्यजनैर्धर्मस्पृहैर्मितपरिग्रहैः ॥३२॥

इति परिग्रहप्रमाणव्रतविचारे विद्यापतिकथा ॥

दशदिक्स्खलसंचारे सीमानुल्लङ्घनं पुनः । प्रथमं प्रथयन्ते दिग्विरत्याख्यं गुणव्रतम् ॥३३॥ पापद्विपद्रुत्थानपातसंवर्तगर्तिका । इदं भाति व्रतं धर्मधात्रीशकनकासनम् ॥३४॥ उच्चैर्धर्मप्रसूनस्य शाखी दिग्विरतिव्रतम् । नृणां यदधिरूढानां न पापश्वापदाद्भयम् ॥ ३५ ॥ गतौ संकोचयत्येव यः स्वं दिग्विरतिव्रती । संसारलङ्घनोत्तालफालारम्भः स सिंहवत् ॥ ३६ ॥

तथाहि द्वङ्गप्रस्तारेष्वस्ति सर्वगुरुः पुरी । वासन्तीति श्रुत्वा चित्रमवक्रगुणपूरिता ॥३७॥ कीर्तिपाल इति क्षोणिपालस्तस्यामजायत । यत्कीर्तिकन्याकेलीषु वियदङ्कोऽपि संकटः ॥ ३८ ॥ रूपश्रीस्पर्शसंलुब्धैरिवाशेषैर्वृतो गुणैः । ननन्द नन्दनः श्रीमान्भीमाख्यस्तस्य भूपतेः ॥ ३९ ॥ तस्मात्पुत्रादपि स्वेभ्यः प्राणेभ्योऽप्यतिवल्लभः । तत्र मित्रं महीभर्तुः श्रेष्ठीन्दुः सिंह इत्यभूत् ॥४०॥ जिनभक्तिजिनमतज्ञानं तद्धर्मनिर्मितिः । इति सारमलङ्कारत्रयं शश्वद्दधार सः ॥४१॥ तदीयवदनन्यस्तनेत्रं वेत्रभृतां वरः । कदाप्युदारसदसं तं महीशं व्यजिज्ञपत् ॥४२॥ देव दिव्याकृतिर्द्वारि कोऽप्यस्ति नरपुङ्गवः । चक्षुर्भवन्मुखाम्भोजे भ्रमरीकर्तुमुत्सुकः ॥४३॥ अथैष वेत्रभृद्भूपभ्रूपल्लवकसंज्ञया । आशु प्रवेशयामास तं पुमांसं सभाभुवि ॥४४॥ कृती कृतनमस्कारः संनिविष्टोऽथ विष्टरे । वचःसुधाभिः स्नपयामास भूवासवश्रवः ॥४५॥ जानासि जगतीनाथ विरोधिक्ष्माधकृन्महाः । श्रीनागचन्द्र इत्यस्ति पुरे नागपुरे नृपः ॥४६॥ तस्य प्रियास्ति प्रस्ताववाच्या सुरवधूक्तिषु । मकरध्वजकीरैकपञ्जरी रत्नमञ्जरी ॥४७॥ कामभूभर्तुरस्तित्वमुच्चैरस्ति तयोः सुता । विश्रुता गुणमालेति

गुणमाहेव देहिनी॥४८॥तदत्रसंगता लक्ष्मीः साक्षाल्लक्ष्मीमुपाहसत्। स्फुरदम्भोजकुम्भीन्द्रकुम्भद्वन्द्वेन्दुवासिनीम्॥४९॥
तारुण्यचारवे तस्यै वरान्वेषणतत्पराधिपः। त्वत्सुतं निश्चिकायैव प्रभायै भास्करं यथा ॥५०॥ इत्यर्थमभ्यर्थयितुं त्वयि
मामीश मे प्रभुः। विश्वासभाजनीभूतं मुख्यदूतं नियुक्तवान्॥५१॥तत्प्रभो सत्प्रभोल्लासनिर्विलासमनोभुवे । रतिनिर्जि-
गिनीं कामं तामंगीकुरु सूनवे॥५२॥तं भूपमुत्तमाभोगात्तां कन्यां वरलाभतः। दौत्यसाफल्यतो मां च स्वामिन्ननुगृहाण
तत् ॥५३॥ इदं वादिनि दूतेऽस्मिन्नानन्दी मेदिनीपतिः। सिंहश्रेष्ठिमुखाम्भोजे न्यस्तनेत्रयुगो जगौ॥५४॥नावयोरन्तरं
किंचिदमुमादाय नन्दनम्। व्रज नागपुरं यत्नो संबन्धोऽयं विधीयताम्॥५५॥अनर्थदण्डात्दुर्दण्डादतः स चकितः कृती।
किंचिन्नम्रमुखः सिंहो नोत्तरं नृपतेर्ददौ ॥ ५६ ॥ किंचित्कोपकडाराक्षस्ततः क्ष्मादयितोऽवदत्। संबन्धोऽयं न किं
मधुरस्ते मित्र नोत्तरम् ॥ ५७ ॥ अथ पृथ्वीपतिं कोपणाङ्कमवलोकयन्। वाक्कलां कलयामास सिंहः पीयूषपेशलाम्
॥ ५८ ॥ न योजनशतादूर्ध्वं व्रजामीति व्रतं मम। अतस्तु योजनशतं साग्रं नागपुरं पुरम् ॥ ५९ ॥ तदहं न विवाहेऽ-
स्मिन्व्रजामि व्रतभङ्गभीः। एवंविधेषु कार्येषु दृश्यन्ते न च मादृशाः ॥६०॥ इत्युक्तिघृतहोमेन ज्वलत्कोपमहानलः।
तज्ज्वालाजालसंतप्तामिव भूपोऽभजद्गिरम् ॥ ६१ ॥ स्वाकृतं तु यत्र मे युक्तं मया तत्र निदिश्यसे। कार्यं तदप्यदेश्यं ते
तन्महामहिमास्ति भोः॥६२॥न यासि योजनशतादूर्ध्वमित्यस्ति ते व्रतम्। सहस्रयोजनेभ्योऽपि त्वां मोक्ष्याम्यौष्ट्रिकैस्ततः
॥ ६३ ॥ सिंहः श्रुत्वेदमथ कोपावहित्थविहितस्मितः। ऊचेऽग्रतो नृणां पत्युः प्रत्युत्पन्नमतिः कृती ॥ ६४ ॥ स्वामिन्भ्रम-
त्समानन्ते विरहं निरहंकृतिः। अकार्षमुत्तराप्येवं देवादेशः शिरोमणिः॥६५॥नृपः प्रीतोऽथ तत्राप्य विवाहाय व्यहारयत्।

महासैन्यमहामन्त्रिमहाभटयुतं सुतम्॥६६॥पृथग्भूतमिवात्मानं सुहृदं हृदयप्रियम् । नृसिंहः सिंहमकरोत्तत्र सर्वक्रियागुरुम्॥६७॥कृतयात्रस्ततः सिंहो गुरुसंवेगवाग्भरैः । अत्रोटयत्कुमारस्य संसारावासवासनाम् ॥६८॥ व्यक्तमुक्तिवधूलोभः शोभमानाः श्रियोऽथ ताः । तृणवद्गणयामास महीवासवनन्दनः ॥६९॥ कृतव्याजोत्तरः श्रेष्ठी दिग्विरामव्रतस्थितः । न योजनशतादूर्ध्वं स प्रयाणमकारयत्॥७०॥यात्राविरामायातेषु पञ्चषेषु दिनेष्वथ । कुमारमूचुः सचिवा रहसि प्रहसद्भिरः ॥७१॥ यात्रां कुत्रापि सिंहश्रेष्ठिपेधति विधिच्छलात् । तद्बलादपि कुर्वन्तो न यूयमपराधिनः॥७२॥इत्यस्मानशिषद्गुप्तं प्रयाणसमये नृप । तद्बुद्ध्वाप्यधुना सिंहं यामो नागपुरं न किम्॥७३॥युग्मम्॥ इत्यात्तवाचः सचिवानाचष्ट नृपनन्दनः । श्वः कर्तव्यमिदं यात्रा नाद्य निर्णीयते यदि ॥७४॥ अथैकान्ते महीकान्तजन्मा तन्मानसप्रियम् । वचोऽवोचत सिंहस्य पुरो धर्मकलागुरोः ।७५॥ धर्माम्बुधिसुधाधामा सिंहनामा महामतिः । ततः कुमारमारब्धसंसारशमनोऽभ्यधात्॥७६॥ नेदं मेऽङ्गमपीत्युक्त्वा भूतले प्रतिलेखिते । पतित्वा पादप इव प्रस्थिरावश्यव्रजः॥७७॥शुचौ कचिद्वनोद्देशे पादपोपगमाभिधम् । ग्रहीष्यामि व्रतं तत्ते वध्वा नेष्यन्ति किं मम॥७८॥युग्मम्॥ इत्युक्त्वा सिंहवर्तिमहः काननं निशि जग्मिवान् । त्वमेव मे गतिरिति क्ष्मापजोऽप्यनु तं ययौ॥७९॥निशान्ते तावपश्यन्तः शयनादिषु मन्त्रिणः । पदश्रेण्यनुसारेण खुर्वं भूरितरां ययुः ॥ ८० ॥ तौ गृहीतपरिव्रज्यौ पादपोपगमस्थितौ । निलव्योमभ्रमश्रान्तौ सुप्तौ सूर्योडुपाविव ॥ ८१ ॥ कचिच्छैलतले वीक्ष्य वैलक्ष्यकलुषाननाः । मन्त्रिः प्रणिपत्योचुश्चटूचयमयं वचः ॥ ८२ ॥ युग्मम्॥ क्षम्यतामपराधो नः सकद्रूक्षिपद्रकृतः । उत्तिष्ठतं द्रुतं यामः स्वामिनौ नागपत्तनम् ॥८३॥ मत्वा वृत्तमिदं भूपः कुप्यन्यन्त्रे तिलानिव ।

कृपाद्दयामतनूनसमान्मान्यमानीलयिष्यति॥८४॥ नरकूपाब्धी कृपां कृत्वा पश्यतं जल्पतं च नः। दृग्भिः प्रसादसान्द्राभिः स्मितधौताधरैर्मुखैः ॥८५॥ व्यर्थीभूयाथ सचिवैरित्यादिचटुवादिभिः। स्वरूपमाशु भूपस्तज्ज्ञापितः सत्वरैश्वरैः ॥८६॥ यद्रूप्या चिवाळस्तनुजः मित्रो वध्यस्तु वैरिवत्। इति कुप्यन्नृपोऽप्यागाद्वाहनैर्वेगवत्तरैः ॥८७॥ ईदृग्विरुद्धबुद्धिस्तौ स ददर्श महामुनी। सेव्यमानपदौ व्याघ्रद्वीपिसिंहादिजन्तुभिः ॥ ८८ ॥ प्रभाविनाविमौ शक्यौ न पराभवितुं बलात्। मत्वैव भाव्याचिन्तन्तध्यायन्राजा जगाम तौ ॥८९॥ श्वापदैर्दत्तमार्गं तं मार्गन्तं वीक्षणान्यपि। नमन्तं चटुमन्तं च नैक्षांचक्रतुरुष्यम् ॥९०॥ तौ तु मासोपवासान्ते स्तूयमानौ सुरासुरैः। शुद्धध्यानवशीभूतां भेजाते मुक्तिवल्लभाम्॥९१॥ न योजनशतादूर्ध्वं यामीति तव निश्चयः। असंख्यैर्योजनैर्मित्र मां मुक्त्वा किमगाः शिवम्॥९२॥इति क्रन्दन्नृपः सिंहनाम्नो मित्रस्य विग्रहम्। पुत्रस्य चाग्नौ चिक्षेप स्वं च शोकमहानले ॥९३॥ तयोः सत्त्वातिरेकोक्त्या विबुधैर्बोधितस्ततः। धर्मकर्मठधीः प्राप स्वपुरं भूपुरन्दरः ॥ ९४ ॥ वरं तत्याज यः प्राणान्न पुनः स्वीकृतं व्रतम्। स सिंह इव सेवध्वं जना दिग्विरतौ रतिम् ॥ ९५ ॥

॥ इति दिग्विरतिविचारे सिंहकथा ॥

यद्भोग्यमुपभोग्यं च पारिमित्येन गृह्यते। भोगोपभोगोगमानाख्यं तद्द्वितीयं गुणव्रतम्॥९६॥सुकृतश्रीनिवासैकसरोजं सप्तमं व्रतम्। नियमत्र परत्रापि सुरभीकुरुते मतः॥९७॥कृती मितीकृताहारः सप्तमव्रतलीलया। मुच्यते संचितेनापि कर्मरोगेण धर्मवत् ॥ ९८ ॥

तथाहि सिद्ध साहित्यमिव विद्यासु भासुरम् । नगरीषु गरुश्रीकमस्ति श्रीकमलं पुरम् ॥९९॥ तत्राजनिष्ट राजेन्दुः सत्याख्यो राजशेखरः । कालरात्रेरिवादर्शो यदसिर्ददृशेऽरिभिः॥६००॥सकलैः स कलापात्रैः क्षात्रैरिव गुणैः श्रितः । कस्य कस्य नमस्यत्वं भूभुजङ्गो न जग्मिवान् ॥ १ ॥ संभावि भुवि दुर्भिक्षं देव द्वादशवार्षिकम् । इत्येकदा पुरस्तस्य ज्योतिःशास्त्रविदोऽवदन् ॥ २ ॥ सर्वथा नान्यथादृष्टगिरामेषां मनीषिणाम् । चकम्पे वचसा तेन स वातेन तृणं यथा ॥ ३ ॥ रौप्यकाञ्चनरत्नादिसर्वस्वव्ययतस्ततः । कणानां च तृणानां च स चक्रे संग्रहं बहुम् ॥ ४ ॥ अथान्नसंग्रहव्यग्रे समग्रेऽपि जनेऽभितः । विवेश मध्ये देशस्य कापि दुर्भिक्षवर्णिका ॥५॥ अन्नसंग्रहविक्रीतसर्वालंकरणो जनः । फाल्गुणच्युतपत्रालिशालजालवदाबभौ ॥ ६ ॥ निर्धान्या निर्धनाः काश्चिद्व्रजिष्यन्ति प्रजाः क मे । शुचेत्यचिन्तयद्राजा प्राजापत्येन लज्जितः ॥ ७ ॥ इति नित्यं ज्वलच्चिन्तातप्तस्योर्वीशितुर्मुदे । आषाढस्याद्य एवाह्नि पौरस्त्यस्वनो ववौ॥८॥ अथांकुर इव प्राच्यां सुभिक्षफलशाखिनः । अम्बुदस्य लवोऽदर्शि मुदितेन महीभुजा॥९॥श्रीरिवाभ्युदयद्भाग्यभरस्य जलभृल्लवः। अवर्धतातिमात्रं स धात्रीश्वरमुदा समम्॥१०॥अवग्रहग्रहान्विद्युदंगुल्या तर्जयन्निव। बलाकादशनैर्ज्योतिर्विदां वाचो हसन्निव ॥११॥ दर्शनादेव दुर्भिक्षं क्षिपं भुक्त्वेव निर्नदन् । धारामुशलसंघातैः क्ष्माङ्गणमिव खण्डयन् ॥१२॥ अविच्छिन्नजलाकर्षनालयन्त्राभकार्मुकः । स ववर्ष प्रजाहर्षप्रकर्षाश्रुघनं घनः ॥१३॥त्रिभिर्विशेषकम्॥ अन्योन्यकरतालाभिर्ज्योतिषज्ञोपहासकृत् । वृष्ट्यानयैव निष्पङ्कः काल इत्यालपज्जनः ॥१४॥ कृतार्थी पृथिवीं कृत्वा लोकस्तवभयादिव । अब्दोऽथ काप्यगादेष एषैव महतां गतिः ॥१५॥ निवृत्तचिन्तासंतापं ततः क्ष्माप परेऽहनि । एत्य हसनमिलन्नालो वन-

पालो व्यजिज्ञपत् ॥ १६ ॥ त्वदुद्याने चतुर्मासवासमासूत्र्य तस्थुषः । युगन्धरमुनेरद्योत्पेदे केवलमुज्ज्वलम् ॥ १७ ॥ अथारानिकमापूर्य परमैः पारितोषिकैः । आरामाय जगामायममायसुकृतः कृती ॥१८॥ सत्रिः प्रदक्षिणीकृत्य प्रणिपत्य च तं मुनिम् । सद्धर्मदेशनां श्रुत्वा पप्रच्छेति कृताञ्जलिः ॥१९॥ प्रभो ज्योतिर्विदां तेषामवृष्टिविषयं वचः । कथं विघटितं पृच्छामथ स प्राह केवली ॥२०॥ ग्रहयोगेन दुर्भिक्षं भवद्द्वादशवार्षिकम् । कारणेन न येनाभूत्तदमीषामगोचरम् ॥२१॥ पुरे पुरिमताल्लाख्ये नरः प्रवर इत्यभूत् । महारोगैः पराभूतः स पुरापि स्वकर्मतः ॥२२॥ सैष स्वाद्यं रसस्वादविलोलरसनारमः । जग्राह यं यमाहारं विकारमकरोत्स सः ॥२३॥ सोऽथ दध्यौ य आहारः शरीराहितकारकः । प्रत्याख्यानादनाहारफलं किं तस्य नाददे ॥ २४ ॥ शूकासंकोचितदृशो भजन्ति सुदृशो न माम् । ताः प्रत्याख्याय किं साक्षान्न गृह्णे नर्यताफलम् ॥ २५ ॥ इत्युज्ज्वलीकृतमतिर्मतिभाजां मतल्लिका । गुरून्गुणगुरूनेष साक्षीकृत्येदमब्रवीत् ॥ २६ ॥ स्निग्धाम्लमधुरक्षारानाहारान्नाहमाहरे । कटुतिक्तकषायांस्तु शूकान्यूनोदरव्रतः ॥२७॥ यदामक्तान्नरान्मुक्तिरीर्ष्ययेवेक्षतेऽपि न । ताः प्रत्याख्यामि वामाक्षीर्भवाब्धेरधिदेवताः ॥२८॥ इत्याहतं व्रतं सत्त्वविशालः पालयन्नयम् । क्रमेण मुमुचे रोगैरसाध्यं सुकृतस्य किम् ॥२९॥ तदमुञ्चन्व्रतं धीरो नीरोगत्वं गतोऽपि सः । क्रमेणाभूद्विभूतीनां प्रभूतानामपि प्रभुः ॥३०॥ तद्गृहे न्यलसन्दाम्यः स्मरलास्यलसदृशः । स्वर्गवेश्या इव स्वर्गमुन्मुच्याल्पविभूतिकम् ॥३१॥ सत्संयमगुणस्वान्तावष्टम्भयन्त्रितः । नाक्रष्टुं विषयैः शेके तस्येन्द्रियगणः स तैः ॥३२॥ आययौ मार्गकोटीभिर्धनं यस्तस्य नित्यशः । ययौ पात्रद्वयीविस्तरदानमार्गद्वयेण तत् ॥३३॥ अथार्धविग्रहव्यग्रपितृमातृसुतोद्गतम् । एकदा रङ्कदुःप्रेक्षं दुर्भिक्षं समभूद्भुवि ॥३४॥ विलीनं

दानिनां दानैस्तद्दानं ववृधे तदा । ग्रीष्मे सरोऽम्भः शुष्येत स्याद्वृद्धौ चित्तु वारिधिः॥३५॥ दुर्भिक्षभीरुभिर्भेजे स एवैको
जगज्जनैः । सर्वज्ञदिष्टः संसारभीतैर्धर्म इवाभितः॥३६॥ प्रासुकैः पेयपक्वान्नदधिदुग्धघृतादिभिः । स दिगन्तागतान्साधूँ-
ल्लक्षशः प्रत्यलाभयत् ॥३७॥ पितृभ्रातृसुतीकृत्य श्रावकान्स वयःक्रमात् । प्रत्यहं गृह एवोच्चैरसंख्यातानभोजयत् ॥३८॥
इत्यखण्डव्रतः श्रीमान्प्रवरस्तुवरस्तुतिः दानैकव्यसनः कालयोगतस्त्रिदिवं गतः ॥ ३९ ॥ शाश्वतार्हन्महायात्रानित्यनिर्म-
लधर्मधीः । पूर्णायुश्चिन्तयामास स वासवसमः सुरः ॥४०॥ आद्यो युगप्रधानोऽस्ति यः कश्चिद्भुवि तत्सुतः । भूयास
सार्वभौमोऽपि मा भूवं कलुषे कुले॥४१॥ इतश्च चित्रशालाख्ये त्वपुरोपपुरे पुरे । आढ्योऽस्ति शुद्धबुद्धयाख्यो विमलाया
मनःप्रियः॥४२॥ द्वादशव्रतनिर्व्याजपालनोज्ज्वलजीवितः । ईदृग्दुर्भिक्षवाचापि न चक्रे योऽन्नसंग्रहम्॥४३॥ स देवस्तत्प्रिया-
कुक्षिमाप सुस्वप्नसूचितः । साप्यसूत सती पुत्रं पवित्रं ह्यस्तने दिने ॥४४॥ महाभाग्यवतो जन्म तस्य जित्वाशु दुर्ग्र-
हान् । बभञ्ज नत दुर्भिक्षमिदं द्वादशवार्षिकम्॥४५॥ इति श्रुत्वाद्भुतप्रीतिर्नत्वा केवलिनं नृपः । तत्राशु गत्वा तं बाल
भाले न्यस्येदमूचिवान् ॥ ४६॥ दुर्भिक्षमज्जज्जगदुद्धारधीर नमोऽस्तु ते । राजा त्वमेव मे राज्ये तलारक्षोऽस्मि तावकः
॥४७॥ मूर्तिमानिव धर्मोऽयमित्थं दुर्भिक्षभङ्गकृत् । इति तस्याभिधा धर्म इति धात्रीभुजा कृता॥४८॥ चैर्मत्वेदमन्येऽपि
भूभुजः स्वस्वभूमिषु । धर्माज्ञां वर्तयित्वाशु वर्धयामासुरम्बुदान ॥४९॥ वयःकालोचितैश्चित्रैः प्राभृतैः सर्वभूभुजाम् ।
अश्रान्तानन्दसद्मः सोऽर्भकः समवर्धत ॥ ५० ॥ समस्तभूभृतां पुत्र्यः सकलाः कमलेक्षणाः । पतिंवरा स्नमाजग्मुः
समुद्रमिव निम्नगाः॥५१॥ धर्मः समग्रभूगोललोलाज्ञो गुरुभक्तिभाक् । धर्मी कर्माण्यसंचिन्वन्स भोगान्बुभुजेऽद्भुतान्॥५२॥

मुक्तभोगस्ततमो योगबलमुज्ज्वलमाश्रितः । उत्पन्नकेवलज्ञानमहिमा मुक्तिमासवान् ॥५३॥
इति धन्यस्य धर्मस्य भवद्वयनिदर्शनात् । जितसंपत्तिसंपातैः सेव्यतां सप्तमं व्रतम् ॥ ५४ ॥

॥ इति भोगोपभोगव्रतविचारे धर्मनृपकथा ॥

रौद्रार्तधी–शस्त्रदान–पापशिक्षा–प्रमादिताः । अनर्थदण्डस्तत्त्यागः स्यात्तृतीयं गुणव्रतम् ॥५५॥ अनर्थदण्डवीराम-व्रतधीरा महोदयम् । लभन्ते शुभसंभारभासुराः सुरसेनवत् ॥५६॥

तथाहि देवपूजोपचन्धान्धैर्मधुपैर्मुहुः । गीतप्रशस्तिरस्ति श्रीबन्धुरा बन्धुरा पुरी॥५७॥श्रीवीरसेन इत्युग्रवीरसेना-शिरोमणिः । भूत्वैः पवित्रैरस्यामस्त्यामजनि भूधवः॥५८॥अन्तरारिप्रहारेषु धर्मकाण्डाद्भुतौ सुतौ । सुरसेनमहासेनौ तस्याभूतामुभौ शुभा ॥५९॥ उपमानोपमेयत्वमभिधानाभिधेयता । रूपे च साहचर्ये च व्यचार्यत तयोर्जनैः ॥६०॥ दन्तौ सद्वलोकेषु वाह मोहादिमर्दने । चरणौ सच्चरित्रेषु तौ धर्मस्य व्यराजताम्॥६१॥अजायत रसज्ञायामन्येद्युः श्वयथुः पृथुः । अकस्माद्विस्मयकरो महासेनस्य दुःसहः॥६२॥उपशान्त्यै व्यधुर्वैद्या यदौषधमुखैः । ववृधे तेन तेनापि जिह्वा-शोफः स लोभवत् ॥६३॥ औषधं धर्म एवास्य युक्तमित्युक्तयस्ततः । तं वैद्या मुमुचुर्निःस्वं भुजङ्गं गणिका इव ॥६४॥ क्रमेण कुथिता तस्य रसज्ञा राजजन्मनः। मक्षिकाणामनिवारसत्रागारत्वमाययौ॥६५॥ उग्रदुर्गन्धभूः कान्तापितृमातृभि-रप्यसौ । चण्डालपाटक इवाध्वगैर्दूरादमुच्यत॥६६॥तं तथाभूतमुद्वीक्ष्य भ्रातृस्नेहवशंवदः । दुर्गन्धं दुःसहं जित्वा सुर-सेनः समोपगः ॥ ६७ ॥ रोगोऽसौ यावदस्यास्ति न किंचित्तावदाहरे । म्रियते यद्यनेनैष म्रियेऽनशनतस्ततः ॥ ६८ ॥

इति न्यविशत भ्रातुरग्रे स दृढनिश्चयः। वीजयन्वसनान्तेन मक्षिका मुखपातिनीः॥६९॥त्रिभिर्विशेषकम्॥ नमस्कारारूयमन्त्रेणाभिमन्त्र्य प्रासुकं पयः। तं मुहुः स्मारयंश्चास्य सिषेच रसनामसौ॥७०॥सेके सेके व्यथाशान्तिर्विशेषं समजायत। क्रमात्तस्य क्षुधार्तस्य कवले कवले यथा॥७१॥निर्व्यथं निर्व्रणं नीरुग्निर्गन्धं च सुगन्धि च। मुहूर्तात्तन्मुखं जज्ञे क न धर्मः प्रभावभाक्॥७२॥धर्मेणास्तः स रोगः आगमुक्तो वैद्यगणेन यः। भानुच्छेद्यं तमश्छेत्तु खद्योताः क किल क्षमाः॥७३॥राहुमुक्तं रविमिव प्राप्तपूर्वच्छविच्छटम्। तं रोगमुक्तं वीक्ष्याभूल्लोकः सर्वोऽपि सोत्सवः॥७४॥विशेषतस्ततस्तारे धर्मभारे सहोदरौ। बभूवतुरुल्लासौ शरदीवेन्दुभास्करौ ॥७५॥

श्रीभद्रबाहुराचार्योऽवधिज्ञानमधिष्ठितः। कदापि तत्पुरोद्यानं ध्यानिवेन्दुरभूषयत्॥७६॥प्रदक्षिणात्रयेणोपश्रेमतुर्नेमतुश्च तम्। उपविश्य ततो धर्मदेशनां पपतुश्च तौ॥७७॥सुरसे सुरसेनेन निपीते देशनामृते। अपृच्छयत गुरुर्भ्रातृरसनारोगकारणम् ॥७८॥ स च प्रवचनक्षीरार्णववीचीनिभं वचः। उपाददे भवदवोद्भवक्लेशहरं गुरुः ॥७९॥

भूभृपाभूतमाहूतपुरुहूतपुरप्रभम्। पुरं मणिपुरं नाम विद्यते विश्वविश्रुतम्॥८०॥तस्मिन्कदमलितारातिवदनो मदनो भटः। बभूव भगवद्धर्मसुधाम्बुधिसुधाकरः॥८१॥तुल्याकृती तुल्यशक्ती तुल्यार्थौ तुल्यतेजसौ। धीरवीराभिधौ तस्य सुतौ जातौ भुजाविव ॥८२॥ जिनप्रवचनस्वादानन्दामन्दसुधारसौ। तौ भवाहिभुवा ग्रस्तौ न मोहविषमूर्च्छया ॥८३॥ कदाप्येतौ गतावातमोद्याने ददृशतुर्मुनिम्। समातुलं वसन्ताख्यं पुंश्रुत पतितं भुवि ॥ ८४ ॥ किमभूत्किमभूदेतदिति व्याकुलचेतसि। धीरेऽथ पृच्छति पुमानेकस्तत्राश्रुमुग्जगौ ॥८५॥ प्रतिमास्थमिमं साधुं दष्ट्वैको दुष्टपन्नगः। दुर्गे नृपापरा-

भीव प्रविष्टोऽस्मिन्महाबिले॥८६॥अथ मातुलमोहेन क्रुधा धीरानुजोऽभ्यधात् । रे रङ्काः किमसौ नश्यन्नहिः पापी हतो न हि ॥ ८७ ॥ धीरस्तमभ्यधात्सर्पे गते जीवति कर्मतः । हहा महात्मन्किं पापं मुधा बध्नासि जिह्वया ॥ ८८ ॥ क्षुधाभ्यर्दित वीरेऽपि दुष्टे दृष्टमहामुनौ । तस्मिन्हतेऽपि धर्मः स्यान्नृतिर्यानां न पातकम् ॥८९॥ क्षत्रधर्मो स्वयं साधुपालने दुष्टनिग्रहे । इत्यसत्यं यदि ततो मन्त्रिकामेतु पातकम् ॥९०॥ धीरस्त्वचिन्तयन्वाचं तस्यापारकृपारसः । यतीन्द्रं जीवयामास मणिमन्त्रौषधीबलात् ॥९१॥ यतीन्द्रजीवनात्प्रीतिं महानन्दस्य वणिकाम् । धारयन्तौ भद्रस्यैतौ सुतौ सर्वजनस्तुतौ ॥९२॥ पालयन्तौ शुभं धर्मं ज्वालयन्तौ च पातकम् । क्षालयन्तौ च कीर्तिं स्वं सुचिरं तौ ननन्दतुः ॥९३॥ युग्मम् ॥ धीरः क्रमेण पूर्णायुः सुरसेन भवानभूत् । अनालोचितनाद्वाग्वीरस्त्वेव तवानुजः॥९४॥असाध्यः सर्ववैद्यानामनघौषधीविदाम् । सर्पमहतियाकृपाजिह्वारोगोऽस्य जातवान्॥९५॥ यतिसंजीवनादेव लब्धकम्मङ्गलब्धिना । निरासि रसनारोगो महासेनस्य स त्वया ॥९६॥

इति ज्ञात्वा स्ववृत्तान्तं जातजातिस्मृती तदा । सुरसेनमहासेनौ भवार्तौ भेजतुर्व्रतम् ॥९७॥ व्रतं व्रततिवत्सिक्त्वा तौ चारुचरितामृतैः । धर्मप्रसूनजं मुक्तिफलं कालादवापतुः ॥ ९८ ॥ सुरसेनमहासेनदृष्टान्तेनामुना जनाः । अनर्थदण्डे दुःखौघहेतुं त्यजत दूरतः ॥९९॥

॥ इत्यनर्थदण्डव्रतविचारे सुरसेनमहासेन कथा ॥

सुध्यानानाममावकतॄनां मौहूर्तिकं हृदि । यास्माद्गमार्यं तच्छिक्षाव्रतं सामायिकाभिधम्॥१००॥अस्मादि यतिवंमैत्री-

क्षणखेलनभूमिका॥ दुरितोर्मिविरामाय व्रतं सामायिकं पुनः॥१॥मोक्षश्रीममतारम्भः समताभ्यासरम्भः॥ करुणारससिन्धूर्मिराद्यं शिक्षाव्रतं मतम् ॥२॥ क्रूराचारोपि संसारकाराया मुच्यते द्रुतम् । केशरीव त्रुटत्कर्मदामा सामायिकव्रती ॥३॥

तथाहि शत्रुलोकाद्रिदंभोलिः क्षीणगर्हणः । भूपोऽभूद्विजयो नाम धर्मी कामपुरे पुरे ॥४॥ तं श्रेष्ठी सिंहदत्ताख्यो नत्वाचख्यौ कदाचन । केशरी नाम मे स्वामिन्पुत्रोऽभूच्चौर्यभूरिति ॥५॥ अथ स्थास्यसि मद्भूमौ यदि तद्वध्य एव मे । इति केशरिणं देशान्नरेशो निरकाशयत् ॥६॥ सोऽपि भूपभयाक्रान्तः श्रान्तो देशान्तरं व्रजन् । काप्यपश्यद्वने स्वच्छशीतस्वादुरसं सरः ॥७॥ अचौर्याहृतमाशक्तेर्न पयोऽपि पपे मया । अहो कार्यं तदप्यद्य धिग्धिग्दैवविपर्ययम् ॥८॥ इति ध्यायन्नयं तत्र श्रान्तः कान्तारपल्वले । चौरश्चक्रे पयःपानं स्नानं च विदधेऽधिकम् ॥ ९ ॥ युग्मम् ॥ निःसृत्य स गतश्रान्तिरारोहद्गालिशालिनम् । क्षुधाकुलः फलस्फूततरं चूततरुं ततः ॥१०॥ फलैस्तृप्तस्ततो दध्यः स चिन्तां कल्पवानिति । हहा मम किमद्याहर्विना चौर्येण यास्यति ॥११॥ इति चिन्तापरे तत्र मन्त्रसाधितपादुकः । उत्ततार सरस्तीरे कोऽपि योगीश्वरोऽम्बरात् ॥१२॥ स व्योमगमनासन्नतपनातपतापितः । दत्त्वा दिक्षु दृशं मुक्त्वा पादुके उदकेऽविशत् ॥ १३ ॥ वेद्मीदं पादुकाद्वन्द्वमस्याकाशगतौ क्षमम् । यदेतदिह मुक्त्वासौ पद्भ्यामेव जलेऽविशत् ॥ १४ ॥ तदेनचोरयामीति ध्यात्वोत्तीर्य द्रुतं द्रुमात् । पादुके पादयोः क्षिप्त्वा चौरोऽगाद्गगनाध्वना॥१५॥स निर्गम्य दिनं क्वापि नक्तं तत्पादुकापदः । चिन्तासमानसमयं व्योम्ना धाम्नि ययौ निजे॥१६॥राज्ञे विज्ञप्य चौरं मां त्वं पुरान्निरकाशयः । इत्युक्त्वाताडयद्दण्डैः पितरं नितरामसौ ॥१७॥ परासुं पितरं त्यक्त्वा महर्द्धीनि गृहाणि सः । प्रविवेश पदार्थांच सारं सारं जहार

च ॥१८॥ अन्त्ये ग्रामे त्रियामायाः स समायातवान्पुनः । सरोवरं तदेवाशु दुर्गमारण्यमण्डनम् ॥१९॥ नित्यमित्ययमुद्दा-
मर्कार्गर्धार्यलमद्रसः । तदेव नगरं गत्वालुण्टद्विविधलुण्टनः॥२०॥लोकं साधुसतीमुख्य सतापयति पापिनि । यमागम इव
मियेऽभवत्तत्र निशागमः ॥२१॥ तत्स्वरूपं परिज्ञाय राज्ञाथ व्यथितात्मना । परिपृष्टः पुरीरक्षो वैलक्ष्यन्यग्मुखोऽवदत्
॥ २२ ॥ प्रभो नभोध्वगः कोऽपि पुरं मध्नात्यदः सदा । न चौरचरणन्यासः क्वापि चाप्यत यद्भुवि ॥ २३ ॥ ततः
क्षितिपतिः कोपमंनतं लोचनद्वयम् । व्यथातुरः पुरप्रेक्षा कृपाश्रुषु निमज्जयन्॥२४॥तपोधनतपःशीलवतीशीलप्रभावतः ।
तत्क्लेशमोगमः सोऽस्य मम चौरोऽस्तु गोचरः ॥२५॥ इत्युक्त्वाल्पपरीवारः पुरीमयमलोकत । प्रत्यास्थानं प्रतिद्यूताश्रयं
प्रतिसुरालयम्॥२६॥त्रिभिर्विशेषकम्॥चौरचिह्नं क्वचित्किंचिदप्यनालोकयन्नृपः । जगाम क्षामसंकल्पः पुरीपरिसरावनिम्
॥२७॥ वापीकूपतडागादिस्थानेष्वपि निरूपयन् । न प्राप भूपतिः क्वापि चौरसंचारचेष्टितम् ॥२८॥ मध्याह्नेऽथ धराने-
तुर्वनान्तर्भुवि तस्थुषः । नासामासादयद्गन्धः कर्पूरागुरुधूपभूः॥२९॥व्रजन्गन्धानुसारेण चण्डिकागारमासदत् । चम्पकाद्य-
र्चितां तस्मिन्नपश्यच्चण्डिकां नृपः॥३०॥उन्मुच्य धूपनं तादृग्भूपमभ्याययौ ततः । संयोजितकरः पूजाकरः प्रवरचीवरः
॥ ३१ ॥ केनोत्सवेन केनेदृक्चण्डीपूजाद्य कारिता । दत्तानि द्युतिदूनेन्दुभांसि वासांसि केन ते ॥ ३२ ॥ इति पृच्छति
भूजानौ पूजाकारी जगाद सः । दुःस्थान्वयस्य मे स्वामिन्भक्त्या तुष्टाद्य चण्डिका॥३३॥ प्रगे पूजार्थमायामि यदा नित्यं
लभे तदा । देव्याः पादाग्रवर्तीनि रत्नानि कनकानि च ॥३४॥ एवं देवीं त्रिकालं तत्पूजयामि जयामि च । तत्प्रसादो-
द्घनिःशेषश्रीपूरः श्रीदमप्यहम् ॥३५॥ नक्तं चौरागमं तत्र सुधीर्निश्चित्य तद्गिरा । ययौ वासरकृत्यार्थमावास वासवो

भुवः ॥ ३६ ॥ नक्तं सारपरीवारश्चण्डिकागारमागतः । तस्य दूरे नृपः शूरान्निहैकः स्वयमास्थितः ॥ ३७ ॥ निशीथे स्तम्भगुप्ताङ्गो भूभुजङ्गस्ततोऽम्बरात् । उत्तीर्णं पादुकासिद्धं तमालोकत तस्करम् ॥ ३८ ॥ पादुकाद्वयमादाय सोऽथ स्नात्वा गर्भगृहं चण्डीमानर्च मणिभिः शुभैः ॥ ३९ ॥ जगौ च स्वामिनि स्वैरचारिणश्चौर्यकारिणः । स्यान्मेयममेयर्द्धिदायिनी क्षणदा मुदे ॥ ४० ॥ इत्युक्त्वा वलमानोऽयं द्वारमारुह्य भूभुजा । कृपाणपाणिना जीवन् रे न यामीति धर्षितः ॥ ४१ ॥ इति भाषिणि भूपाले तद्भालं प्रति कालवित् । पादुकाद्वयमेवायमङ्गीकृत्य क्रुधामुचत् ॥ ४२ ॥ तद्घातवञ्चनव्यग्रे महीभुजि महाभुजः । अयं जीवन्व्रजामीति वदन्नेवैष निर्ययौ ॥ ४३ ॥ यात्यसौ केशरी चौर इति भूपगिरा भटाः । तमाशु दूरे नश्यन्तमन्वधावन्नृपाज्ञया ॥ ४४ ॥ चौरलोप्त्रावनीं गन्तुं मन्त्रिणे दिष्टशक्ति तत । प्रदाय पादुकाद्वन्द्वं भूपोऽप्यनुययौ भटान् ॥ ४५ ॥ स तु चौरस्त्वरादूरमुक्तशूरसमुच्चयः । पुरग्रामान्तगैर्मार्गैरेवागात्पदगुप्तये ॥ ४६ ॥ भयाकुलितचित्तोऽसौ किंचिद्वैराग्यवांस्ततः । दध्याविलय मे पापमत्युग्रं फलितं ध्रुवम् ॥ ४७ ॥ ग्रामारामावनौ क्वापि कस्यापि विशतो मुनेः । ध्यानतत्त्वं वचश्चौरः श्रद्दधे लक्षणोत्तदा ॥ ४८ ॥ सर्वत्र ध्यानसमतारुचिर्मुच्येत पातकैः । जनः सद्योऽपि तिमिरैः कृतदीप इवालयः ॥ ४९ ॥ इति हृन्मर्मनिर्मग्नं चौरस्तद्भावयन्वचः । वपुरुत्पुलकं बिभ्रदूर्ध्वस्तत्रैव तस्थिवान् ॥ ५० ॥ युग्मम् ॥ सारासाराखिलजगन्नुतिनिन्दावियुक्तधीः । तस्थौ मध्यस्थतामग्नः स भग्नदुरितक्रमः ॥ ५१ ॥ शेषां रात्रिं दिनं चास्याद्देष साम्यलयस्तथा । यथा स्थिरं मनो लीनं पवित्रे परमात्मनि ॥ ५२ ॥ घातिकर्मक्षये सायं ज्ञानं जज्ञेऽस्य केवलम् । सर्वत्रान्वेषयंस्तत्र तदा नृपतिरप्यगात् ॥ ५३ ॥ इतश्चान्वपतद्भुपस्तं हन्तुं भटभारभाक् । इतश्चागान्मरुद्वर्गो नन्तुं दत्तव्रतध्वजः

॥५४॥ सुरैः कृतं सुवर्णाब्जमासीने केशरिण्यथ । ते हन्तारोऽपि नन्तारो भूपप्रभृतयोऽभवन्॥५५॥दन्तांशुभिः सुभि-
क्षाणि कुर्वाणश्चन्द्ररोचिषाम् । स व्यधाद्देशनां पापतमसः पूर्णिमां मुनिः॥५६॥क्व तत्ते चरितं नाथ क्व चायं केवलो-
दयः । इति क्षितिभृता पृष्टस्ततो व्याचष्ट केवली॥५७॥राजन्नाजन्म तत्तादृक्पापभाजोऽप्यभून्मम । श्रीरियं मुनिवाग्ल-
व्यसामायिकमनोलवात् ॥५८॥ यद्वर्षकोटितपसामप्यच्छेद्यं तदप्यहो । कर्म निर्मून्यते चित्तममत्वेन क्षणादपि ॥५९॥
इति श्रुत्वा प्रमुदितो जगाम नगरीं नृपः । बोधयन्वसुधां सोऽपि विजहार महामुनिः॥६०॥पितृघातकरे सर्वजनसंताप-
कारिणि । चौरेऽपि दत्तनिर्वाणं सेव्यं सामायिकं बुधैः ॥६१॥

॥ इति सामायिकव्रतविचारे केशरिकथा ॥

क्रियते दिग्व्रते मानसंक्षेपो यो दिवानिशम् । द्वितीयं तदिदं शिक्षाव्रतं देशावकाशिकम् ॥६२॥ देशावकाशिकं
यावत्कुरुते श्रद्धया सुधीः । तदन्यप्राणिनां तेनाभयं दत्तं भवेत्तदा॥६३॥प्रभावादस्य नश्यन्ति विघ्नाः क्षुद्रात्मनामिह ।
सुमित्रस्येव जायन्ते परत्र च शुभश्रियः ॥६४॥

मुख्या पुरीततावस्ति सुवस्तिलकवत्पुरी । चन्द्रिकेति चतुर्वर्गश्रीनिरर्गलनागरा॥६५॥नामीरवीरश्वासोर्मिसमुद्दीना-
रिमण्डलः । तारापीड इति क्ष्मापस्तामपालयदुत्सवैः॥६६॥तन्मन्त्री कीर्तिकुसुमं सुमित्राख्यः समन्ततः । विश्वसौरभ्य-
कृज्जज्ञे जिनभक्तिलताद्रुमः ॥६७॥ शास्त्रप्रदीपोद्द्योतेन्ति क्षामधामनि । यस्यालीनो भुजस्तम्भतोरणे मतिविक्रमौ
॥६८॥ नृपतिर्नवनारण्यः पुण्यकर्मपराङ्मुखः । उवाच सचिवाधीशं कदाचिद्राजकार्यकाङ्क्षितम् ॥६९॥ देवार्चा-स्वकरारम्भ-

दान-व्याख्याश्रवादिभिः । धर्मकृत्यैर्वपुर्मन्त्रिन्किं सुधा वाप्यतेऽधुना॥७०॥क एभिर्विफलैर्धर्मकर्मक्लेशैर्मवादृशः । जरा-
क्रान्तमविश्रान्तमिति देह दहत्यहो ॥७१॥ इत्युक्तः स्मितवक्त्रोऽयं मन्त्री धात्रीधवं जगौ । किं नृदेव त्वमप्येवमनौचि-
त्येन भाषसे ॥७२॥ इच्छामि धर्मकृत्येषु त्वां कारयितुमुद्यमम् । मामपि त्वं तु किं नाथ निषेधयसि तेषु हा ॥७३॥
धर्मः किं विफलः स स्याद्यत्प्रसादेन धीधनैः । निर्विघ्नैः स्वर्गमोक्षाणामपि सौख्यमवाप्यते॥७४॥अथोचे सचिवो राज्ञा
मम ज्ञापय मन्त्रिप । विघ्नोच्छित्त्याथ संपत्त्या प्रत्यक्षं धर्मजं फलम्॥७५॥इत्युक्तिभाजं राजानं सचिवस्तमुवाच सः ।
त्वं नाथोऽन्ये तु ते भृत्याः साक्षादेतद्धि तत्फलम् ॥७६॥ ततोऽमात्य जगौ राजा पाषाणे द्विदलीकृते । भवत्येकेन सो-
पानं द्वितीयेन तु देवता ॥७७॥ तत्किं तस्यैकदेशेन धर्मश्चक्रे परेण न । सिद्धा स्वभावाद्विश्वस्य भव्याभव्यप्रवस्थितिः
॥७८॥ युग्मम् ॥ अथाह मन्त्री नाजीवो ग्रावात्र स्यान्निदर्शनम् । सति धर्मिणि धर्माणां स्थापना युज्यते ततः ॥७९॥
इत्युक्तस्तं नृपः किंचित्सवैलक्ष्यस्मितोऽवदत् । अहं मन्त्रिन्वचःशक्त्या त्वया चक्रे निरुत्तरः॥८०॥परं प्रत्यक्षदृष्टेन प्रभा-
वेणैव कुत्रचित् निःसंशयं करिष्यामि धर्मं मन्त्रीश नान्यथा ॥ ८१ ॥ इति प्रायस्तयोर्नित्यं संलापः क्षत्रमन्त्रिणोः ।
अजायत प्रजामध्ये प्रसिद्धिमधुरोऽधिकम्॥८२॥निर्वर्त्य सर्वकृत्यानि कदाचित्सचिवेश्वरः । पाक्षिकावश्यकं कर्तुं सायं
स्वावासमासदत् ॥ ८३ ॥ गृहाद्बहिर्निर्ययौ मीलात्तदेशावकाशिकः । सत्यसंधो महामात्यः प्रत्याख्यानविधिं व्यधात्
॥८४॥ आवश्यके कृते शुद्धश्रद्धानध्यानबन्धुरः । मन्त्रीश्वरो नमस्कारपरावर्तपरोऽभवत् ॥८५॥ समाह्वयति वः स्वामी
गुरुकार्यतयेत्यथ । नृपतिप्रतिहारस्तं तदागत्य व्यजिज्ञपत्॥८६॥आ प्रभातादृगृहबहिर्गतिप्रत्याख्यया स्थितः । एष्यामि

प्रातरित्युक्त्वा वेत्री प्रैष्यत मन्त्रिणा॥८७॥परमेष्ठिनमस्कारसुधासेकविवेकतः। पुनर्मानुषजन्मद्रुं सचिवः सफलं व्यधात् ॥ ८८ ॥ समुपेत्य पुनर्वेत्री मन्त्रिन्द्रुमिदमभ्यधात् । युष्मद्भक्तैर्नृपः स्वाज्ञालोपात्कोपान्धतामधात् ॥ ८९ ॥ इह नायाति मायानिधिधीः सचिवः स चेत् । तत्सर्वैश्वर्यमुद्रा मे याच्येति प्रजिघाय माम्॥९०॥इति श्रुतप्रतीहारव्याहारः सचिवो ऽमन् । तत्क्षणं प्रैषयन्मुद्रां दुःशीलामिव दासिकाम् ॥९१॥ मन्त्री श्रेयःसमुद्रोऽस्मिन्समुद्रे सद्मनो गते । राज्यचिन्ता-शल्यनाशाद्धर्मभरोऽभवत् ॥९२॥ मुद्रां कौतुकनो वेत्री परिधाय करे तदा । मन्त्री जातोऽहमित्यात्मपदातिषु जगौ ऽमन् ॥९३॥ शनैर्मन्त्रिशिरोरत्न कुरु पादावधारणम् । इति हास्यमुखैः पुंभिर्वृतो गेहाच्चचाल सः ॥९४॥ तदैव दैवतः कैश्चिद्भटैः प्रकटितासिभिः। आहत्य पातितो नीतश्चायं वार्ताविशेषताम्॥९५॥त्रस्तशेषैस्तदा तस्य सुभटैर्जगिरेऽरयः वेत्री हतो हत इति तुमुलश्च महानभूत्॥९६॥इति धात्रीधवः श्रुत्वा कोधधूमध्वजोद्धुरः। उच्चैर्जल्पमनल्पं स ज्वालाकल्पम-कल्पयत्॥९७॥अस्मत्कार्यमिदं कुर्वन्नतुच्छमसद्मना। संहारितः प्रतीहारस्तेनासौ मन्त्रिणा ध्रुवम्॥९८॥एतस्य यदि दुष्टस्य शिरश्छित्त्वा स्वपाणिना । उच्छालयामि छलिनस्तन्मे मनसि निर्वृतिः ॥९९। एवमुच्चैर्लपन्भूपः कोपाटोपभटोत्कटः। तत्रागाग्रत ते सन्ति यावतां वेत्रिघातकाः॥८००॥अमात्यभृत्या नेते स्युः केऽपि वैदेशिका इव। इति ध्यात्वा नरेन्द्र-स्तान्दीपदृष्टानभाषत ॥ १ ॥ के यूयं किं हतो वेत्रीत्युर्वीनाथेऽथ पृच्छति । ऊचुस्तेऽमर्पदष्टोष्ठा वण्ठाः कण्ठागतासवः ॥ २ ॥ किमस्मान्पृच्छसि क्ष्माप दैवं पृच्छदुरागयम् । अस्मदीशस्य येनैव चक्रे व्यर्थो मनोरथः ॥ ३ ॥ भराघास-पुराधीशः शूरसेनः स्वसेवकान् । सुमित्रं मन्त्रिणं हन्तुं प्रैषीदस्मान्महेच्छया॥४॥यदयं दण्डयत्यस्मत्स्वामिनं प्रतिवत्सरम्

। त्वामप्यस्मद्विभोः शत्रुं सर्वदा पोषयत्यलम्॥५॥स्वाम्यादेशादिहास्माभिर्बद्धन्धेऽध्वाय मन्त्रिणः । कुतोऽयमपतत्त्विह यन्धनं जम्बुको यथा ॥ ६ ॥ इत्युक्तिविकटावेशाः सुभटा प्रकटाशयाः । ते चत्वारोऽपि पञ्चत्वं जग्मुस्तत्रैव घातकाः ॥ ७ ॥ नृपः कृतानुतापोऽथ गत्वा पौरवरैर्वृतः । अमात्यं क्षमयामास बाहू धृत्वा वदन्निति ॥ ८ ॥ मया तेऽपि नृकल्पस्य कल्पितो योऽल्पबुद्धिना । त्वं क्षमस्व क्षमस्व त्वमपराधममुं मयि ॥९॥ व्रतं चेन्नाचरिष्यस्त्वं नाजीविष्यस्ततः पितः । त्वां विना नैव राज्यं मेऽभविष्यत्प्राज्यवैभवम् ॥१०॥ तदस्यातुल्यकल्याणकारिणः पुण्यकर्मणः । फलं प्रत्यक्षमद्राक्षमहं पापापहं चिरात् ॥११॥ सुकृतं जीवितव्यं ते व्रतेनानेन पोषितम् । शोषितं त्वत्कृतेनाद्य दुःकृतं दुर्यशश्च मे ॥१२॥तत्सहस्वापराधं मे प्रसीद वद सात्त्विक । धर्मं कराय मां तात तारयाशु भवार्णवात्॥१३॥उवाच सचिवोऽथेदं नापराधोऽस्ति ते ध्रुवम् । यत्क्षमाप सानुतापस्त्वं धर्मे धत्सेऽधुना धियम् ॥ १४ ॥ ततः सलब्धमुद्रेण मन्त्रिणा प्रेरितो नृपः । जगृहे गृहिणां धर्मं पूर्णचन्द्रगुरोः पुरः ॥१५॥ मन्त्रिणः शङ्कमानोऽथ निजे कण्ठे कुठारवान् । अयातः शूरसेनोऽपि भूभुजां भूपितः श्रिया ॥ १६ ॥ देवार्चादानसुध्यानरथयात्रादिकर्मभिः । नृपो मन्त्र्युपदिष्टैः स्वं विदधे जन्म पावनम् ॥१७॥ तत्र स्वामिनि बालोऽपि चण्डालोऽपि न सोऽभवत् । न यो जिनाधिनाथोक्तधर्मकर्मठतां गतः ॥१८॥ इत्थं मन्त्रिव भूपश्च कृत्वा धर्मं विशुद्धधीः । महाविदेहे मर्त्यत्वं प्राप्य लेभे शिवश्रियम् ॥ १९ ॥ ततः सुमित्रदीपेन गमितेऽस्मिन्प्रकाशताम् । देशावकाशिकपथे संचरन्तु सुखं बुधाः ॥२०॥

॥ इति देशावकाशिकव्रतविचारे सुमित्रकथा.॥

कुव्यापृतीनां स्नानादेस्त्यागो ब्रह्मव्रतं तपः। आहुः शिक्षाव्रतमिदं तृतीयं पौषधाभिधम् ॥२१॥ तत्तु शुद्धोक्तचारित्रिवत्परिपाल्यते। अहोरात्रमथाशेषां रात्रिं यावज्जितेन्द्रियैः॥२२॥भवोरगमदच्छेदे पौषवत्पौषधव्रतम्। आपत्स्वपि मित्रानन्दमन्त्रिपतेरिव ॥२३॥ तद्यथा।

धर्मनिर्मलमर्धमर्थचियोति विश्रुते। पुरं पुण्यपुरं पुष्पचापचापलपेशलम्॥२४॥तत्र युद्धसुधासत्रममित्रवसुधाभृताम्। बभूव भूविभुर्भानुर्जितभानुः स्वतेजसा॥२५॥मन्त्री तस्य धरित्रीन्दोर्मित्रानन्द इति श्रुतः। अजायत धियां पात्रं छात्रीकृतबृहस्पतिः ॥२६॥ मध्येमदः कदाप्युर्वेनरेन्द्रसचिवेन्द्रयोः। व्यवसायस्य पुण्यस्य प्रतिष्ठानेऽभवत्कलिः ॥२७॥ क्रुधाथ वसुधानाथः प्रोवाच मन्त्रिं प्रति। व्यवसायः प्रमाणं न प्रमाणं पुण्यमेव चेत्॥२८॥ततः स्वपुण्यमाहात्म्यात्त्वं पुण्यबलगर्वितः। गृहाण मम राज्यर्द्धिमित्थं संरब्धिमत्सरः ॥२९॥युग्मम्॥ यत्र कश्चित्पुरीमध्याद्व्रजन्तमनुयास्यति। तत्कण्ठतृप्तितोऽसौ मत्खड्गः पास्यति शोणितम् ॥ ३० ॥ गच्छ तुच्छमते तूर्णं पूर्णं कुरु निजं वचः। गृहे न हन्त हन्तव्यमित एवान्यतो व्रज ॥ ३१ ॥ इति क्षितिपतेराज्ञां विज्ञाय सचिवाग्रणीः एकाक्येव द्रुतावेशोऽचलद्देशान्तरं प्रति ॥ ३२ ॥ पङ्कपामेवादिभूमारधिपद्मयामदसुतोत्तमः। स निःससार नगरान्नगराज इवोन्नतः॥३३॥गच्छन्नतुच्छपुण्योऽसौ श्रान्तो मध्यन्दिनेऽधिकम्। ददर्शेन्दोरिव कलाकोटीभिर्घटितं सरः ॥३४॥ यल्लोललहरीहस्तगणं भृङ्गघनस्वनाः। आह्वातुं तृषितान्वरपक्षकोटीरञ्जच्छलात्पथी॥३५॥स कृतस्नानपानोऽत्र स्थितः पाल्यां तरोस्तले। नभसो रभसोत्तीर्णमपश्यत्पुरुषं पुरः ॥३६॥ मंत्र्याणां चिन्तितं मैन्यं दास्यत्येष मणिस्तव। पश्चादपि श्रियं भूरि पूरयिष्यति पूजितः ॥३७॥ इत्युक्त्वा किं

किमित्युक्तेऽन्यैश्चित्रस्य मन्त्रिणः । पाणौ चिन्तामणिं मुक्त्वा स यां दिव्यनरोऽगमत् ॥३८॥ युग्मम् ॥ अथाञ्जैर्मणिमभ्यर्च्य रोमाञ्चितवपुश्चिरम् । विरचय्य चमूचक्रं सायं सोऽगात्पुरं प्रति ॥३९॥ राजवाजिरथाभोगमग्नविस्वाननिस्वनः । तैर्बलैर्वलयामास मित्रानन्दोऽथ तत्पुरम् ॥ ४० ॥ कश्चकार पुरीरोधमिति बोधकृते नृपः । हेरिकान्प्रेरयामास तान्प्रेक्ष्य सचिवोऽब्रवीत् ॥ ४१ ॥ भुजागर्वपराभूतभूरिभाग्यभरोद्भवः । अये मद्वचसा वाच्यो भवद्भिरिति भूपतिः ॥ ४२ ॥ पुण्याप्तसैन्यसंदर्भो मित्रानन्दः समागमत् । विक्रमाक्रान्तविश्वोऽसि संप्रहर्तुं बहिर्भव ॥ ४३ ॥ एवमाभाष्य संभूय प्रहिताः सचिवेन ते । गत्वा व्यज्ञपयन्राज्ञे सर्वमर्थं यथातथम् ॥ ४४ ॥ स्वस्थीभूयाथ भुजानिः कैश्चित्परिवृतो जनैः । कृती तत्र ययौ यत्र मित्रानन्दः स्वयं स्थितः ॥ ४५ ॥ अभ्युत्तस्थौ तदा मन्त्री निभाल्य नृपतिं पुरः । इष्टे हि दर्शनं यावद्विरोधो युज्यते सताम्॥४६॥ प्रणिपत्याथ पृथ्वीन्दुर्निष्कपीठे निवेशितः । बलादर्धासने स्वस्य सचिवं न्यस्य सोऽवदत् ॥४७॥ वरेण्यं पुण्यमस्त्येव शौर्यादिव्यवसायतः । पुण्यभाजां हि जायन्ते किंकरा व्यवसायिनः ॥४८॥ भवद्भाग्योदयः कश्चिदयमीदृक्प्रसूचयः । येनाहं तव भर्तापि भृत्यवद्भामि तेऽग्रतः ॥४९॥ किं त्वसावियती भूतिर्भुव भवतः कुतः । इत्युक्तो भूभुजा मन्त्री स्वचरित्रमचीकथत् ॥५०॥ अथ विस्मयविस्मेरनेत्रपत्रजनेक्षितः । मित्रानन्देन सानन्दः पृथ्वीन्दुः प्राविशत्पुरम् ॥५१॥ उपायैः फलितं श्रीभिर्मणिमाहात्म्यतोऽधिकम् । ववृधे च नरेन्द्रेण मन्त्रिणो मैत्र्यमद्भुतम् ॥ ५२ ॥ कदापि भानुभूपेन सहोत्तंसितसंमदम् । आरादारामिकोऽभ्येत्य तं धर्मज्ञं व्यजिज्ञपत् ॥ ५३ ॥ दिष्ट्याद्य वर्धसे स्वामिन्नङ्गी धर्म इवागमत् । मुनिः सुमन्धरो नाम ज्ञानी लीलावनीं तव ॥५४॥ प्रीत्याथ तस्मै दत्त्वाङ्ग-

मृगणानि क्षणेन मः। जगामाराममजगतीं जगतीपतिना समम् ॥५५॥ मुनिं नेत्रामृतं नेत्रैरापीय नृपमन्त्रिणौ। नत्वाथ न्यविशेतां तौ पातुं कर्णामृतं वचः॥५६॥मुनीशं देशनान्तेऽथ पप्रच्छ पृथिवीपतिः। धन्यस्य कथमस्यामन्विपत्कालेऽपि संपदः ॥ ५७ ॥ अथाचष्ट मुनिः स्पष्टविभवा भुवि भाति पूः। धन्यभारच्युतेव द्यौः पद्मनेत्रेति विश्रुता ॥ ५८ ॥ तत्रादित इति क्ष्मापस्तत्प्रसादास्पदं धनी। श्रेष्ठी सुदत्त इत्यासीज्जिनधर्मधुरन्धरः॥५९॥ सोऽन्यदा पापरोगाणामौषधं पौषधं श्रितः। तस्थौ निशि निशान्तेऽसौ शान्तेन मनसा रसात् ॥ ६० ॥ तदा कश्चिद्दवस्वापविद्यावेदी तदोकसि। नृसिंहमपरीवारः प्राविशत्तस्कराग्रणीः॥६१॥विद्या चौरस्मृता लोकं तत्रामूर्छयताखिलम्। सुदत्ते सा नमस्कारमन्त्रध्याने तु नास्फुरत्॥६२॥ तं पश्यन्तमपश्यन्त एकान्तस्थं मलिम्लुचाः। जगृहुस्तद्गृहद्रव्याण्यखिलान्यस्खलन्मुदः॥६३॥ द्रागभञ्जन्ति स्म मञ्जूषाः कपाटोघमपाटयन्। व्यधाय स्पष्टयामासुरमी भूमिगृहाण्यपि ॥ ६४ ॥ अहो महात्मनस्तस्य धर्मविघ्नमपश्यितम्। जातेऽप्युत्पातजातेऽस्मिन्न ध्यानाचलितं मनः ॥ ६५ ॥ अभागतेष्वथागत्य गृहस्तु धनपद्धतीः। तेषु यातेषु न ध्यानभेदोऽभूत्तस्य न क्वचित् ॥६६॥ जने शोचत्यथोभिद्रे धननाशं निशात्यये। व्यलसद्दिनकृत्येषु श्रेष्ठी पारितपौषधः ॥ ६७ ॥ क्रमादर्जयतो भाग्यभङ्गीसङ्गीकृतात्मनः। धनधोरणयस्तस्य भूयसोऽप्यभवन्पुनः ॥ ६८ ॥ स कदाचिद्दवस्वापविद्याविचौरस्करात्। एकं तल्लोप्त्रतो हारं विक्रेतुं प्राप तां पुरीम्॥६९॥तं हारं श्रेष्ठिनस्तस्य वणिक्पुत्रो धनाभिधः। उपलक्ष्यार्पयामास तलारक्षाय तस्करम्॥७०॥तद्विज्ञाय द्रुतं गत्वा श्रेष्ठी तत्र कृपामयः। स्वं वणिक्पुत्रमाक्षिप्य तलारक्षमदोऽवदत् ॥ ७१ ॥ धनोऽयं नैव जानाति चौरव्यतिकरात्पुरा। अस्मै महात्मने मूल्यान्मया हारोऽ-

यमर्पितः ॥ ७२ ॥ तदयं मुच्यतां मास्मिन्नुच्यतां चौर्यदुर्यशः । रोहिणीयोगमात्रात्किं स्यात्कलङ्कीन्दुवद्रविः ॥ ७३ ॥ द्वादशव्रतधर्तायं नामतयं वदतीत्यथ । सुदत्तवचसामुञ्चत्तलारक्षो मलिम्लुचम्॥७४॥असत्यमपि तत्सत्यं यत्प्राणिहितमित्यमौ । असत्यमपि वाचामुं श्रेष्ठी चौरममूमुचत्॥७५॥श्रेष्ठी तं भोजयित्वा च वरे दत्त्वा च चीवरे । नाकृत्येषु मतिः कार्येत्युक्त्वा च प्राहिणोत्कृती॥७६॥श्रेष्ठीन्दोरुपकारेण शिक्षया च द्रवन्मनाः । किं स्यादकृत्यमित्येष विज्ञातुं धारयन्धियम् ॥७७॥ निर्यन्पुराद्बहिर्भोगभूमौ शुभ्रप्रभाभिधम् । धर्मोपदेशान्ददतं मुनिराजमलोकत ॥ ७८ ॥ युग्मम् ॥ श्रुत्वा तद्देशनां ज्ञातकृत्याकृत्यविवेचनः । मुनीन्दोस्तस्य पादान्ते दीक्षां दक्षोऽयमग्रहीत्॥७९॥चारित्रं शुद्धमासेव्य सौधर्मेऽसौ सुरोऽभवत् । सुदत्तस्तु विपद्यायमभवत्सचिवस्तव ॥८०॥ संपत्सु ह्रियमाणासु यद्भग्नं न पौषधम् । पदे पदे तदत्रायं विचित्राः प्राप संपदः ॥८१॥ स तु चौरः सुरीभूतः स्मरन्नुपकृतीः कृती । चिन्तार्ताय ददौ रत्नं प्रस्तावं प्राप्य मन्त्रिणे ॥८२॥ प्रभो त्रक्ष्यति तं मन्त्रीत्युक्ते राज्ञा मुनिर्जगौ । मन्त्रिणो जीवितान्ते तद्दर्शनं भावि मुक्तये॥८३॥यतो नन्दीश्वरे देवान्नन्तुमस्याभिलाषिणः । समयज्ञसुरानीतविमानस्थस्य गच्छतः ॥ ८४ ॥ शुद्धध्यानलयस्यान्तकृत्केवलितायुजः । लवणाब्धेरुपर्येव मुक्तिर्भूप भविष्यति॥८५॥युग्मम्॥इत्याकर्ण्य मुनेर्वाचमुदञ्चद्धर्मबुद्धयः । सर्वेऽप्युर्वीश्वराद्यास्ते सानन्दा मन्दिराण्ययुः ॥८६॥ एवं प्राक्पुण्यपूर्णर्द्धिमित्रानन्दनिदर्शनात् । भजन्तु भवपेषाय पौषधं सुधियो धियम् ॥८७॥

इति पौषधव्रतविचारे मित्रानन्दकथा. ॥

दानं चतुर्विधाहारवस्त्रपात्रौकसां मुनौ । शिक्षाव्रतं तदतिथिसंविभागं तुरीयकम्॥८८॥एकावयवतोऽप्येतत्सेवितं

श्रद्धयाधिकम् । सुमित्राया इवोन्नत्यै जायते द्वादशं व्रतम् ॥८९॥

तत्रथा पृथिवीभूषा श्रीवसन्तपुराभिधम् । पुरन्दरपुरश्रीणां विवर्तो वर्तते पुरम्॥९०॥विक्रमाक्रान्तदिक्चक्रः क्ष्माशक्रो विक्रमाभिधः । नृपः कृपापवित्रोऽभूत्तत्र क्षत्रशिरोमणिः॥९१॥तन्मन्त्रीशो वसुर्जज्ञे यद्बुद्धिभरनीरजे । राज्यलक्ष्मीः सुखं तस्थौ विकाशाढ्ये दिवानिशम् ॥ ९२ ॥ जिनदासाभिधः श्रेष्ठी तस्य पृथ्वीपतेः प्रियः । बभूव तीर्थकृद्धर्मधौरेयः श्रेयसां निधिः ॥९३॥ तदर्जितैरसंख्यातैः स्वर्णरत्नैरपि ध्रुवम् । निष्पाद्येते क्षितौ मेरुरोहणावपरावपि ॥९४॥ यक्षराजो धनाध्यक्ष इत्येव ख्यातिमर्हति । धनदो जिनदासस्तु स स्तुतोऽर्थिगणैरपि॥९५॥धनस्य सार्थवाहस्य सुतां काशिनिवासिनः । ख्यातां रत्नवतीं नाम्ना व्यवहारी व्युवाह सः॥९६॥जिनदासस्य विश्वासपात्रं लक्ष्मीधराभिधः । विप्रो बभूव भ्रातेव चरमः परमः सुहृत् ॥९७॥ न मन्त्री न कलत्रं न पुत्रो धात्रीपतेः पुनः । नान्यत्किंचिच्च तस्याभूज्जिनदास इव प्रियम् ॥ ९८ ॥ मित्रे नृपः कदाप्यत्र मन्त्रितामपि दास्यति । राजमन्त्रीति तं हन्तुं विरुद्धं विदधे मनः ॥ ९९ ॥ जिनदासस्तु दाक्ष्येण परचित्तोपलक्षकः । चक्षुर्वचोविकारेण तं विरुद्धमबुध्यत॥१००॥ततो भूपालमापृच्छ्य तीर्थयात्रापदेशतः । पत्नीं रत्नवतीं प्रैषीदसौ पितृगृहं प्रति ॥१॥ अथ चौरच्छलेनासौ तमालब्धुं कृतादरः । मन्त्री निशि तदावासमार्गं भृत्यैररोधयत् ॥ २ ॥ मत्वेति कर्मकृद्वेषः सह लक्ष्मीधरेण सः । प्रभावयन्ति रत्नानि गृहीत्वा निःसृतः पुरात् ॥ ३ ॥ अजानन्नपि पन्थानं गच्छन्नेष निरन्तरम् । अरण्ये पतितः क्वापि तृष्णातरललोचनः ॥ ४ ॥ तत्र बकुलखाद्धां रत्नान्धीं सुहृदः करे । रीणोऽप्यर्पयामास जीवितव्यमिवात्मनः ॥ ५ ॥ क्वापि पश्यन्पयः कूपे रत्नलोभाविलेन कः ।

कराभ्यां पातितः प्रेयं विश्वासः कोऽस्तु जीवताम् ॥६॥ स तदा पातित कूपे कोऽयामित्यशृणोदथ: [illegible]
प्राह रत्नवतीं प्रियाम्॥७॥अयि त्वमपि कूपेऽत्र पतितासि कुतः प्रिये। स ते परिजनः क्वास्ति धिग्धिग्विधिविडम्बनम्
॥ ८ ॥ साप्यवस्थागतं कान्तं वीक्ष्य प्राप्तं च संनिधौ। बाष्पं दृशि दधौ दुःखानन्दसंकरसंकटम् ॥ ९ ॥ मन्वाना
धन्यमात्मानं तत्रापि प्रियदर्शनात्। ऊचे सतीशिरोरत्नमियं रत्नवती ततः॥१०॥तत्सर्वमटवीमध्ये गृहीतमिह तस्करैः।
कान्दिशीकः समग्रोऽपि ययौ परिजनः क्वचित्॥११। तेषु मद्गोगलुब्धेषु वेगादहमिहापतम्। वरं हि मरणं स्त्रीणां न
पुनः शीलखण्डनम्॥१२॥कृतान्तमुखरूपेऽस्मिन्कूपेऽपि पतिता प्रिय। जीवितास्मि भवद्वक्त्रालोकभोक्तव्यकर्मभिः॥१३॥
कथ्यतां च कथं पातः कूपेऽत्र भवतामपि। सचिवः स च विद्वेषी विदधे किं विरोधतः॥१४॥जगाद जिनदासोऽथ सचिवे
मारणोत्सुके। गृहतः कर्मकृत्कूटादेकोऽहं निशि निःसृतः॥१५॥निरन्तरविहारेण कान्तारेऽत्र समागतः। तृषितोऽस्मिन्पयः
पश्यन्पादस्खलनतोऽपतम् ॥ १६ ॥ अनुक्तमित्रदौष्ट्यस्य तदा तस्यातिसत्त्वतः। कूपेऽस्मिन्निर्जलेऽप्यम्भो नाभिदघ्नं दद्‌ः-
शिराः॥१७॥अथ तौ प्रथितस्वेदखेदतृष्णापरम्परौ। जितक्षीरेण नीरेण तेन प्रीतिं परां गतौ ॥१८॥अथ कूपेऽत्र केनापि
सज्जरज्जुनियन्त्रितः। क्षिप्तोऽम्भःकृतये कुम्भः पुण्यकुम्भः इवैतयोः॥१९॥ततोऽन्तः कुम्भरोधेन तौ मत्वा तेन धीमता।
मेलयित्वा जनान्कृष्टौ कूपान्मृत्योर्मुखादिव ॥ २० ॥ यावत्तौ निःसृतौ सार्थस्तावदग्रे स्थितो महान्। निर्गतं मिथुनं
कूपादिति कोलाहलं व्यधात्॥२१॥तच्छब्दात्कौतुकी सार्थवाहोऽपि द्रुतमागतः। सुतां पतियुतामग्रे पश्यन्मनसि विस्मितः
॥ २२ ॥ धनाढ्यं जिनदासोऽपि सार्थवाहं निरीक्ष्य तम्। श्वशुरोऽयमिति ज्ञात्वा नमश्चक्रे चमत्कृतः ॥ २३ ॥ ननाम

निनरां धीरा निरं रत्नवत्यपि । अहो भाग्यस्य सौरभ्यं चिन्तयन्ती स्वचेतसि॥२४॥अथास्मै सार्थवाहाय किमेतदिति
पृच्छते । जिनदासः स्ववृत्तं तदादितोऽपि न्यवेदयत् ॥२५॥ तादृक्स्वजनसंपर्कनिपीतव्यापदूर्मयः । अथ ते तोषपोषेण
सम्पूर्णमनसेऽमनि ॥२६॥ अथाम्भिश्चरित्ते चित्रे गतार्केणेव शंसिते । तद्वीक्षाकौतुकेनेव संध्यायां विधुरुद्ययौ ॥२७॥
तोयपात्रं गृहीत्वाथ जिनदासो निशागमे । तरूनन्तरयामास देहचिन्ताकृते यहन् ॥२८॥ अथेन्दुद्युतिभिर्वीक्ष्य सुप्तं
कश्चिदसौ नरम् । यावच्चाल्पगतस्तावन्मृतो लक्ष्मीधरः पुमान्॥२९॥मृतमक्षतमेवैनं वीक्ष्यासौ मित्रवत्सलः । भुजङ्गदशनं
तस्मिन्निश्चिनोति स्म दुःखितः ॥३०॥ आदाय स्वान्मणींस्तस्मात्कृष्ट्वा फणिमणिं ततः । तदीयस्पर्शपूतेन पयसा तमजी-
वयत् ॥ ३१ ॥ उपकृत्युपकुर्वाणा म्रियन्ते भरया न के । अपकृत्यपकारी यस्तेन तु म्रियते भरा ॥ ३२ ॥ वीक्ष्य लक्ष्मी-
धरो जीवञ्जिनदासमनश्वरः । प्रपानतमुखाम्भोजस्तत्सौहार्दमिवानमत्॥३३॥अथैनमाह माहात्म्यमयो रत्नवतीपतिः ।
अन्तःप्रेमसुधासिन्धुतरङ्गोत्तरया गिरा ॥३४॥ पादस्खलनतः कूपे पतितोऽहं त्वयोज्झितः । इति किं लज्जसे केन स्वोऽ-
प्यनुम्रियते जनः ॥३५॥ मिलितोऽस्मिन्ममारण्ये सार्थवाहोऽधुना घनः । काशीं यास्याम्यहं गच्छ स्वावासं प्रति संप्रति
॥३६॥ इत्युक्त्वा प्रेषितो निमज्जपमाणस्तदा ययौ । सहैव सार्थवाहेन सोऽपि वाणारसीमगात् ॥ ३७ ॥ यावल्लक्ष्मीधरो
याति यमन्तापुरपत्तनम् । जिनदासवियोगेन तावदार्तोऽस्ति भूपतिः॥३८॥इति लक्ष्मीधरो मत्वा गत्वा क्षितिपतेः पुरः ।
स्वरूपं जिनदासस्य मन्त्रिणश्च न्यवेदयत् ॥ ३९ ॥ श्रुत्वेति भूभुजा मन्त्री कारागारे नियन्त्रितः । पश्यतो जिनदासस्य
हन्तव्योऽयमिति क्रुधा ॥४०॥ अथ जद्वालकरमारूढो वीरव्रयान्वितः । जगाम जिनदासाय काशीं गुप्तो नृपः स्वयम्,

॥ ४१ ॥ कार्यो मन्त्री स एवेति वचो निश्चित्य धर्मधीः । सभार्यः सह भूपेन स वसन्तपुरं ययौ ॥ ४२ ॥ सर्वैश्वर्यं नृपादाप्य सचिवायापकारिणे । मन्त्रित्वं स ददौ धीमान्न क्लिष्टा ह्युपकारिणः ॥ ४३ ॥ अथागाद्वनपालोऽत्र वर्धयन्निति भूपतिम् । वनेऽभूत्केवलज्ञानं शङ्करर्षेस्तपस्यतः॥४४। तुष्टिदानं प्रदायास्मै वनेऽगाद्विक्रमो नृपः । सहैव जिनदासेन धुर्या धर्मे हि तादृशाः ॥४५॥ मुनिं नत्वोपदेशं च श्रुत्वावादीददो नृपः । मन्मित्रे जिनदासे किं सापदः संपदः प्रभो ॥४६॥ अथ ज्ञानामृताम्भोधिर्दशनद्युतिवीचिभिः । तत्पुण्यवेलाविपिनं प्लावयन्प्रभुरभ्यधात् ॥४७॥

कौशाम्ब्यां दत्तनामाभून्मातृभक्तो धनी वणिक् । सुमित्राख्या जनन्यस्य दयिता च जयाह्वया ॥ ४८ ॥ दानमेव गृहस्थानां मुख्यो धर्म इति स्फुटम् । स्वगुरोर्वाचमाचख्यौ सुमित्रा सूनवेऽन्यदा ॥ ४९ ॥ दानोन्मुखं मनो मातुर्मत्वा मतिमतां वरः । आनन्दाज्जननीं नत्वा सभार्यः स व्यजिज्ञपत्॥५०॥यथाविधि सुपात्रेषु कृपापात्रेष्वपि स्वयम् । देहि त्वं हि धनं धान्यं त्वत्प्रसादाद्गृहे बहु ॥५१॥ सत्फलं नियमान्मत्वेत्येषाभिग्रहमग्रहीत् । स्वेच्छया विधिवद्दानं दत्त्वा भोक्ष्येऽहमन्वहम् ॥५२॥ ततः सुतस्नुषाभ्यां चानुमताभिमतं जिनम् । पूजयन्ती मुदा कालं कियन्तं सत्यवाहयत् ॥५३॥ दैवज्ञैः कथितेऽत्यर्थमवृष्टे दारुणेऽन्यदा । दुर्भिक्षे सर्वतो जाते जया दत्तमदोऽवदत्॥५४॥मूलेऽपि रौरवः कालोऽल्पपूर्णं च ते गृहम् । अतः स्वां जननीं दानात्कुटुम्बाधार वारय॥५५॥अथ तेन निषिद्धाम्बा सुमित्रा दानतः क्षणात् । निःसत्त्वतामपि स्वीकुर्वन्ति स्त्रीजिता नराः॥५६॥संस्मृत्य नियमं सा स्वं निश्चिकायेति चेतसि । अदत्ते भोज्यमात्रेऽपि न भोक्ष्येऽन्तेऽपि जन्मनः ॥५७॥ उपवासाष्टकस्यान्ते तस्याः सत्त्वमहानिधेः । वृत्तमज्ञापयद्दत्तं दुर्यशःशङ्किता जया ॥५८॥ दत्तेन बन्धुभिः

सार्धं निर्ग्रन्थं पञ्चतागिरूम्। नवमेऽह्नि भोक्तुमुपवेशिता सेत्यचिन्तयत्॥५९॥कारणं भोजनत्यागे विदन्नपि सुतः स्वयम्। न मां दापयते किंचिन्निन्मे दुःकर्मजृम्भितम्॥६०॥नरस्य भोज्यमिदं किंचित्कस्मैचिद्देद्देऽधुना। तन्मे स्यान्नियमः श्लाघ्यो-ऽश्लाघ्यो न स्याच मे सुतः॥६१॥ध्यायन्त्येति गृहागतः सहसैव मुनिस्तदा। अदृश्यत तया मूर्तः पुण्यराशिरिवात्मनः॥६२॥ माणो विशुद्धमाहारं गृहाणानुगृहाण माम्। वदन्त्येति महर्षीशु प्रत्यलाभि मुनिस्तया॥६३॥गन्धाम्बुपुष्पवर्षाः तेऽब्द-रूपामनदं ता। भव्ये मामोपवासी यत्पारणं कारितस्त्वया॥६४॥तच्चे सत्त्वभवाद्दानाच्छान्ता वृष्टिहृतो ग्रहाः। अस्मा-दृग्जिरयादित्याहत्पृष्टो दुर्भिक्षदहनः॥६५॥युग्मम्॥अत्रोत्सवे कृते राजा पौरैश्चाक्षतपात्रिभिः। मातरं क्षमयामास नत्वा दृशो जगान्विनः॥६६॥ तेऽथ धर्म व्यधुः शुद्धं श्रद्धावन्तो निरन्तरम्। भुक्त्वायुस्तत्र जज्ञेऽत्र सुमित्रात्मा नृपो भवान् ॥६७॥ दत्तात्मा जिनदासोऽभूत्त्वयात्मा रत्नवत्यपि। दानरोधादभूल्लक्ष्मीस्त्वन्मित्रे सकृदन्तरा ॥६८॥ श्रुत्वेति प्राग्भवं स्मृत्वा गुरुं नत्वा गताः पुरम्। धर्मध्यानरताः प्रापुर्स्तेऽप्यास्ते महोदयम् ॥ ६९ ॥ इत्याकर्ण्य जनाः सौम्यं सुमित्राया निदर्शनम्। व्रतं सेवध्वमतिथिसंविभागं शुभास्पदम् ॥७०॥

॥ इत्यतिथिसंविभागव्रतविचारे सुमित्राकथा ॥

एवं निशम्य सम्यक्त्वमूलव्रतविचारणाम्। दिशः प्राप सम्यक्त्वं श्राद्धत्वं विजयः पुनः ॥७१॥ भूयोऽप्यभजन्भर्तुः पुरो भद्रकतां जनाः। श्रावकत्वं यतित्वं च चक्रुरुत्सवनश्रवः ॥७२॥ महीमहीनसत्कृतां कुर्वन्मोहतमो हरन्। विजहार महोहारनायको जिननायकः॥७३॥देशनापदीगृपजीमूतो भूतलं विभुः। क्रमेण जनयामास धर्मबीजाङ्कुराङ्कितम्॥७४॥

इतश्च भूपयत्युर्वीमखर्वसुकृता पुरी । संपन्नसंपत्संपाता चम्पा तारुण्यवद्दिवः ॥७५॥ वसुपूज्ये जयायुक्ते स्वर्गस्थे वासुपूज्यजः । मघवा नामतस्तस्यामवनीमघवाजनि॥७६॥कटाक्षपातैः कामस्य काण्डताण्डवपण्डिता । अभूदलक्ष्यवक्त्रेन्दुलक्ष्मीर्लक्ष्मीस्तदङ्गना ॥ ७७ ॥ अनयोर्जयसेनाद्याः सूनवो बहवोऽभवन् । तेषामुपर्यभूत्पुण्यारोहिणी रोहिणी सुता ॥७८॥ स्वस्वाङ्गवस्थावस्थानश्लाघ्यरूपवर्णवर्णना । याराजद्रूपराजस्य राजधानीव जङ्गमा ॥ ७९ ॥ सकलोन्नतकलावल्लेर्गुणद्रुमवनावनेः । यस्या यशःप्रसूनानि कास्त्रीचक्रे न मन्मथः ॥८०॥ ता मत्तयौवनां वीक्ष्य नृपः समदसंमदः । अस्या योग्यं वरं ख्यात सचिवानृचिवानिति॥८१॥ततः सुबुद्धिसिद्धार्थसमुद्रनयवादकाः । चत्वारः सचिवाश्चारुदक्सम्पगदृष्टिविष्टपाः ॥८२॥ कलाविलासरूपश्रीकेलिशैलानिलापतीन् । स्थामनामान्वयस्थानैराख्यायेदं न्यवेदयन् ॥८३॥ युग्मम् ॥ स्वामिन्नमी ममीभाव भजन्ते भूभुजः श्रिया । नैतत्तु विद्मः कुत्रापि कन्याया रमते मतिः॥८४॥स्वयंवरं कुरु ततस्त्वत्कन्येयं यथारुचि । कंचिद्वरं वृणोत्वक्षिपरीक्षकपरीक्षितम्॥८५॥तथेत्यथ नृपस्तेने तेनेह त्वरितं नृपाः । सर्वेऽपि रूपगर्वेण दूताहूताः समाययुः ॥८६॥ ते तदाहारताम्बूलचेलालंकारढौकनैः । महीभृता मघवता मोदयांचक्रिरे मुदा ॥८७॥ अथार्ककलशीकर्तुमिव नीते महोन्नतिम् । अनिन्यिरे नरेशास्ते स्वयंवरणमण्डपे ॥८८॥ न रूपं पापवृत्त्यै स्यादिति वाचामुदाहृतिः । श्रीमान्महेन्द्रसेनाख्यः श्रीकोशलपुरेश्वरः॥८९॥ स्वकायकान्तिपीयूषपानानिमिषविष्टपः । सिंहनाथः सुधर्मैकाशिथिलो मिथिलापतिः ॥९०॥ लावण्यामृतसिन्धूर्मितरन्मकरकेतनः । जिनभक्ताभिधः पुंसां रत्नं रत्नपुराधिपः॥९१॥ सुनेत्रानेत्रकुमुदोल्लासलीलाविशारदः । चन्द्रचारुमुखश्चन्द्रपुरेशश्चन्द्रवर्धनः॥९२॥प्रभापल्लवलावण्यपुष्परूपफलद्रुमः । जय-

सेनो जयसेनाराजी राजगृहेश्वरः॥९३॥तत्पुण्यमहाम्भोधिजलमानुपरत्नताम् । चन्द्रमित्रयशाश्चन्द्रमित्रः काशीपुरीश्वरः ॥ ९४ ॥ अन्येऽपि सुरसंदेहकरदेहयुतो नृपाः । प्रपश्चात्पश्चनाणस्यालेचकुर्मञ्चसंचयम् ॥ ९५ ॥ सप्तभिः कुलकम् ॥ तृणाङ्गदेशालंकारनागपुरेश्वरः । सूनुः श्रीवीतशोकस्याशोको विशुत्प्रभाङ्गभूः॥९६॥जगदृहगिन्द्रियोन्निद्रभोगकर्ममहाफलम् । अलंचकार मश्चं सोऽप्युदग्रगुणगौरवः ॥९७॥ युग्मम्॥ शृङ्गारयन्ती शृङ्गारमप्यङ्गगुणगौरवैः । मदयन्ती मदनमप्यमन्दैर्भारसंमदैः॥९८॥अङ्गनिःस्यन्दिलावण्यमस्याः सर्वाङ्गमेतु माम् । इत्याश्रितेव रत्नाधो रत्नोर्व्या प्रतिमामिषात् ॥९९॥ रोहिणीयमियं चेति मोहयन्ती निरीक्षकान् । वयस्याभिर्धृता प्राप भूपकन्याथ मण्डपम् ॥१०००॥ त्रिभिर्विशेषकम् ॥ राज्ञामथ गुणग्रामकुलनामनिवेदिनी । दक्षा पुरोऽभवत्तस्या वयस्या मञ्जुभाषिणी ॥१॥ पिबन्ती च वमन्ती च लोचनान्तेन भूभुजः । मञ्चीमञ्चचलन्मञ्चमध्यवर्त्मनि कन्यका ॥ २ ॥ नृपेषु ताड्यमानेषु तेषु पञ्चेषुपत्रिभिः । स स वीररसाविष्टो दृष्टो यं यं ददर्श सा ॥३॥ यं यमैक्षिष्ट सा श्याममुखपार्श्वनृपव्रजः । अदिनद्वयमभ्यस्यदिनवद्धिहुते स सः ॥ ४ ॥ उत्कण्ठाविस्मयप्रीतिदुःखभाजो महीभुजः । तत्र श्रीरिव कुर्वाणा साचलत्क्वचिदस्थिरा ॥ ५ ॥ स्पृष्टा स्पृष्टा मुमोचाशु तद्दृष्टिरनीभृतः । रोचमानमपश्यन्ती पुष्पाणीव मधुव्रता ॥ ६ ॥ अशोकं वीतशोकस्य सुतं तस्मै प्रदर्श सा । प्रीता सखी समाचख्यौ व्याचख्यौ च गुणोर्मिभिः ॥७॥ अथास्मिन्दृशमात्मानमानन्दे विस्मये मनः । वपुः सात्त्विकभावे च मज्जयामास रोहिणी ॥८॥ तद्रूपेण तदाकृष्टिमन्त्रज्ञेनेव सत्वरं । आकृष्टा वरमालां सा तत्कण्ठे क्षिपति स्म ताम् ॥ ९ ॥ तूर्णमशोभने तस्य कलाबहुलतेजसः । रोहिणी रोहिणीवेन्दोरपाविक्षन्मुदा ततः ॥ १० ॥

तत्कालप्रस्फुरत्तूर्यगीतनृत्यसमाकुलः । पठद्बन्दिगणः प्रीतिमयोऽयं समयोऽभवत् ॥ ११ ॥ भव्यमासीद्गुणज्ञेयमवृणो-
दुचित पतिम् । इति स्वयंवरे सर्वैर्भूप्रियैरपि पिप्रिये॥१२॥मघवापि मुदात्मीयनामोचितमहोत्सवैः । तयोरस्वयत्प्रीतः
पाणिग्रहणमङ्गलम् ॥१३॥ रोहिण्याः पुण्यमाहात्म्यादशेषान्हर्षितान्नृपान् । आवर्ज्य दानसंमानैर्मघवा विससर्ज च
॥१४॥ वाग्भिर्धर्मैकधुर्याभिर्जिनधर्मानुरक्तया । रोहिण्या जिनधर्मानुरक्तः कान्तोऽपि निर्ममे ॥१५॥ तत्रैव भोगा-
न्भुञ्जानो भूजानिसुतया सह । कुमारः स सुखं तस्थौ दोगुन्दक इवामरः ॥१६॥ एत्य क्रमेलकैरब्धिलहरीचक्रमेलकैः ।
अशोकं वीतशोकस्य पुमांसोऽन्येद्युराह्वयन् ॥ १७ ॥ अशोकोऽपि तदुत्कण्ठो रोहिणीसहितस्ततः । मघवन्तं समापृ-
च्छ्य त्वरितत्वरित ययौ ॥१८॥ स्नातः स पौरीशृङ्गारसागरोर्मिभिरक्षिभिः । दधौ कुसुमवन्मूर्ध्नि पितृपादनखत्विषः
॥ १९ ॥ राज्ञाप्युत्थाप्य पाणिभ्यामालिङ्ग्योत्थाय च स्वयम् । न्यस्य सिंहासने हर्षाश्रुभिरेवाभ्यषेचि सः ॥ २० ॥
कारयित्वा कुमारस्य राज्यलब्धिमहोत्सवम । श्रीसंयमधरोपान्ते प्रवव्राज प्रजापतिः ॥ २१ ॥ मन्त्रिन्यस्तमहीभारः स
रोहिण्या समं नृपः । धर्मशृङ्गारयोरेव सेवयाहर्निशं बभौ ॥२२॥ रसादशोकरोहिण्योः सहेलं खेलतोर्ययुः । ऋतुचक्रेण
दधतोर्मुदं कत्यपि वत्सराः ॥ २३ ॥ गुणपालप्रभृतयः सविस्तारगुणास्तयोः । सूनवोऽष्टावभूवन्दिग्भागा भूनभसोरिव
॥ २४ ॥ पुत्र्यश्च गुणमालाद्याश्चतस्रो निचितश्रियः । अभूवन्कामभूपालचतुरङ्गचमूसमाः ॥ २५ ॥ धिष्ण्ये राज्ञा
सहारूढा गवाक्षे सप्तमे क्षणे । वसन्ततिलकां धात्रीमन्यदा रोहिणी जगौ ॥२६॥ अक्षि निक्षिप रथ्यायां मातः किमि-
दमीक्ष्यते । आमुक्तकेशं स्त्रीवृन्द करुणस्वरगीतभृत् ॥२७॥ रोदन्तरस्फुरत्तूर्यनादप्रमितनर्तनम् । सुव्यक्तस्वस्तिकाकार-

भुजास्फालनहस्तकम् ॥ २८ ॥ भरतादिषु शास्त्रेषु न श्रुतं नेक्षितं क्वचित् । अत्याश्चर्यकरं कुर्वन्त्यमूः किं नाम नाटकम् ॥ २९ ॥ त्रिभिर्विशेषकम् ॥ तां क्रोधादभ्यधाद्धात्री रूपगर्वः किमेष ते । श्रीगर्वः पतिगर्वो वा यदिहोपहसस्यमूः ॥ ३० ॥ रोहिण्यथाह मा कुप्य मातः कोऽपि न मे मदः । अदृष्टपूर्वमाश्चर्यादिदं पृच्छामि तत्त्वतः ॥ ३१ ॥ ततो धात्री जगौ पुत्रि यासौं स्त्रीवृन्दमध्यगा । मृतस्तस्याः सुतस्तस्य जलदानदिनं ह्यदः ॥ ३२ ॥ आहं आहं गुणान्सूनोरिन्मौ यत्र रोदिति । तथापूर्वं भवेऽमुष्मिन्नेतत्संसारनाटकम् ॥ ३३ ॥ चेन्मृतः सूनुरस्यास्तदित्थं रोदित्यसौ कथम् । कानया रोदनं ज्ञातमिति धात्रीमथाह सा ॥३४॥ रोदनं ज्ञापयामि त्वामिति हास्यं वदन्नृपः । तदङ्काल्लोकपालाख्यमग्रहीत्परमं सुतम् ॥ ३५ ॥ क्ष्मायां क्षिपामि ते पुत्रमिति जल्पन्प्रियां प्रति । करस्थं तं यहिर्भित्तेर्दोलमान्दोलयन्नृपः ॥ ३६ ॥ दैवादथ च्युतो बालः स महीपालपाणितः । वातात्फलमिवोच्चाद्रिशृङ्गशालिशिखाग्रतः ॥ ३७ ॥ पुरीजने हाहेत्यन्योन्यघुष्टहाहारवे । किंकिमत्ति रोहिण्यामनुकम्पोन्मुखे नृपे ॥ ३८ ॥ अस्पृष्टभूतलं बालं तत्कालं पुरदेवता । तं नरेन्द्रासनेऽमुञ्चत्पुष्पचन्दनचर्चितम् ॥ ३९ ॥ युग्मम् ॥ स्वस्य पुत्रस्य पत्न्याश्च शृण्वन्पुण्यस्तुतिं जनात् । भूवरोऽकारणात्र पुत्रामृत्युमेवं ततः ॥४०॥ तदोद्याने चतुर्ज्ञानी मणिकुम्भाख्यसंयुतः । आगात्क्षमासुधाकुम्भो रूपकुम्भो महामुनिः ॥ ४१ ॥ तत्रागाक्षितिसुत्रामा पुत्रामात्यकलत्रवान् । मुनिं नत्वाशृणोज्जीवविचारां धर्मदेशनाम् ॥ ४२ ॥ अथ पप्रच्छ पृथ्वीन्दुः भक्तिं वहन्हृदि । रोहिणीभाग्यसौभाग्यचमत्कृतमना मुनिम् ॥ ४३ ॥ प्रभो किं मघवत्पुत्र्या प्राग्भवे सुकृतं कृतम् । यदेनां शोकलेशोऽपि पस्पर्शे न कदाचन ॥४४॥ किं वा निरवधिः

किं पापलान्यमून्यस्याः शुभान्येवाखिलान्यपि॥४५॥ततः सर्वसभालोकचकोरानन्दचन्द्रिकाम् । शस्तां विस्तारयामास मुनीन्दुर्विशदां गिरम् ॥४६॥ धरित्रीश तवात्रैव पुरे नागपुरे पुरा । राजाभिद्वसुपालाख्यस्तत्प्रिया वसुमत्यभूत् ॥४७॥ मित्रं धात्रीपतेस्तस्य सननूदभूरिवैभवः। धनमित्राभिधः श्रेष्ठी धनमित्रा च तत्प्रिया॥४८॥अनयोस्तनया जज्ञे वैरूप्यैकनिकेतनम्। उग्रदुर्गन्धदेहत्वाद्दुर्गंधेत्यभिधानतः॥४९॥जनैश्चनिष्टां बीभत्सरसस्येवाधिदेवताम्। न तां पर्यणयत्कोऽपि यौवनेऽप्यतिदुर्भगाम् ॥५०॥ संख्यातीतवसुश्चेह वसुमित्रोऽभवद्वणिक् । वसुकान्ता च तत्कान्ता श्रीषेणश्च तदङ्गजः ॥ ५१ ॥ स सप्तव्यसनव्यग्रः श्रीषेणः क्वापि चौर्यकृत् । वध्योर्वी नेतुमारेभे वधाय पुररक्षकैः ॥ ५२ ॥ राज्ञो विज्ञप्तिमारच्य धनमित्रोविमोच्य तम् । वसुमित्राभिरायर्ज्य दुर्गंधां पर्यणाययत् ॥५३॥ अपि शोचन्वधोन्मुक्तिं स तद्दुर्गन्धबाधया । कथंचिद्गमयित्वाह्नर्निशि निःसृत्य यातवान् ॥ ५४ ॥ दानं दातुं नियुक्ताथ पित्रा भिक्षाचरेष्वसौ । भिक्षामपि न तत्पाणिगृहीतां कश्चिदग्रहीत् ॥५५॥श्रुत्वाथ धर्मं साधुभ्यस्तन्निष्ठा यत्र यत्र सा । अनातुरेव शान्तात्मा मातुरेव तटेऽचरत् ॥५६॥ राजकन्येशुरूद्याने ऽत्रैव ज्ञानामृतार्णवः । अमृतास्रव इत्याख्यानिलागाधमहो मुनिः ॥ ५७ ॥ विज्ञाय धनमित्रोक्त्या तमत्र नृपतिर्यतिम् । आययौ मुदितस्वान्तः सान्तःपुरपुरव्रजः ॥ ५८ ॥ नत्वा नृपे निविष्टेऽथ युक्तिव्यक्तक्रमं मुनिः । जगौ विचारं जीवानां धर्माधर्मगतीश्च ताः ॥ ५९ ॥ प्रमोदविशदस्तूपे भूपे दुर्गन्धया मुनिः । दुर्गन्धकारणं स्वस्य पृष्टः स्पष्टं जगाद सः ॥ ६० ॥

जम्बूद्वीपस्य भरते क्षेत्रे पात्रं शुभश्रियाम् । सुराष्ट्रो नाम देशोऽस्ति देशानां मौलिमण्डनम् ॥६१॥ स्वसौन्दर्य-

समःसुरदेवतमस्य रैवतः। पर्वतो विद्यते हर्म्यांहिपराजिविराजितः ॥ ६२ ॥ तस्याद्रेः पश्चिमे भागे भागधेयमिव श्रियाम्। नाम्नास्ते गिरिनगरं गीर्वाणनगरोपमम् ॥६३॥ तत्रासीत्पृथिवीपालः पृथिवीपालसंज्ञया। जिनधर्ममतारामममतारामपालकः ॥६४॥ तस्य सिद्धमतिः प्रेमरमसिद्धिरभूत्प्रिया। दधौ प्रियप्रियत्वेन जिनधर्मेऽपि सा धियम् ॥ ६५ ॥ ... जन्मान्तःपुरो नृपः। गिरेर्यान्तं पुरेऽपश्यन्महर्षिं गुणसागरम् ॥ ६६ ॥ सोऽथ प्राह प्रियां मासोपवासिनममुं मुनिम्। विधाप्य पारणं तूर्णमेहि यामः शनैर्वयम् ॥ ६७ ॥ क्षुधा स्वेच्छागतिच्छेदाद्दाशाल्योपाय किमपि। ततः सिद्धमतिः साधुं पारणायालयेऽनयत् ॥६८॥ कटुतुम्बीफलं साथ हृयेभ्यः परिपाचितम्। जनेन ... तस्मै ... दृदौ॥६९॥तदाहत्य मुनिर्दह्यमानकुक्षिः। श्रिताश्रयः। आहारादिपरीहारहृद्यः सद्यो दिवं ययौ ॥७०॥ तत्परिज्ञाय राजाथ सर्वमादाय सा रुषा। शरावमालामालम्ब्य गले निर्गभिता पुरात् ॥७१॥

अथोदुम्बरकुष्टेन गलिता सप्तमेऽहनि। विशीर्णकर्णनासोष्ठा मृत्वागात्षष्ठदुर्गतौ ॥ ७२ ॥ उद्धृत्य दुर्गतेः सा तु नरकेष्वपि सप्तसु। असंख्यदुःखदृष्टात्मतिर्यग्जन्मान्तरास्वगात् ॥ ७३ ॥ सर्पिण्युष्ट्री शुनी क्रोष्ट्री वराही पृषताभिका। मृगी जलौका काकोलुकी खरी साथ गौरभूत् ॥ ७४ ॥ सा तु गौर्जीवितस्यान्ते पीडया पतिता पथि। शुश्राव मुनिभिर्दत्तां परमेष्ठिनमस्क्रियाम्॥७५॥तत्प्रभावात्समाधिस्था मृत्वास्य श्रेष्ठिनः सुता। जाता त्वं पापशेषेण महादुर्गन्धदूषिता ॥ ७६ ॥

जातजातिस्मृतिस्तात! नरकादिव्यथास्ततः। साश्रावदनुभवन्तीवात्यर्थमधाद्वेपथुः ॥ ७७ ॥ ... दीनवदना

लोलकातरलोचना । मूर्धबद्धाञ्जलिः साश्रुः सा दुर्गन्धाभ्यधाद्गुरुम् ॥७८॥ युग्मम्॥ हहा भीतास्मि भीतास्मि स्वामिन्नर्कर्प दुःखतः । न व्यथासु पुनस्तासु यथा यामि तथा कुरु ॥ ७९ ॥ ततः कृपाब्जिनीकेलिनवहेलिर्महामुनिः । तमःसमुदयच्छेदकलां कलयति स्म गाम् ॥८०॥ वासरे रोहिणीनाम्ना नक्षत्रेण पवित्रिते । उपवासस्त्वया कार्यः सप्तवर्षी निरन्तरम् ॥ ८१ ॥ व्रतादसादशोकस्य राज्ञस्त्वं रोहिणी प्रिया । शचीपतेरिव शची भविष्यसि भवान्तरे ॥ ८२ ॥ चिरमप्राप्तशोकैव भुक्त्वा भोगान्प्रियान्विता । सिद्धिं यास्यसि विहरद्वासुपूज्यांहिसेवया॥८३॥अशोकरोहिणीयुक्तामशोकतरुसंश्रयाम् । ततः श्रीवासुपूज्यस्य कारयेर्मूर्तिमद्भुताम् ॥ ८४ ॥ तत्पुरस्तस्य तपसः कार्य उद्यापनोत्सवः । तत्राभयप्रदानस्योद्घोषोऽवश्यं विधीयते ॥८५॥ स्नात्रं श्रीवासुपूज्यस्य चर्चा सुरभिवस्तुभिः । पूजा मौक्तिककल्याणमाणिक्यकुसुमांशुकैः ॥ ८६ ॥ तत्पुरः प्राज्यपक्वान्नफलतन्दुलढौकनम् । क्रियते रासकैर्नृत्यैः संगीतैश्च प्रभावना ॥ ८७ ॥ साधर्मिकाणां वात्सल्यमशनांशुकभूषणैः दीनेऽनुकम्पया दानं कारागाराद्विमोचनम् ॥ ८८ ॥ चैत्यनिर्मापणं शक्त्या दानं पात्रेषु भक्तितः । लेखनं पुस्तकानां च विधेयं विधिना तदा ॥ ८९ ॥ इदं विदधती वत्से काशिसुकृतक्रमा । मुच्यसे दुःखबन्धेन सुगन्धो नृपतिर्यथा ॥ ९० ॥ किं नाथ पूर्वमप्येतत्केनापि विदधे तपः । त्वया ज्ञानवतात्रैवं दर्शितं यन्निदर्शनम् ॥९१॥ इति दुर्गन्धया पृष्टो मुनीन्दुः पापतापहृत् । ववर्ष वाक्सुधां बोधिबीजद्रुभिन्नमेदिनीम् ॥९२॥ युग्मम् ॥

विषये शकटालाख्ये भरतस्यास्य भूषणे । अस्ति चापलखिन्नश्रीशय्या सिंहपुरं पुरम् ॥९३॥ तत्र चित्रतनुबन्धो

नानामणिगणैरिव । राजा राजमुकुटः सिंहसेन इति श्रुतः ॥ ९४ ॥ तत्प्रिया धूतकनकप्रभाभूत्कनकप्रभा । यन्मुखं लावण्यनीरगत्वेन्दुः श्रीरशिश्रियत् ॥ ९५ ॥ सुतोऽभूद्यारूपोऽपि तयोर्दुर्गन्धदेहवान् । अतो दुर्गन्ध इत्येव पृथ्व्यां नाम पप्रथे ॥ ९६ ॥ न राज्यदानलोभेऽपि तं भेजे भामिनीजनः । वालव्यजनवातेऽपि नामुञ्चन्मक्षिकाश्च तम् ॥ ९७ ॥ आत्मसंचारितश्वासैः शुभनृत्यासनामिकैः । क्रमागतैरपि स्वान्तबलात्सोऽसेवि सेवकैः ॥ ९८ ॥ इति मातृपितृक्लेशोत्कटकष्टोर्मिपातिनि । तस्मिन्मृत्युमपि श्लाघमाने भूजानिजन्मनि ॥ ९९ ॥ हर्षोत्सुक्यभृतो भूरिभूपाभानुरदिग्मुखाः । व्योमगामनपाशासु विद्याधरसुरासुराः ॥११००॥ युग्मम् ॥ षष्ठं जिनेन्द्रं पद्माभं श्रीपद्मप्रभमागतम् । तेभ्यो मत्वा पर्थो नन्तुं स सुतादियुतो नृपः ॥ १ ॥ राजा समवसृत्यां स प्रविश्य विधिवत्ततः । पद्मप्रभप्रभुं नत्वा यथास्थानमुपाविशत् ॥ २ ॥ सुधाम्बुधिरिव स्वामी गम्भीरनिभृतध्वनिः । धर्मोक्तिशीकरैस्तापमपजह्रे शुभात्मनाम् ॥३॥ दुर्गन्धस्य ततः पृष्टे राज्ञा दौर्गन्ध्यकारणे । जज्ञे वाग्मधुमुग्वक्त्रपद्मः पद्मप्रभः प्रभुः ॥ ४ ॥

अथास्ति भरतक्षेत्रे श्रीमन्नागपुरं पुरम् । ततो द्वादशयोजन्याः प्रान्ते नीलगिरिर्गिरिः ॥ ५ ॥ तस्य प्रस्थोपले तस्थौ मोक्तुं मर्यानुग्रहवान् । शमी संयमराड्याख्यो मुनिर्मासोपवासवान् ॥६॥ तस्याद्रेर्मूर्ध्नि पापर्द्धिप्रवर्धितसदारसः । व्याधोऽभून्मृगमारान्तः कोपाक्रान्तः कृतान्तवत् ॥ ७ ॥ भूरिलब्धिभृतस्तस्य प्रभावेण महामुनेः । निलनिःफलपापर्द्धिः सोऽभवन्मृगमारकः ॥ ८ ॥ व्याधस्य कोपलीनस्य तवधं ध्यायतस्ततः । उपत्यकापुरं साधुः पारणाय नगाद्गात् ॥ ९ ॥ इतान्तरे दुरात्मासौ व्याधस्तत्रेन्धनैर्घनैः । प्रज्वाल्याथः शिलां सर्वां व्यपनीयान्यतो गतः

॥ १० ॥ कृतकृत्यो मुनिस्तत्रावबेज्ञात्वायुषः क्षयम् । कर्मान्तं कर्तुमारोहत्यकाहारोऽथ तां शिलाम् ॥ ११ ॥ तस्य विषहमाणस्य तं तापमतिदारुणम् । शुक्लध्यानं वरज्ञानं निर्वाणं च मुनेरभूत् ॥ १२ ॥ व्याधोऽपि तेन पापेन कुष्ठेन विगलत्तनुः । जगाम दुर्गतिं तत्र सप्तमीमुग्रवेदनाम् ॥ १३ ॥ स्वयंभूरमणे मत्सीभूयाथो भूरिपातकः । दीर्घदुःखमयीं प्राप षष्ठीं निरयभूमिकाम् ॥ १४ ॥ सर्पीभूय च पंपीपान्पञ्चमीं दुर्गतिं गतः । सिंहीभूय जगामैष चतुर्थीमथ भूमिकाम् ॥ १५ ॥ पापी द्वीपी बभूवाथ तृतीयं नरकं ययौ । ओतुस्ततो द्वितीयं च बकोऽथ प्रथमं च सः ॥ १६ ॥ चण्डालादिभवेष्वेव भ्रान्त्वा नागपुरेऽजनि । सुतुर्वृषभसेनाख्यो गन्धार्यां गोपयोषितः ॥ १७ ॥ चारयञ्श्रावकाणां गाः सङ्गात्तेषां तु भद्रकः । सोऽगाच्छीलगिरेस्तस्यां दैवाद्दावेन वेष्टितः ॥ १८ ॥ मयापि प्राग्भवे कोऽपि दग्ध इत्यनुतापभाक् । स्मरन्पञ्चनमस्कारमदह्यत दवेन सः ॥ १९ ॥ सुकृतेन ततस्तेन तव भूप सुतोऽभवत् । सोऽयं शेषेण दोषेण महादुर्गन्धविग्रहः ॥२०॥ तयोक्त्या जिनराजस्य राजसूनुर्भयाकुलः । जातिस्मृतिवशाज्जातकम्पः प्राञ्जलिरालपत् ॥ २१ ॥ नाथ नाथ भवाम्भोधेः समुद्धर समुद्धर । तैर्मोक्ष्येऽहं कथं पापैर्निवेद्य निवेद्य ॥ २२ ॥ इदं वदति दीनेऽस्मिन्कृपाराशिर्नृपात्मजे । श्रीजिनो वृजिनद्रोही रोहिणीव्रतमादिशत्॥२३॥ जिनं नत्वाथ सपरीवारः पुरमगान्नृपः । स चकार कुमारस्तु यथोक्तं रोहिणीव्रतम् ॥ २४ ॥ उद्भविष्यन्मुक्तिफले रोहिणीव्रतवल्लिज । पुष्पैरदुर्गन्धः सुगन्धश्च बभूव सः ॥ २५ ॥ प्रीतिपूरपरीतेन पुरि कारयनोत्सवम् । राज्ञास्य विदधे नाम सुगन्ध इति विश्रुतम् ॥२६॥ ततस्त्वमपि कल्याणि कुर्वाणा रोहिणीव्रतम् तद्वद्भविष्यसि भृशं सौख्यसंभारभाजनम् ॥ २७ ॥

इति श्रुत्वा च नत्वा च मुनीन्द्रममृतास्रवम् । निःशोका सह लोकेन दुर्गन्धापि पुरेऽविशत् ॥ २८ ॥ निर्वाणारोहिणी भूतरोहिणीव्रतरोहिणी । दुर्गन्धेनाथ दुर्गन्धामोचि दुःकर्मबन्धुना ॥२९॥ रूपं किमपि बिभ्राणा सा तेन तपसा सती । सुरस्त्रीणामहंकारमिव हन्तुमगाद्दिवम् ॥३०॥ चिरं तत्र विचित्रान्सा भोगान्भुक्त्वा च्युतश्च्युता । चम्पायां मघवत्क्ष्मापलक्ष्मीदेव्योः सुताभवत् ॥३१॥ श्रीमदशोकलोकेश त्वत्प्रिया रोहिणी हि सा । रोहिणीव्रतमाहात्म्याददुःखा सौख्यमागमत् ॥ ३२ ॥ यस्तु पद्मजिनादिष्टं सिषेवे रोहिणीव्रतम् । अथ तस्य सुगन्धस्य स्वरूपं शृणु भूपते ॥ ३३ ॥ नृपं सिंहपुरे कृत्वा तं सुगन्धं स्वनन्दनम् । परिव्रज्याटवीसिंहः सिंहसेनोऽजनि स्वयम् ॥ ३४ ॥ प्रत्यक्षं प्रत्ययं वीक्ष्य दुर्गन्धत्वमनोऽद्भुतम् । शुद्धे धर्मेऽधिकां श्रद्धां सुगन्धो विदधे ध्रुवम्॥३५॥जयन्बलेन बाह्यारीनान्तरारींश्च सक्षमः । चिरं धरित्रीं धर्मं च श्रीधर्मः पर्यपालयत् ॥ ३६ ॥ सद्बोधः श्राद्धधर्मैकध्यानाधानमहाधनः । समाधिमृत्युतः प्राप क्ष्मापतिः स्वर्गसंपदम् ॥३७॥

इतः पूर्वविदेहेऽस्ति विजयः पुष्कलावती । तत्रास्ते नगरी विश्वमण्डनं पुण्डरीकिणी॥३८॥सा शक्रेणेव नाकश्रीकला विमलकीर्तिना । राज्ञापालि पुरा चन्द्रकलाविमलकीर्तिना ॥३९॥ तस्य शास्त्रप्रभा पृथ्वीप्रियस्य हृदयप्रिया । मुखनिर्जिताब्जश्रीः पद्मश्रीः संज्ञयाजनि॥४०॥च्युत्वाथ स्वर्गतो जीवः सुगन्धस्य धरेशितुः । चतुर्दशमहास्वप्नसूचितः समवातरत् ॥ ४१ ॥ महनीयं महादेवी सुपुत्रं सुषुवेऽथ सा । अर्ककीर्तिरिति क्ष्मापस्तस्य नाम विनिर्ममे ॥ ४२ ॥ स कीर्तिकौमुदीकौमुदचन्द्र इव व्यभात् । गुना तेन समग्राहि समया हि कलावलिः ॥४३॥ ब्रह्मचारी विनाशं ...

केलिषु । आसीत्तस्य कुमारस्य मेघसेनाभिधः सुहृत् ॥ ४४ ॥ इतश्च मथुरापुर्यामुत्तराभाजि मन्दरः । श्रेष्ठिसागरदत्तस्य लक्ष्मीवत्यां सुतोऽभवत् ॥४५॥ वणिग्दक्षिणदिग्भाजि मथुरायामभूत्पुनः । नन्दिमित्राभिधः श्रेष्ठी सुभद्राख्या च तत्प्रिया ॥ ४६ ॥ ददाते मन्दराय स्वे नन्दिमित्रेण कन्यके । विश्रुते कमलश्रीश्च गुणमाला च सद्गुणैः ॥ ४७ ॥ अर्ककीर्तिकुमारस्ते मारकीर्तिश्रियाविव । सुहृदा मेघसेनेन रूपलोभादहारयत् ॥ ४८ ॥ राजा विमलकीर्तिस्तद्विज्ञाय श्रेष्ठिनो मुखात् । विमोच्य कन्यके लोकमशोकमकरोत्ततः॥४९॥यः प्रजां पीडयत्येवं किं तेनेति नृपो नयी । तदा तदागमात् पुत्रं समित्रं निरकामयत् ॥ ५० ॥ जलस्थलखदेवीनामपि दृष्टीर्विलोभयन् । वीतशोकां पुरीमर्ककीर्तिर्मित्रयुतो ययौ ॥५१ ॥ नृपालिमालितोद्यानामर्ककीर्तिर्विलोक्य ताम् । किमेतदिति पप्रच्छ नरं कंचिदुवाच सः ॥५२॥ राजास्तीह श्रियामुत्साहनो विमलवाहनः । गुरुणा धीगुणेनासिर्यस्याहिंसाव्रती कृतः ॥ ५३ ॥ दिशुते सुप्रभा नाम सत्प्रभाधाम तत्प्रिया । जाने यद्रूपनिष्पत्तौ विधातापि चमत्कृतः ॥ ५४ ॥ अनयोस्तनयास्ति श्रीरिव सारमहीभुजः । नाम्ना जयवती धाम्ना हेम्नामिव समुच्चयः ॥ ५५ ॥ सत्यसत्यदैवज्ञादिष्टज्ञानवशंवदः । नृपः प्रत्यशृणोद्दातुं तां राधावेधवेधसे ॥ ५६ ॥ तद्भूभुजो भुजोद्दर्पाः कन्दर्पाज्ञावशंवदाः । के केऽत्र नागमन्नाम राधावेधविधायिनः ॥ ५७ ॥ इति मत्वा प्रमुदितः समित्रो नृपनन्दनः । ययौ तत्र द्रुतं राधायन्त्रं यत्र प्रपञ्चितम् ॥५८॥ तत्र यन्त्रं भ्रमिश्रान्तमिवातुलतृपाकुलम् । सर्वेषामपि भूपानां पपौ कीर्तिमयं पयः ॥५९॥ चमत्कारं हृदि म्लानिमानने भूभुजां सृजन् । उत्कीर्तिरर्ककीर्तिस्तु राधावेधविधिं व्यधात् ॥६०॥ पर्यणैषीज्जयवतीमसौ समानुजान्विताम् । अर्ककीर्तिस्ततः प्राचीमिवार्कः

मतद्विगुनाम् ॥ ६१ ॥ तत्र तस्थौ चिरं भोगभरादनुभवन्सुखम् । कलत्रैरष्टभिः सोऽब्जपत्रैरिव मधुव्रतः ॥ ६२ ॥
गिमन्नाद्रौ जिनं नन्तुं गतोऽन्येद्युर्वृतो जनैः । जिनार्चारचनैः श्रान्तो रात्रौ सुष्वाप तत्र सः ॥६३॥ गिरावागतया तत्र
केनापि विप्रलेपगा । कुमारेन्द्रः सनिद्रस्तु हृतो रूपानुरक्तया ॥ ६४ ॥ वैताढ्यमूर्ध्नि तं क्षीणनिद्रं वीक्ष्य रुषारुणम् ।
सा सिद्धायतने मुक्त्वापहारभयभागगात् ॥ ६५ ॥ द्राक्सिद्धायतने वज्रकपाटैरुदघट्यत । तस्मिन्दृष्टे स्वयं पद्मपत्रैरिव
विगमनि ॥ ६६ ॥ हर्षसंभ्रमनिर्भरद्दृरितो नृपनन्दनः । ततः प्रणमतत्सिद्धान्सिद्धायतनवर्तिनः ॥ ६७ ॥ तत्र नत्वाथ
तं प्राह पुमान्कश्चित्कृताञ्जलिः । अत्रैताढ्योऽमलक्ष्मीर्वैताढ्योऽयं गिरिः प्रभो ॥ ६८ ॥
इहाशनपुरं नाम पुरमास्ते रमास्पदम् । राजा पवनवेगोऽत्र वैरिगोत्रदवानलः ॥६९॥तस्य चित्तप्रिया चित्तवेगाख्या-
स्ति मरागुणम् । तत्सुता गतशोका च रूपे वाचामगोचरः॥७०॥को भविष्यति भर्तास्याः सुताया इति भूभुजा । पृष्टः
प्राह त्रिकालज्ञः पुरापि मन्दगप्रदः॥७१॥रूपानुरक्तया दूराद्विद्याधर्या हृतः प्रभो । भविष्यचक्रवर्तीति पुत्र्या भर्ता भविष्यति
॥७२॥ ज्ञानगः स त्रिकालज्ञ कां नरशिरोमणिः । इति मौहूर्तिकं भूपः पप्रच्छातुच्छसंमदः॥७३॥सिद्धकूटे कपाटानां
मात्वे यस्योद्घटिष्यते । अस्याः पतिः स भावीति राज्ञे दैवज्ञकोऽदिशत्॥७४॥तं ज्ञातुमिह राज्ञाहं दिष्टो दृष्टोऽसि तच्चिरात्
मत्वेहि गेहिनी तेऽस्तु सराज्ञा देहिनीव मा॥७५॥ इत्याकर्ण्य कुमारेन्दुः समं तेनैव सोऽचलत् । तेन विज्ञापितश्चागा-
त्संमुखं खेचरेश्वरः॥७६॥उत्सवेन प्रवेश्याथ कुमारं पुरि खेचरः । प्रीतो विवाहयामास सुतया गतशोकया॥७७॥हृष्टेन
तेन जामात्रा काममात्राधिकश्रिया । प्राप प्रीतेः परां कोटिमखिलः खेचरान्वयः॥७८॥इत्यादिविद्यार्तं कन्याः खेचरेः-

परैरपि । स व्युवाह स्मरक्ष्मापन्नृलक्षणकला इव ॥७९॥ पञ्चवर्षीमसौ हर्षी तत्र स्थित्वोपभोगभाक् । विद्याधरेन्द्रमापृच्छ्य लब्धविद्याचयोऽचलत् ॥ ८० ॥ कमलाकरमाकाशं कुर्वन्कान्तामुखैरसौ। ययौ रथविमानाश्वद्विपस्थैः खेचरैर्वृतः ॥८१॥ भग्नस्तम्भेन मदिना पार्श्वेऽञ्जनगिरेर्जनम् । दुर्दमेन द्विपेन्द्रेण दम्यमाने ददर्श सः ॥ ८२ ॥ अथोत्तीर्याम्बरादर्ककीर्तिरर्क इव द्रुतम् । ध्वान्ताधिदैवतमिव द्विपाधीशं वशं व्यधात् ॥८३॥ प्रभञ्जनोऽञ्जनगिरिस्वामी ज्ञानिवचःस्मृतेः । ददौ तदास्मै मदनावल्याद्या अष्ट कन्यकाः ॥ ८४ ॥ प्रभञ्जनमुदे तत्र स्थित्वाल्पं वैरिभञ्जनः । वीतशोकां पुरीं लोकदृक्लताम्बुदस्थितिर्ययौ ॥ ८५ ॥ अथाप्तजयवलादिपरीवारः पुरीमगात् । स पुण्डरीकिणीं तातकीर्तिभिः पुण्डरीकिणीम् ॥ ८६ ॥ अल्पानल्पस्फुरच्चक्रयुगैर्धुर्योद्गुरगर्दभैः । शाकटैरेकटक्कुब्जखञ्जतुन्दिलखेटकैः ॥ ८७ ॥ कर्पूरखटिकानीलीकस्तूरीहेमपित्तलैः । भाण्डैरन्यैरपि भृतैः संमिश्रैरुत्तमाधमैः ॥८८॥ स पञ्चवर्णपञ्चाङ्गः पञ्चवर्णशिरोरुहः । कौतुकादर्ककीर्तिस्तां वणिग्भूयाविशत्पुरीम्॥८९॥त्रिभिर्विशेषकम्॥तेन तेन स्वरूपेण भाण्डैस्तैस्तैश्च ढौकितैः । आराजरङ्कं स पुरं चक्रे सोत्प्रासविस्मयम् ॥९०॥ ततस्तस्कररूपेण हृत्वा नगरगोधनम् । अयं व्यधान्मृधाधिक्य भूधनेनानुधाविना॥९१॥ हयोर्मिभिर्महीपालसैन्यसिन्धोः प्रसर्पतः । अर्ककीर्तिशरा भेजुर्मर्यादावह्लितुल्यताम्॥९२॥जयिनो बहवस्तेन स्वहस्तेन निवारिताः । एकेन ते विवेकेन दूरं दोषगणा इव॥९३॥एकोऽप्ययं मया भूरिसैन्येनापि न जीयते । धिग्धिग्मत्पौरुषमिति ध्यायंश्च धराधवः ॥९४॥ विज्ञप्तो मेघसेनेन स्वामिन्मोदस्व मा शुचः । अयं स्वं ज्ञापयत्यर्ककीर्तिर्विक्रमढौकनः ॥ ९५ ॥ त्रिभिर्विशेषकम् ॥ इति श्रुत्वा प्रमोदाब्धिशीकरायितदृग्जलः । उत्पेत्य , सुतमालिङ्गन्निजरूपस्थमानतम्

ममदिग्गुनाम् ॥ ६१ ॥ तत्र तस्थौ चिरं भोगभरादनुभवन्सुखम् । कलत्रैरष्टभिः सोऽब्जपत्रैरिव मधुव्रतः ॥ ६२ ॥ सिमन्तात्रौ जिनं नन्तुं गतोऽन्येद्युर्वृतो जनैः । जिनार्चारचनैः श्रान्तो रात्रौ सुष्वाप तत्र सः ॥६३॥ गिरावागतया तत्र खेचर्या निद्रछेदया । कुमारेन्द्रः सनिद्रस्तु हृतो रूपानुरक्तया ॥ ६४ ॥ वैताढ्यमूर्ध्नि तं क्षीणनिद्रं वीक्ष्य रुषारुणाम् । सा सिद्धायतने मुक्त्वापहारभयभाग्ययौ ॥ ६५ ॥ द्वात्रिंसद्धायतने वज्रकपाटैरुदघट्यत । तस्मिन्दृष्टे स्वयं पद्मपत्रैरिव निमानि ॥ ६६ ॥ हर्षमंदं मनिर्भमदुरितो नृपनन्दनः । ततः प्रणयपतत्सिद्धान्सिद्धायतनवर्तिनः ॥ ६७ ॥ तत्र नत्वार्थं सं प्राह पुमान्कश्चित्कृताञ्जलिः । अर्हताढ्योल्लसल्लक्ष्मीर्वैताढ्योऽयं गिरिः प्रभो ॥ ६८ ॥

इहाम्बरपुरं नाम पुरमास्ते रमास्पदम् । राजा पवनवेगोऽत्र वैरिगोत्रदवानलः॥६९॥तस्य चित्तप्रिया चित्तवेगाख्या-स्ति प्रियायुगम् । तत्सुता गतशोका च रूपे वाचामगोचरः॥७०॥को भविष्यति भर्तास्याः सुतायाः इति भूभुजा । पृष्टः प्राह त्रिकालज्ञः पुरापि मन्दधमदः॥७१॥रूपानुरक्तया दूराद्विद्याधर्या हृतः प्रभो । भविष्यचक्रवर्तीति पुण्या भर्ता भविष्यति ॥७२॥ ज्ञानगः स त्रिकालज्ञ कथं नरशिरोमणिः । इति मौहूर्तिकं भूपः पप्रच्छात्युच्चसंमदः॥७३॥सिद्धकूटे कपाटाभ्यां प्रासे यत्रोद्धटिष्यते । अस्याः पतिः स भवीति राज्ञे दैवज्ञकोऽदिशत्॥७४॥तं ज्ञातुमिह राज्ञाहं दिष्टो दृष्टोऽसि तच्चिरात् तदेहि मेदिनी तेऽस्तु स्मराज्ञा देहिनीव मा॥७५॥ इत्याकर्ण्य कुमारेन्दुः समं तेनैव सोऽचलत् । तेन विज्ञापितश्चागा-त्संमुखं खेचरेश्वरः॥७६॥उत्सवेन प्रवेश्याथ कुमारं पुरि खेचरः । प्रीतो विवाहयामास सुतया गतशोकया॥७७॥हृष्टेन तेन जामात्रा काममात्रात्रिकत्रिया । प्राप प्रीतेः परां कोटिमखिलः खेचरान्वयः॥७८॥दत्ताश्रिवितानं कन्याः खेचरैर-

परैरपि । मान्युवाह सरक्षमापत्नलक्षणकला इव ॥७९॥ पञ्चवर्षीमसौ हर्षी तत्र स्थित्वोपभोगवान् । [illegible]
पृथ्व्यध लब्धविद्याचयोऽचलत् ॥ ८० ॥ कमलाकरमाकाशं कुर्वन्कान्तामुखैरसौ। ययौ रथविमानाश्वद्विपस्थैः खेचरैर्वृतः
॥८१॥ भग्नस्तम्भेन मदिना पार्श्वेऽञ्जनगिरेर्जनम् । दुर्दमेन द्विपेन्द्रेण दम्यमानं ददर्श सः ॥ ८२ ॥ अथोत्तीर्याम्बरादर्क-
कीर्तिरर्क इव द्रुतम् । ध्वान्ताभिर्दैवतमिव द्विपाधीशं वशं व्यधात् ॥८३॥ प्रभञ्जनोऽञ्जनगिरिस्वामी ज्ञानिवचःस्मृतेः ।
ददौ तदास्मै मदनावल्याद्या अष्ट कन्यकाः ॥ ८४ ॥ प्रभञ्जनमुदे तत्र स्थित्वाल्पं वैरिभञ्जनः । वीतशोकां पुरीं लोक-
दृग्लताभ्युत्थितिर्ययौ ॥ ८५ ॥ अथात्तजयवल्यादिपरीवारः पुरीमगात् । स पुण्डरीकिणीं तातकीर्तिभिः पुण्डरीकिणीम्
॥ ८६ ॥ अल्पानलस्फुरच्चमयुगैर्धुर्योष्ट्रगर्दभैः । शकटैरेकटक्कुब्जखञ्जतुन्दिलखेटकैः ॥ ८७ ॥ कर्पूरखटिकानीली-
कस्तूरीहेमपित्तलैः । भाण्डैरन्यैरपि भृतैः संमिश्रैरुत्तमाधमैः ॥८८॥ स पञ्चवर्णपश्चाङ्गः पञ्चवर्णशिरोरुहः । कौतुकादर्क-
कीर्तिस्तां वणिग्भूयाविशत्पुरीम्॥८९॥त्रिभिर्विशेषकम्॥तेन तेन स्वरूपेण भाण्डैस्तैस्तैश्च ढौकितैः । आराजरङ्कं स पुरं
चक्रे सोत्प्रासविस्मयम् ॥९०॥ ततस्तस्कररूपेण हृत्वा नगरगोधनम् । अयं व्यधान्मृधाधिक्यं भूधनेनानुधाविना॥९१॥
हयोर्मिभिर्महीपालसैन्यसिन्धोः प्रसर्पतः । अर्ककीर्तिशरा भेजुर्मर्यादावल्लितुल्यताम्॥९२॥जयिनो यद्वयस्तेन स्वहस्तेन
निवारिताः । एकेन ते विवेकेन दूरं दोषगणा इव॥९३॥एकोऽप्ययं मया भूरिसैन्येनापि न जीयते । धिग्धिग्मत्पौरुष-
मिति ध्यायश्च धराधवः ॥९४॥ विज्ञप्तो मेघसेनेन स्वामिन्मोदस्व मा शुचः । अयं त्वां ज्ञापयत्यर्ककीर्तिर्विक्रमढौकनः
॥ ९५ ॥ त्रिभिर्विशेषकम् ॥ इति श्रुत्वा प्रमोदाब्धिशीकरायितदृग्जलः । उत्प्रेत्य सुतमालिङ्गन्निजरूपस्थमानतम्

॥ ९६ ॥ पुरप्रवेशपूर्वं स राज्यमेनाथ सूनवे । राजा चिरागममीतिप्रदातव्यपदे ददौ ॥ ९७ ॥ श्रीवासुपूज्यपादान्ते स सामन्तसाहस्रभाक् । व्रतमादाय भूजानिर्मुक्तिजानिरजायत ॥९८॥ एताः प्रजा न मोदन्ते विना विमलकीर्तिना । इतीयासौ यमारार्ककीर्तिर्विमलकीर्तिताम् ॥९९॥ निशास्वपि प्रतापार्को दिनेष्वपि यशःशशी । अक्रीडतां जगत्क्रोडे यस्य सम्वैकषिम्मयः ॥ १२०० ॥ कृतं लक्षैरिवाग्नीनां कोटीभिरिव भास्वताम् । दीप्तमायुधशालायां चक्रमस्योदपद्यत ॥१॥ अथाथाय रथाङ्गस्य महिमानं महोत्सवैः । उत्पन्नसर्वरत्नश्रीकन्धिष्णुचमुचयः ॥२॥ जिनार्चावसरैर्लुप्तप्रयाणावसराशुभम् । क्रमाज्जिगाय षट्खण्डमवनीमण्डलं नृपः ॥ ३ ॥ युग्मम् ॥ ततः पुरं स्फुरज्जैनालयमण्डलमण्डनम् । स पुण्डरीकीर्णी चक्रे नवद्वादशयोजनाम् ॥ ४ ॥ सोऽजीजनज्जिनगृहान्ग्रामे ग्रामे पुरे पुरे । मार्गानिव सतां मुक्तिगमनेच्छाभृतां नृपः ॥ ५ ॥ स मदोन्मुदितामुर्वीमेवं निर्माय निर्मदः । कृतकृत्यमिवात्मानममन्यत महामतिः ॥ ६ ॥ श्रामण्यं सोऽन्यदा श्रुत्वा जिनशत्रुमुनेर्मुखात् । सुकृतेभ्यः कृती पूर्वकृतेभ्यो बहमन्यत ॥ ७ ॥ बलात्पृष्ट्वा कलत्राणि पुत्रान्मित्राणि मन्त्रिणः । पुत्रं धवलकीर्तिं स राज्ये न्यस्यादित व्रतम् ॥८॥ अर्ककीर्तिस्तपस्तैक्ष्ण्यादर्ककीर्तिमवाप्य सः । ययौ मृत्वाच्युते कल्पे शक्रकल्पेन तेजसा ॥९॥ मुक्तभोगभरः श्रीमानच्युतप्रच्युतः स च । राजन्नशोक निःशोकभावभूमिभवानभूत् ॥ १० ॥ एकेन रोहिणीसंज्ञतपसार्जितपुण्ययोः । दम्पत्योर्युवयोः प्रेमबन्धो निरवधिस्ततः ॥ ११ ॥ रोहिणीतपसस्तस्य प्रभावाद्युवयोरभूत् । एवं सौभाग्यभाग्यश्रीर्भुवनाभोगभास्वरा ॥१२॥ एवं प्रभावमुत्क्राम्य भव्यैः सेव्यमिदं व्रतम् । निर्दुःखसुखसिद्धपर्वमुपवासैर्यथाविधि ॥१३॥ आचाम्लैर्निर्विकृतिकैरपीदं रोहिणीव्रतम् । उपवासाक्षमैः

सेव्यं ह्यथोद्यापनमात्मभिः ॥ १४ ॥

इत्यकथ्यत वां भूप भवान्तरकथा पृथुः । इदानीं त्वदपत्यानां वदानि प्राग्भवं भवम् ॥ १५ ॥

आस्ते पृथिव्या नेपथ्यं प्रथिता मथुरेति पूः । सिञ्चन्वीररसेनोर्वीं वीरसेनो ररक्ष ताम् ॥ १६ ॥ विप्रोऽग्निशर्मा तत्राभूत्सावित्रीति च तत्प्रिया । अभूवन्सूनवः सप्त शिवशर्मा दयस्तयोः ॥१७॥ययुर्भद्रकभावास्ते दूना दारिद्र्यमुद्रया । धनार्जनार्थं सप्तापि पाटलीपुत्रपत्तनम् ॥ १८ ॥ श्रीसिंहवाहनो नाम तत्र प्रभुरभूत्तदा । कमलश्रीतनूजस्तु तत्पुत्रो हरिवाहनः ॥ १९ ॥ कन्यां कनकमालाख्यां वसुमित्रमहीपतेः । तदा पर्यणयत्तत्र महर्द्ध्या हरिवाहनः ॥ २० ॥ तां महर्द्धिमिहालोक्य निजदौःस्थ्येन दुःखिताः । कनिष्ठाः षड् तदा ज्येष्ठं शिवशर्माणमूचिरे ॥ २१ ॥ आर्य पश्य विरिञ्चस्य केयं केलिविचित्रता । सामान्येऽपि मनुष्यत्वे करोति कियदन्तरम् ॥ १२ ॥ विवाहेऽस्मिन्नमी लोका महाहस्तिहयाश्रयाः । निःपादुकौ तु नः पादौ दूयेते पट्टकण्टकैः ॥ २३ ॥ प्रत्येकमेषां यावन्तो भूषामुक्ताकणास्तनौ । तावन्तो भोक्तुमस्माकं न जोनालकणा अपि।२४।एषां वस्त्रैकतन्तोर्यन्मूल्यं तन्न लगिष्यति । यावज्जीवितमस्माभिर्धार्यमाणां वाससामपि ॥ २५ ॥ तत्किं दास्यन्ति महिषीममी तस्मै विरिञ्चये । ईदृग्ददौ यदेतेषामस्माकं तु न किंचन ॥ २६ ॥ तानूचे शिवशर्माथ किमुपालभ्यते विधिः । उपालभ्योऽयमात्मैव यः प्राग्धर्मं न निर्ममे ॥ २७ ॥ प्रागनिर्मितधर्माणां श्रीर्नास्माकमिहाभवत् । नेहापि कुर्महे धर्मं सा नाग्रेऽपि भविष्यति ॥२८॥ उपशान्तहृदस्तेऽपि तद्गिरा स्मोद्गिरन्ति गाम् । आर्य कार्यस्तदस्माभिर्धर्मस्तत्कर्म कथ्याताम् ॥ २९ ॥ शिवशर्मा पुनर्मायाविमुक्तं वाक्यमुक्तवान् कुतोऽपि

मद्गुरोर्जगो धर्मः सोऽमेयशर्मकृत् ॥ ३० ॥ तयामः कन्दिरारामगिरिगह्वरभूमिषु । सामान्यजनमान्यासु क्ष्मासु दृश्यो न मद्गुरुः ॥ ३१ ॥ इत्यमी निर्ययुः पुरीं ददृशुश्च वने मुनिम् । मनोरथोऽपि धर्मस्य कल्पते कल्पपादपः ॥ ३२ ॥ तं दिशन्तं दशविधयतधर्मविधीन्सुधीः । शिवशर्माथ सद्मोपानमतस्त सोदरैः ॥३३॥ श्रुतधर्मा व्रतं प्राप्य शिवशर्मा तपस्ततः । तपस्तापेन सौधर्मं भेजुः सुखसुधासरः ॥३४॥

भद्रक्षुद्रकनामा च वैताढ्येऽत्रैव भारते । खेचरोऽजनि जैनेन्द्रधर्मारामैकषट्पदः ॥३५॥ त्यदपादन्वहं स्तोकीकृतकर्मभरः । जिनगाथोरमत्र पञ्चदशकर्ममहीषु सः॥३६॥स धर्मरतिरुत्कण्ठाकुण्ठविघ्नकदम्बकः । यत्र यत्राशकन्नन्तुं तत्र तत्रानमज्जिनान् ॥ ३७ ॥ शुद्धश्राद्धव्रताम्भोजखण्डमार्तण्डमण्डलः । खेचरः सोऽपि सौधर्मकल्पस्याकल्पतां गतः ॥ ३८ ॥ इतश्च जम्बूद्वीपे प्राग्विदेहे दक्षिणादिशि । अभूद्गरुडवेगाख्यो वैताढ्ये खेचरेश्वरः ॥ ३९ ॥ कमलश्रीमुखी तस्य कमलश्रीः प्रियाजनि । पद्मश्रीमुख्याः पुत्र्यश्चतस्रो जज्ञिरे तयोः ॥ ४० ॥ वनावनिगतास्तत्र चतस्रोऽपि निरीक्ष्य ताः । समाधिगुप्तनामानमानमन्मुनिमुन्मुदः ॥४१॥ अल्पायुष्कं मुनिस्तासां मत्वा तत्तारणैकधीः । तत्पञ्चमीतिथिदिनं ज्ञात्वा चेदमचीकथत् ॥ ४२ ॥ ज्ञानपञ्चम्यपञ्चम्यामुपवासः क्रियेत यः । भवन्त्यनन्यसामान्या भोगास्तत्फलमुज्ज्वलम् ॥ ४३ ॥ उपवासः स पञ्चमैः कृतकर्मशमः क्रमात् । याति स्वर्गापवर्गश्रीसुखदाननिदानताम् ॥ ४४ ॥ इति श्रुत्वा चतस्रस्तां गृहीत्वा पञ्चमीव्रतम् । कृतकृत्यमिवात्मानं मन्वानाः सद्मनेऽचलन् ॥ ४५ ॥ विद्युत्पातेन पथि तां मैथिता-भिरिवं ययुः । ततश्च्युत्वा नृपश्रेष्ठ भवदुहितरोऽभवन् ॥४६॥शिवशर्मादयः स्वर्गाच्च्युतास्ते सूनवस्तव । बभूवः स च

पुण्यात्मा खेचरश्चरमः सुतः ॥४७॥ इति पूर्वभवश्रुत्या जातिस्मृतिमवाप्य ते । श्रावकं धर्ममासाद्याशोकाद्याः स्वाश्रयं
ययुः ॥ ४८ ॥ भूपेऽन्यदा सभाभाजि धर्मभादमृतगर्जिवत् । ध्वानयन्वियदध्वानं दिव्यो दध्वान दुन्दुभिः ॥ ४९ ॥
नृपस्तद्ध्वनये वासुपूज्यागमनशंसिने । दूरोच्छ्वासाङ्गलग्नानि भूषणानि ददाविव ॥ ५० ॥ हित्वा सिंहासनं दत्त्वा
पञ्चपाणि पदान्यथ । ननाम भूपः ककुभं प्रभुपादपवित्रिताम् ॥ ५१ ॥ उद्घास्वदुत्सवोत्साहं कृत्वा नागपुरं पुरम् ।
पुत्रमित्रकलत्राणि समाहूय ससंमदः ॥ ५२ ॥ शृङ्गारसारमातङ्गतुरङ्गारूढसज्जनः । भूपः प्रभुं ययौ गायन्नृत्यद्ध्वजो-
घमध्यगः ॥ ५३ ॥ युग्मम् ॥ भूपः पुण्यार्णवावर्तमध्यवर्तीव स भ्रमन् । प्रभुं प्रदक्षिणीकृत्य प्रणम्योपाविशत्पुरः
॥ ५४ ॥ कर्णपेयां सुधां वर्षन्नथ तीर्थेशनोऽवदत् । कर्णेन्द्रियसुखं नो केन लोकेनाङ्गेषु काङ्क्षितम् ॥ ५५ ॥ बहुन्मध्येऽ-
धिकं रागं नीरागोऽन्तेऽपि नैव यः । नरो न रोचते मुक्त्यै सकुसुम्भमिवांशुकम् ॥ ५६ ॥ चला इति चलाक्षीभ्यश्चिरं
कर्षन्नमर्पतः । आलिङ्ग्यते नरो मुक्त्या जराजीर्णोऽप्यनीर्ष्यया ॥ ५७ ॥ इत्यादिभिर्जगद्भर्तुरुपदेशैः प्रशान्तधीः ।
राज्ये न्यस्य सुतं राजा भेजे भार्यान्वितो व्रतम् ॥५८॥ विहरन्विभुना साकमशोकाख्यो मुनिर्महीम् । सापत्न्यया समं
पत्न्या मुक्तिं भुक्ततपा ययौ ॥ ५९ ॥

इति रोहिणीकथा समाप्ता ॥

प्रथितां वीरनाथेन श्रेणिकस्य पुरः पुरा । यामकार्षीदुमास्वातिः कथा सेत्थमिहोदिता ॥ ६० ॥ ततोऽवसर्पिणी
तापविपुलव्यापदो भुवः । कुर्वञ्शैत्यौषधमिव क्रमसंचारिवारिजैः ॥ ६१ ॥ प्रभुसमान्तरं चक्षुर्जनानां मोहनिद्रया ।

समुत्सारयन्दिग्गवृन्दुभिध्वनिडम्बरैः ॥ ६२ ॥ यो मां श्रयति तं दुःस्थाग्रक्षामीलयगामिना। धर्मध्वजोर्ध्वदोष्णेव धर्मेणोत्कभावनः ॥ ६३ ॥ ज्ञानस्य केवलाख्यस्य ज्ञानेषु सकलेष्वपि। सर्वता धर्मचक्रेण स्पष्टयंश्चक्रवर्तिताम् ॥ ६४ ॥ त्रिलोकीदुरितध्वान्तभिदे तुल्योदयस्पृशाम्। छत्रत्रयेन्दुबिम्बानां जङ्गमः पूर्वपर्वतः ॥ ६५ ॥ ज्ञानध्यानविभूतिभ्यां चामरच्छद्मतश्चलात्। कीर्तिपुण्यपटप्रान्तदशाभ्यामिव वीजितः ॥ ६६ ॥ अमी एव सहन्तेऽङ्घ्रिभारं विश्वगुरोरिति। पुण्यस्पृश्या हर्षेषु सर्वदेशेषु संचरन् ॥ ६७ ॥ शुद्धश्रद्धारसैः पौरैर्ग्राम्यैरुद्दामकौतुकैः। विमुक्तान्योन्यपशुभ्यैः पशूनामपि राशिभिः ॥ ६८ ॥ मूकीकृतनदीवृन्दैः शैलरण्याधिदेवतैः। पारावाराधिदेवीभिर्निरुद्धध्वनदूर्मिभिः ॥ ६९ ॥ स्थानस्थानोपगताश्चर्यैरमरैः सहचारिभिः। स्लाघ्यमानं प्रभुर्धर्मोपदेशं रचयन्क्रमात् ॥ ७० ॥ पुरः पुरः स्फुरद्भक्तिक्रियमाणमहोत्सवः। देशानार्याननार्यांश्च विहारेण व्यभूषयत् ॥७१॥ एकादशभिः कुलकम्॥ अथ यत्र महातीर्थराजमाजि पदे पदे। अमुत्रोऽभूत्समुद्रोऽपि कार्ण्यं हन्तुमिवात्मनः ॥ ७२ ॥ शत्रुञ्जयोऽयन्त्याख्यतीर्थभूधरसंभवाः। यं शुचिं स्पयन्त्युधैः परितः सरितः शुभाः ॥ ७३ ॥ दीप्तिर्दिनदिनेन्दूनां मज्जतां पश्चिमार्णवे। पृथग्भूतेव यत्रास्ति सरोजान्जलच्छलात् ॥ ७४ ॥ पादाः पातालपीयूषकुण्डैरासां सिषेचिरे। यस्मिन्निल्लाह्वरस्ताग्रवापीः पीताम्भसो जनाः ॥ ७५ ॥ मदाकल्पद्रुमैर्यस्याकालफलद्रुमम्। आनन्दनैर्वनैर्यस्य हस्यते नन्दनं वनम् ॥ ७६ ॥ गिरयो निरयोद्दामदुःस्थानुदर्तुमर्हिनः। गङ्गाद्यनिम्नविष्टाग्राः प्रेक्ष्यन्ते तीर्थमानिनः ॥७७॥ नालिकेरीफलस्तन्यः कृपगम्भीरनाभयः। मसास्पलीकृतमुग्धा यद्रास्तः कस्य न प्रियाः ॥ ७८ ॥ यत्केदारोऽशस्तममां रहस्येनेव निर्मितः। निषेधतीव नेत्राणां पदार्थ-

शतदर्शनम् ॥ ७९ ॥ या नेत्रैः प्रकृतिमायैः पिबन्तीव नृणां मनः । वाग्भिः सुधामनोज्ञाभिर्जीवयन्तीव मन्मथम् ॥८०॥ यासां वर्धयतीवास्यशशी संसारसागरम् । तमेवालङ्करोतीव बन्धुरोऽधरविद्रुमः ॥ ८१ ॥ संध्यारागरुचिर्यासां पाणिपादप्रभाभरः । स्त्रीलोकनिन्दास्वाध्याये रुणद्धीव मुनीनपि ॥ ८२ ॥ स्वर्णरत्नैः कृतं यासां दैवादकठिनैरिव । संसारदूषणान्यङ्गं विदधातीव तेजसा ॥८३॥ ताभिर्यद्ग्रामरामाभिर्जिता इव सुरस्त्रियः । न लभन्ते प्रियैः सार्धं निद्रां चिन्ताकुला इव ॥ ८४ ॥ तं देशं श्रीसुराष्ट्राख्यं सुरासुरवृतो विभुः । पुनः पवित्रयामास विहारक्रमलीलया ॥८५॥ चतुर्दशभिः कुलकम् ॥ द्रुमाः स्वदानश्रीसङ्गसेविनो यत्तटीजुषः । मन्ये पूर्णायुषः कल्पद्रुमाः स्युर्दिवि दानिनः ॥८६॥ दर्शनादादिदेवस्य साधुस्वाध्यायकर्णनात् । यत्तिर्यञ्चोऽपि पुण्याप्त्या हसन्ति क्षुपतीनपि ॥८७॥ जगद्गुरुस्तमारोहदुच्चैः शत्रुञ्जयाचलम् । स्वोप्तं भुवि सुनिष्पन्नं धर्मक्षेत्रमिवेक्षितुम् ॥ ८८ ॥ त्रिभिर्विशेषकम् ॥ ताहक्समवसारश्रीभूषणो भगवानथ । मोहादिमूर्छितं विश्वं वाक्सुधाभिरजीवयत् ॥८९॥ पूर्वं प्रबोधितोऽप्येष देशः पूज्यैरलंकृतः । अमुमेवाद्रिमारोढु तदस्यादिश्यतां गुणः ॥९० ॥ इति बद्धाञ्जलौ श्रद्धाजलौघविमलात्मनि । क्षुपतौ पृच्छति स्वामी श्रुतिभाग्यफलं जगौ ॥ ९१ ॥ युग्मम् ॥ धर्मकल्पद्रुमोद्यानं धर्मकामगवीकुलम् । यं श्रितैर्दृश्यते धर्मचिन्तामणिमहाकरः ॥ ९२॥ महद्भ्योऽपि महीयान्यो यत्रारूढैर्भवार्णवः । दृश्येत गोपदप्रायो मुक्तिः स्पृश्येत पाणिना ॥९३॥ आद्यं लोकाग्रगमने सोपानं समवाप्य यम् । असिध्यन्पुण्डरीकाद्या मुनयः कोटिकोटयः॥९४॥धिग्मुक्तिक्षेत्रभावं मेऽद्याप्यनन्ता हि जन्तवः । आर्ता भवे भ्रमन्तीति निर्झरै रोदितीव यः ॥९५॥ अहो अस्य सुदुर्भेदः कश्चित्कठिनतागुणः । आत्मा त्यक्ततनुर्यत्र न

भ्रमः स्याद्योगतो ॥ ९६ ॥ क्रूराशयाः क्रूरगिरः कृष्णाः शौचवर्जिश्वराः । पापस्येव चरा यस्मिन्न पदं ददति द्विकाः
॥ ९७ ॥ हिमाद्रौ करियानैर पद्मैवाचलराजता । आद्यो जगद्गुरुर्यत्र तिलकाय स्वयं स्थितः ॥ ९८ ॥ सर्वज्ञा अपि
तस्याभ्र गिरेर्नेशा गुणोक्तिषु । आयुस्तेषामपि मितं क्रमोऽयं च यतो वचः ॥ ९९ ॥ अष्टभिः कुलकम् ॥ इत्यादिश्यां-
न्तर्धेऽद्रि देवच्छन्देऽधिशाश्रिभुः । स्वं स्वं स्थानं पुनः सर्वे तिर्यग्मर्त्यव्रजा ययुः॥१३००॥ अस्वप्नत्वफलं किं न गृह्णा-
मीति स्मरन्हरिः । निशि नाभेयमभ्यर्च्य प्रारेभे प्रेक्षणं पुरः ॥ १ ॥ ततादिकचतुर्वाद्यममहस्तकहेलया । चतुर्गतिक-
संसारस्यामायेनं सुरा जगुः ॥ २ ॥ ते च पञ्चमुखेनेव पञ्चशब्देन चञ्चता । वाद्येन चक्रिरे पञ्चमहापापेभपञ्चताम्
॥ ३ ॥ मदामृदङ्गोंकारः स कश्चन तदाभवत् । श्रोतुर्जनस्य येनाशु श्लथिलाः कर्मसंचयः ॥ ४ ॥ युगादिजिनवक्त्रे-
न्दुभुजितस्य निरन्तरः । रवः पुण्यार्णवस्येव रराज मुरजध्वनीः ॥ ५ ॥ अप्यादिनाथमुखतः कृषन्ती शुभदां दृशः ।
बभूव भाग्यमूर्तेव नर्तकी भावनर्तनैः ॥६॥ संक्षिपन्ती चतस्रोऽपि संसारस्य गतीरिव । उद्धृतांह्रिकरद्वन्द्वा वर्तनैर्नर्तकी
बभौ ॥ ७ ॥ मसरप्रस्वरसुधाशीनायोगतिर्दुर्मलः । अवादयत्तदा वंशं सुस्वं सुरवांशिकः ॥ ८ ॥ यद्गतुम्बाभवत्तत्र
वीणा मधुरवादिनी । उत्तारयितुकामेव श्रोतॄन्संसृतिवाहिनीम्॥९॥सुधाम्बुधिमिवोद्भ्रान्तं गीतमुद्राव्य भाविनाम् । ह्रियेव
विरसं प्राप संसारक्षारसागरः॥१०॥शतदीपसहस्राभकरव्यतिकरः स्वयम् । धर्मेशस्याभवत्तत्रारात्रिकं रात्रिकण्टकः॥११॥
इति प्रेक्षणमापूर्य प्रणम्यादिजिनं मुदा । यत्र कृतविहारं श्रीवासुपूज्यं हरिः सुरैः॥१२॥ग्रामसतिमवृक्षाणि श्रमणाः स्वा-
मिनोऽभवन् । गणाः महस्रमूर्तित्वं तपःपुंसः कला इव॥१३॥लक्षसंख्यैरिव गुणैर्गुणिना जगदीशितुः । एका श्रमैव मूर्तेव

साध्वीलक्षमजायत ॥ १४ ॥ शतद्वयीयुतं जज्ञे सहस्रं पूर्वशालिनाम् । चतुःशतीयुता पञ्चसहस्र्यवधिवेदिनाम् ॥१५॥
मनःपर्यायवर्याणां षट्सहस्री शताधिका । षट्सहस्राणि साधूनां केवलज्ञानशालिनाम् ॥१६॥ लब्धवैक्रियलब्धीनां शत
शतगुणीकृतम् । वादलब्धिमतां सप्तचत्वारिंशाच्छतानि च ॥ १७ ॥ लक्षद्वयं श्रावकाणां दशपञ्चसहस्रयुक् । चतुर्लक्षी
सषट्त्रिंशत्सहस्राः श्राविका इति॥१८॥वर्षलक्षाश्चतुःपञ्चाशतं मासेन वर्जितम् । आ केवलाद्विहरतः परिवारः प्रभोरभूत्
॥ १९ ॥ ततस्त्रिजगतः स्वामी बोधयन्वसुधां क्रमात् । मुक्त्या संकेतितमिव प्राप चम्पापुरीवनम् ॥२०॥षड्भिर्मुनिशतैः
सार्कं पादपोपगम श्रितः । पर्यङ्कासनमासीनः प्रपेदेऽनशनं प्रभुः ॥ २१ ॥ इति प्रज्ञाय दूतेभ्यः कति तत्राशु नाययुः ।
दुःखिनः पादचारेण प्रत्यासन्ना महीभुजः ॥ २२ ॥ अस्मत्प्रभूणां संदेहमिदानीं हन्त हन्तु कः । इतीवेन्द्रासनैः प्रापि
कम्पस्त्यक्ताशने जिने ॥ २३ ॥ अवधिज्ञानविज्ञातपीठकम्पनकारणाः । चतुःषष्टिरिहाजग्मुर्वासवा देवताधृताः ॥ २४ ॥
अथेन्द्राश्च नरेन्द्राश्च प्रभुं दत्तप्रदक्षिणाः । नत्वा तस्थुर्महाशोककीलिता इव निश्चलाः ॥२५॥ अन्ते मासस्य चन्द्रेऽथो
वराभद्रपदास्थिते । शुक्लाषाढचतुर्दश्यां स्वामी मोक्षोन्मुखोऽजनि ॥ २६ ॥ बादरे काययोगेऽथ स्थित्वा स्थिरतरासनः ।
स्वामी रुरोध वाक्चित्तयोगौ योगेन बादरौ ॥२७॥ काययोगेन सूक्ष्मेण काययोगं स बादरम् । रुध्वा रुरोध वाक्चि-
त्तयोगौ सूक्ष्मौ जगद्गुरुः ॥२८॥ तार्तीयीकमिदं शुक्लध्यानं सूक्ष्मक्रियाह्वयम् । प्रभुः क्रमादमु सूक्ष्मकाययोगमसाधयत्
॥२९॥ अथोच्छिन्नक्रियं तुर्यं शुक्लध्यानमशिश्रियत् । पञ्चह्रस्वाक्षरोच्चारसमानसमयं विभुः ॥३०॥ क्षीणकर्मार्थकर्तव्यो
विलीनक्लेशसततिः । अनन्तदर्शनज्ञानवीर्यानन्दो जगद्गुरुः ॥३१॥ ऊर्ध्वगो बन्धनिध्वंसादेरण्डफलबीजवत् । ऋजुनैव

सह शिष्यैः सार्धं लोकाग्रमासदत् ॥३२॥ युग्मम् ॥ स्वामिना नारकेभ्योऽपि ददतानन्दवर्णिकाम् । महानन्दस्य बुभुजे स्वयं नरकघ्नी तदा ॥३३॥ मोहचेष्टामपि तदाक्रन्दं संक्रन्दनादयः । विभोर्वियोगे कुर्वन्तो न शोच्यत्वदशामगुः ॥३४॥ जगद्बन्धुः कृपासिन्धुः स्वामिन्क्वयातोऽसि किं ततः । दत्त्वास्मभ्यं महादुःखं महानन्दं श्रितः स्वयम् ॥३५॥ स्वर्गस्यापि नमस्यत्वं या निन्ये नाथ भूस्त्वया । विश्वाश्रुवारिधौ मज्जत्तु त्वद्वियोगेऽद्य सेच्छति ॥३६॥ धिगस्मान्रेणवोऽप्येते भान्ति यन्नमः प्रभो । अनुयान्तीव येऽद्य त्वामसश्निश्वासपीडिताः ॥ ३७ ॥ त्वद्वाचा दुग्धवर्षिण्या जनन्येव वियोगिनः । प्रतिपालस्य जगतो गतिः काद्य भविष्यति ॥३८॥ धर्मदुग्धाब्धिचन्द्रेण केवलज्ञानभानुना । त्वया विना जगन्मोहध्वान्तात्कस्त्रायतां प्रभो ॥ ३९ ॥ हहा महातमतमा विश्वतारक नारकाः । प्रमोदं कलयामासुर्ये तनुं त्यजति त्वयि ॥ ४० ॥ इत्यादिवाग्भिर्दलयन्हृदयान्यश्मनामपि । सुहृदेव क्रन्दञ्शक्रः स्वहृदैव व्यबोध्यत ॥ ४१ ॥ सप्तभिः कुलकम्॥ आक्रन्दतोऽथ भूत्वाथ स्वयोध्य विबुधाधिपः । तत्कालकृत्ये त्रिदशानादिदेशाभियोगिकान् ॥४२॥ वनादानीय गोशीर्षचन्दनैधांसि नन्दनात् । प्राच्यां ककुभि तैर्वृत्ता नाथाय रचिता चिता ॥ ४३ ॥ ऐक्ष्वाकवेभ्यः साधुभ्यस्त्रिकोणा दक्षिणादिशि । पश्चिमायां चतुःकोणान्येभ्यस्तु विहिता चिता ॥ ४४ ॥ स्नानं क्षीराम्बुधेर्नीरैर्लेपं गोशीर्षचन्दनैः । शक्र स्वामितनोश्चक्रेऽन्येषामन्येऽथ नाकिनः ॥ ४५ ॥ देवदूष्येण देवेन्द्रो हेमाङ्गनाभ्यवासयत् । जिनाङ्गं सुमनोरत्नभूषणैरप्यभूषयत् ॥४६॥ मूर्तिमद्भिः प्रभोर्भक्तित्रैविध्यमुकुलैरिव । रत्नैश्च रचयांचक्रुस्त्रिदशाः शिबिकात्रयम् ॥ ४७ ॥ नत्वा कृत्वा प्रभुं मूर्ध्नि शिबिकायां हरिर्न्यधात् । अन्यास्तिस्रो विकयोः साधूंस्तुल्यवक्षिपुः सुराः ॥४८॥ महत्त्वाणां तीर्थेशशिबिकामुद्गो हरिः ।

ऊहे सुरसहस्राभ्यां तचान्यच्छिबिकाद्वयम् ॥ ४९ ॥ सुरस्त्रिषु ददानासु परितस्तालरासकान् । पुरः सुपर्वगन्धर्वगणे
तूर्यत्रयोद्यते ॥ ५० ॥ कुर्वत्सु त्रिदशेष्वग्रे चीरतोरणधोरणीः । यक्षकर्दमविच्छर्दान्पुरः कुर्वत्सु केषुचित् ॥ ५१ ॥
शिबिकां परि वर्षत्सु केषुचिद्विदधानेषु धूपोत्क्षेपं पुरः पुरः । विभोरुपरि बिभ्रत्सु शुभ्रच्छत्राणि केषुचित् ॥५२॥
नानाविधां शुचश्चेष्टां स्पष्टयत्सु च केषुचित् । हरिःचित्कुसुमस्रजः । हन्त्रीं निःशेषदोषाणां शेषां गृह्णत्सु केषुचित्॥५३॥
पञ्चभिः कुलकम्॥चितायामुचितज्ञोथ पूर्वस्यां पूर्वदिक्पतिः । न्यधात्प्रभुतनुं
सुराश्च शिबिकात्रयं निन्युश्चिताः प्रति॥५४॥
साधूनन्ये देवाश्चिताद्वये ॥५५॥ अग्निरग्निकुमारैद्रागवायुर्वायुकुमारकैः । चितासु चिक्षिपे पूरः कर्पूराणां सुरैः परैः॥५६॥
अभ्रंलिहमहाकीलाचक्रवालेन
चितात्रयस्य तस्योच्चैः प्रसृता धूमवल्लयः । दधुः सदुःखद्योमुक्तवेणिपाशत्रयोपमाम् ॥५७॥
चिता व्यध्यापयन्मेघ-
ताश्रिताः॥मूर्ता लोकत्रयीशोककृशानव इवाज्वलन्॥५८॥दग्धेषु वह्निकीलाभिरस्थिभ्योऽन्येषु धातुषु॥
कुमाराः क्षीरधेर्जलैः॥५९॥अधिमाणवकस्तम्भं वृत्तवज्रसमुद्गके । न्यस्य पूजयितुं स्वस्य जयमङ्गलहेतवे॥६०॥अथोपरित-
नीं शक्रः श्रेयोबीजमिवाग्रहीत् । जिनेन्दोर्दक्षिणां दंष्ट्रामीशानेन्द्रस्त्वदक्षिणाम्॥६१॥युग्मम्॥जगृहेऽधस्तनीं दंष्ट्रामवामां
चमरेश्वरः । बलिस्तु वामामन्ये तु शक्रा दन्तान्यथोचितम्॥६२॥ अगृह्णन्कीकसकणान्सुपर्वाणः परे प्रभोः । भस्मलेशा-
न्नरेशास्तद्भूरेणूंश्चापरे नराः ॥६३॥ रेणूनां ग्रहणेनैव मर्त्यैः खाते कृतेऽद्भुते । रत्नस्तूपं व्यधुः शक्राश्चितास्थाने जिने-
शितुः ॥६४॥ कौमारेऽष्टादशाब्दानां लक्षाण्यथ विभोर्व्रते । चतुःपञ्चाशदित्यायुर्द्वासप्तत्यब्दलक्षभृत् ॥ ६५ ॥ श्रेयांस-
निर्वृतेरासीद्वासुपूज्यस्य निर्वृतिः । सागरेषु व्यतीतेषु चतुःपञ्चाशति प्रभोः ॥ ६६ ॥ इति प्रशस्तिमालिख्य रत्नस्तूपे

पया शिप्यैः साकं लोकाग्रमामदत् ॥३२॥ युग्मम् ॥ स्वामिना नारकेभ्योऽपि ददतानन्दवर्णिकाम् । महानन्दस्य बुभुजे
स्वर्ग नरकली तदा ॥३३॥ मोहचेष्टामपि तदाक्रन्दं सक्रन्दनादयः । विभोर्वियोगे कुर्वन्तो न शोच्यस्वदशामगुः॥३४॥
जगद्गुः कृपासिन्धुः स्वामिन्त्यानोऽसि किं ततः । दत्त्वासम्यं महादुःखं महानन्दं श्रितः स्वयम् ॥३५॥ स्वर्गस्यापि
नमस्तत्य या निन्ये नाथ भूस्त्वया । निश्वाश्रुवारिभिर्मद्भुं त्वद्वियोगेऽद्य सेच्छति॥३६॥धिगस्मान्रेणवोऽप्येते भान्ति
पन्यतमाः प्रभो । अनुयान्तीव येऽद्य त्वामसन्निश्वासपीडिताः ॥ ३७ ॥ त्वद्वाचा दुग्धवर्षिण्या जनन्येव वियोगिनः ।
अतिपाल्यस्य जगतो गतिः कास्य भविष्यति ॥३८॥ धर्मदुग्धाब्धिचन्द्रेण केवलज्ञानभानुना । त्वया विना जगन्मोहध्वा-
न्तान्धत्राणतां प्रभो ॥ ३९ ॥ इत्वा महाघमतमा विश्वतारक नारकाः । प्रमोदं कलयामासुर्ये तन्नुं त्यजति त्वयि ॥ ४० ॥
इत्यादिवाग्भिर्दलयन्हृदयान्यश्मनामपि । सुरुदेव स्वयं छकः स्वहृदैव व्यबोध्यत ॥ ४१ ॥ सप्तभिः कुलकम्॥ आक्रन्द-
तोऽथ भूनाथात्मनोऽप्य विबुधाधिपः। तत्कालकृत्ये त्रिदशानादिदेशाभियोगिकान्॥४२॥वनादानीय गोशीर्षचन्दनैधांसि
नन्दनात् । पूर्वस्यां ककुभि तैर्वृत्ता नाथाय रचिता चिता ॥ ४३ ॥ ऐक्ष्वाकवेभ्यः साधुभ्यस्त्रिकोणा दक्षिणादिशि ।
पश्चिमायां चतुःकोणान्येभ्यस्तु विहिता चिता ॥ ४४ ॥ स्नानं क्षीराम्बुधेर्नीरैर्लेपं गोशीर्षचन्दनैः । शक्र स्वामितनोश्चक्रे-
ऽन्येषामन्येऽथ नाकिनः ॥ ४५ ॥ देवदूष्येण देवेन्द्रो ऽसाङ्गनाथ्यवासयत् । जिनाङ्गं सुमनोरत्नभूषणैरप्यभूषयत् ॥४६॥
मूर्तिमद्भिः प्रभोर्भक्तिश्चैविप्यश्रुभिरिव । रत्नैश्च रत्नयांचकुस्त्रिदशाः शिबिकात्रयम् ॥ ४७ ॥ नत्वा कृत्वा प्रभुं मूर्ध्नि
शिबिकायां हरिर्न्यधात् । अन्यान्त्रिविकृतेः साधूंस्तत्र चिक्षिपुः सुराः॥४८॥मह्त्रवाणां तीर्थेशशिबिकामुद्दधौ हरिः॥

ऊहे सुरसहस्राभ्यां तचान्यच्छिबिकाद्वयम् ॥ ४९ ॥ सुरस्त्रिषु ददानासु परितस्तालरासकान् । पुरः सुपर्वगन्धर्वगणे
तूर्यत्रयोद्यते ॥ ५० ॥ कुर्वत्सु त्रिदशेष्वग्रे चीरतोरणधोरणीः । यक्षकर्दमविच्छर्दान्पुरः कुर्वत्सु केषुचित ॥ ५१ ॥
केषुचिद्विदधानेषु धूपोत्क्षेप पुरः पुरः । विभोरुपरि बिभ्रत्सु शुभ्रच्छत्राणि केषुचित् ॥६२॥ शिबिकां परि वर्षत्सु केषु-
चित्कुसुमस्रजः । हन्त्रीं निःशेषदोषाणां शेषां गृह्णत्सु केषुचित्॥५३॥नानाविधा शुचश्चेष्टां स्पष्टयत्सु च केषुचित । हरिः
सुराश्च शिबिकानथ निन्युश्चिताः प्रति॥५४॥पञ्चभिः कुलकम्॥चितायामुचितज्ञोथ पूर्वस्यां पूर्वदिक्पतिः । न्यधात्प्रभुतनुं
साधूनन्ये देवाश्चिताद्वये ॥५५॥ अग्निरग्निकुमारैद्राग्वायुर्वायुकुमारकैः । चितासु चिक्षिपे पूरः कर्पूराणां सुरैः परैः॥५६॥
चितात्रयस्य तस्योच्चैः प्रसृता धूमवल्लयः । दधुः सद्यःखद्योमुक्तवेणिपाशत्रयोपमाम् ॥५७॥ अभ्रलिहमहाकीलाचक्रवालेन
ताश्चिता॥मूर्ता लोकत्रयीशोककृशानव इवाज्वलन्॥५८॥दग्धेषु वह्निकीलाभिरस्थिभ्योऽन्येषु धातुषु॥चिताव्यध्यापयन्मेघ-
कुमाराः क्षीरधेर्जलैः॥५९॥अधिमाणवकस्तम्भ वृत्तवज्रसमुद्गके । न्यस्य पूजयितुं स्वस्य जयमङ्गलहेतवे॥६०॥अथोपरित-
नीं शक्रः श्रेयोबीजमिवाग्रहीत् । जिनेन्दोर्दक्षिणां दंष्ट्रामीशानेन्द्रस्त्वदक्षिणाम्॥६१॥युग्मम्॥जगृहेऽधस्तनीं दंष्ट्रामवामां
चमरेश्वरः । वलिस्तु वामामन्ये तु शक्रा दन्तान्यथोचितम्॥६२॥ अगृह्णन्कीकसकणान्सुपर्वाणः परे प्रभोः । भस्मलेशा-
न्नरेशास्तद्भूरेणूंश्चापरे नराः ॥६३॥ रेणूनां ग्रहणेनैव मर्त्यैः खाते कृतेऽद्भुते । रत्नस्तूपं न्यधुः शक्राश्चितास्थाने जिने-
शितुः ॥६४॥ कौमारेऽष्टादशाब्दानां लक्षाण्यथ विभोर्व्रते । चतुःपञ्चाशदित्यायुर्द्वासप्तत्यब्दलक्ष्यभूत् ॥ ६५ ॥ श्रेयांस-
निर्वृतेरासीद्वासुपूज्यस्य निर्वृतिः । सागरेषु व्यतीतेषु चतुःपञ्चाशति प्रभोः ॥ ६६ ॥ इति प्रशस्तिमालिख्य रत्नस्तूपे

जगतीतः । येतुर्निर्वाणकल्याणकारिणः परिपाणयः ॥ ६७ ॥ त्रिभिर्विशेषकम् ॥ लब्धिर्महोदयपदस्य बभूव भर्तु- र्ग्युद्गमहिमदमंमदपूरपूर्णाः । नन्दीश्वरे ध्रुवजिनेश्वरमन्दिरेषु, यात्रां पवित्ररुचयोऽष्टदिनानि कृत्वा ॥६८॥ श्रीवासु- पूज्यचरितं परिपूर्णमेतदाणादनं सततमन्तरनुसरन्तः । रोमाञ्चरम्यमहसः सह सर्वदेवैः, स्थानं ययुर्निजनिजं जयिनः सुरेन्द्राः ॥ ६९ ॥ युग्मम् ॥

इति दण्डाधिपतिश्रीमदाणादनसमभ्यर्थितश्रीविजयसिंहसूरिशिष्यश्रीवर्धमानसूरिविरचिते
श्रीवासुपूज्यचरित आणादनाङ्के महाकाव्ये महोदयलब्धिवर्णनो नाम चतुर्थः सर्गः ॥

श्रीनागेन्द्रमुनीन्द्रगच्छतिलकः श्रीवीरसूरिर्बभौ यस्माद्योगमवाप्य मण्डलपतिर्जज्ञे यतिश्चिरम् । तच्छिष्यः परमार्थवंश- विशदः श्रीवर्धमानप्रभु–स्तत्पट्टोदयपर्वतैकतरणिः श्रीरामसूरिस्ततः ॥ १ ॥ चन्द्रः कुवलयोद्बोधे चन्द्रसूरिरभूदथ । ततः शमसुधाम्भोधिर्देवसूरिर्मुनीश्वरः ॥२॥ बभूवाभयदेवाख्यः सूरिर्भूरिगुणस्ततः । श्रीहेमसूरिरित्याख्यां दधानश्चो मुमुजा ममम् ॥३॥ श्रीमान्धनेश्वरः सूरिरथाजनि मुनिप्रभुः । रूपे वचसि च प्राप जयपत्रं जनेषु यः ॥४॥ गुरुर्विजय- सिंहोऽनूत्पक्षक निपमेन्दकम् । मर्वत्र स्वमरस्यन्त्या चिठअनमनोऽम्बुधी॥५॥ निस्तन्द्रोऽजनि देवेन्द्रसूरिर्वन्मुखमण्डपे । विन्लास कवित्वश्रीः साकं वरतृत्यसंपदा॥६॥सूरेर्विजयसिंहस्य शिष्यो गुर्वाज्ञया ततः । सूरिः श्रीवर्धमानोऽस्मिन्गच्छे पामिकतां दधौ ॥ ७ ॥ उदयाद्रिरिव श्रीमानस्य नन्याद्दुदयप्रभुः । यद्योदयी वचोभानुर्भव्याम्भोजानि भासयेत् ॥ ८ ॥ अस्मिन्गुरुक्रमे भक्तः श्रीगङ्ककुलेऽभवत् । पापूर्यां तत्तुक्रमो धर्माम्बुधिविधुः सुधीः ॥९॥ योऽकारयन्महावीरचैत्यं

संगमखेटके। तस्मै हलशतक्षोणीं चतुर्वाटीयुतां ददौ॥१०॥तद्भूरभूदघोन्मर्दी कपर्दी येन कारितम्। चैत्यं युगादिदेवस्य
ग्रामे वटसराभिधे ॥ ११ ॥ तत्पुत्र आम्रदेवोऽभूदाम्रवन्मङ्गलास्पदम्। राणुका गेहिनी तस्य पुण्यश्रीरिव देहिनी ॥१२॥
तत्सूनुर्देवचन्द्रोऽभून्निस्तन्द्रो धर्मकर्मणि। पद्मिनी पद्मिनीवास्य प्रिया शीलश्रियो गृहम् ॥१३॥ चत्वारो जज्ञिरे विश्व
नन्दना नन्दनास्तयोः। भव्यजीवमनःशुद्ध्यै धर्मभेदा इवाङ्गिनः ॥१४॥ तेषु ज्येष्ठोऽजनि श्रीमानम्बडः सचिवाग्रणीः।
अद्वितीयो विवेकेन द्वितीयो जह्णस्ततः ॥ १५ ॥ पश्चादाह्लादनो जातिमण्डनं दण्डनायकः। मन्त्री धर्मधुराधुर्यस्तुर्यः
प्रह्लादनः पुनः ॥ १६ ॥ ज्येष्ठे स्वर्गश्रियं प्राप्ते श्रीमदम्बडमन्त्रिणि। विशेषाद्धर्मधुर्यत्वमाह्लादनसुधीर्दधौ ॥ १७ ॥
यत्कीर्तिव्रततिस्थारापद्रस्थानकसंभवा। न्यायधर्मामृतैः सिक्ता विस्तृता विश्वमण्डपे ॥१८॥ यः श्रीसल्लपुरे वीरप्रासादे
नाभिनन्दनम्। थारापद्रे च नाभेयचैत्ये श्रीपार्श्वनायकम् ॥१९॥ तथा चन्द्रप्रभस्वामिसीमन्धरयुगन्धरान्। अम्बिका-
भारतीमूर्तीर्दिव्यस्फूर्तीर्व्यधापयत् ॥ २० ॥ युग्मम् ॥ नाभीपद्मे यथात्मानं योगी ध्यायत्यहर्निशम्। पद्मकोशे तथा
योऽस्मादिनाथं स्वकारितम् ॥ २१ ॥ ग्रामे वटसरे नाम्नि तथा संगमखेटके। येनोदध्रे समं पूर्वैश्चैत्यद्वन्द्वं जिनान्वितम्
॥ २२ ॥ अणहिल्लपुरे लक्ष्म्यास्तिलकं प्रेयसां निधिः। स्वगुरोर्वसतिर्येनोदध्रे भक्तिशुभात्मना ॥२३॥ लेखयत्यमलज्ञान-
दानभृत्पुस्तकानि यः। अगण्यपुण्यलक्ष्म्याप्त्यै शासनानीव सर्वदा॥२४॥ प्रासादः शुशुभे येनोद्धृतः श्रीवासुपूज्ययुक्।
पत्तनस्य पुरो राज्ञो रत्नवानिव शेखरः ॥ २५ ॥ अमेयं स्पृहयंश्रेयः श्रीमदाह्लादनो गुरुम्। श्रीवर्धमानसूरिं स भक्त्या-
भ्यर्थितवानिति॥२६॥जीर्णोद्धार इहाणहिल्लनगरे श्रीवासुपूज्यप्रभोः, प्रासादस्य मया भवद्वचनतः स्वश्रेयसे कारितः।

नृपं तपरिनम्य पुण्यवचनां कुर्वीत जीर्णोद्धृतिं, कृत्येऽस्मिन्निपुणा यतो गणधराः स्युः सूत्रधारा ध्रुवम् ॥२७॥ ततोऽसौ
निधिनिधिनिर्मंचे (१२९९) विक्रमवत्सरे। आचार्यश्चरितं चक्रे वासुपूज्यविभोरिदम् ॥२८॥ चतुरा वाचयन्त्वेतच्छ्रद्धा
व्याख्यां नयन्त्वपि। शब्दप्रमाणसाहित्यागमज्ञाः शोधयन्तु च ॥२९॥ यावत्पूर्वाङ्गणेऽस्मिन्नसमतमतमोगोमयालेपनार्द्रे,
सायंसंध्यापुरन्ध्री स्फुरदुडुकुसुमे मुञ्चतीन्दुप्रदीपम्। प्रातःश्रीः सांध्यरागप्रसमरघुसृणे भानुकुम्भं च तुष्ट्यै, धर्मार्थी-
नास्य तावज्जिनचरितमिदं मर्त्यलोके मुदे स्तात् ॥३०॥ सर्वाक्षरगणनायां जयति श्रीवासुपूज्यचरितमिदम्। वेदनिधि-
वेदबाणा [५४९४] नीताङ्कग्रन्थसंपूर्णम् ॥३१॥

॥ इति श्रीवासुपूज्यचरित्रं समाप्तम् ॥



